## शब्दरत्नम् ।

न च "आद्यन्तौ टकितौ (पा०सू०१।१।४६ ) इत्यादौ यथासङ्ख्यमन्वयेऽपि प्रथमतः साहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयमात्रेण सहविवक्षामाश्रित्य यथा द्वन्द्वसाधुत्वं तथेहापि प्रथमतो लकारो हल्पदवाच्यश्चेदिति सामान्यतो बोधं कल्पितमादाय द्वन्द्वसाधुत्वं, ततो

## भैरवी ।

लिट्यादिश्यद्" इति संहितापाठेन द्विल्कारको निर्देशः, एकस्य लकारस्य संयोगान्तलोप इति प्रतिपादितमन्यत्र, तदुपपत्तये "संयोगान्तस्य" इति सूत्रे सम्बध्यमानमपि झल्ग्रहणं वाक्यभेदेन सम्बध्यते, तेन क्वचिदझलोऽपि लोपो भविष्यति । अत एव "अमो मश्" इति सूत्रस्यशकारप्रत्याख्यानपरभाष्यस्याप्युपपत्तिः । तत्र हि—शकाराभावे मकारस्य मकारादेशे प्रयोजनं नास्तीति सर्वादेशो भविष्यतीति दूषणे दत्ते मकारस्य मकारादेशोऽनुस्वारबाधनार्थो भविष्यतीति दूषणे परेण दत्ते एवन्तर्हि द्विमकारको निर्देशः करिष्यते इत्युक्तम् । अत्र द्विमकारक इति प्रतीकमुपादाय "एकस्य मकारस्य संयोगान्तलोपः करिष्यते" इति कैयटेनोक्तम् । एवञ्च न लकारस्य संयोगान्तलोपानुपपत्तिरित्यत आह मूले—विवक्षेति । अयं यत्न इति । हल् च ल् चेति द्वन्द्वकल्पनारूपो यत्न इत्यर्थः । अस्यां चावस्थायाम्—हल्पदार्थाज्ञानावस्थायाम् ।

सहविवक्षाया असम्भवादभिधानमसङ्गतमित्याशयिकामाशङ्कां निरस्यति—नचेत्यादिना । यथासङ्ख्यमन्वयेऽपीति ।अस्य लक्ष्यसंस्कारवेलायामित्यादिः । साहित्यावच्छिन्न इति । आद्यन्तसमूहे साहित्यावच्छिन्नस्य टित्किसमूहस्य अन्वयः । समानविभक्तिकतया अभेदान्वयः । वक्ष्यमाणरीत्या इतरेतरयोगेऽपि समूहस्य विशेष्यत्वमिति भावः । हल्पदवाच्यश्चेति । यथा अज्ञं प्रति 'नागरं भक्षय' इत्युक्ते नागरपदवाच्यः कश्चन पदार्थः स्यादिति सामान्यतो बोधः प्रथमतो जायते, ततो नागरपदवाच्यः क इति विशेषजिज्ञासा भवति तथेति । कल्पितमिति । सूत्रप्रणयनान्यथानुपपत्त्या कल्पितमित्यर्थः । एतेन सहविवक्षासम्भवो दर्शितः । ततः—सामान्य-

## भावप्रकाशः ।

*स्याप्यवमेवार्थः । कैयटस्तुचिन्त्य एवेति स्पष्टमन्यत्रेति भावः । लघु—लघीयः । ननु मूले द्वन्द्वमयोक्तुल-*
दमम्भव उक्तः, स चायुक्त इति शङ्कनकृदादिराह—नचेति । आदिना "तस्थस्थमिपाम्" इत्यादिसङ्ग्रहः । अन्वयेऽपीति । लक्ष्यसंस्कारकवाक्यार्थबोधवेलायामिति शेषः । तथा च तथान्वयबलत्त्या सम्भवादत्र द्वन्द्व इति भावः । प्रथमत—उक्तबोधात्प्राक्, एवमग्रेऽपि । इतरेतरद्वन्द्वे साहित्यं विशेषणमिति तन्मतेनाह—साहित्यावच्छिन्न इति । मुख्यमते तु साहित्ये साहित्यान्वयेति बोध्यम् । अन्वयेति । नामार्थयोरिति व्युत्पत्त्या कल्पितेनाभेदान्वयमात्रेणेत्यर्थः । मात्रपदेनान्वयस्य लक्ष्यासंस्कारकस्य कल्पने तस्या न वास्तवत्वमिति ध्वनयति पूर्वपक्षी । अस्य सहविवक्षात्वे हेतुत्वेनान्वयः । एवञ्च तदानीं वक्तुः सहितबोधेच्छायाः सत्त्वं श्रोतुरपि तथैव ज्ञानद्वयमिति भावः । इहापीति । हलन्त्यमित्यत्रापीत्यर्थः । यद्यपि हल् च ल् चेत्येव द्वन्द्ववाक्यप्रयोगस्तथापि पाठक्रमादर्थक्रमो बलीयानित्याह—लकार इति । अस्य बोधस्य द्वन्द्वसाधुत्वाद्यर्थत्वात्तत्र चानुपयुक्तत्वाच्चान्यत्वनिवेशः । एतत्रान्वयसूचनादेरदोषेदः । न च "सदायरिमाषम्" इत्यादिवदिति भावः । सामान्य इति । हल्पदवाच्यत्वेन स कश्चिदित्यर्थः । हलिति सुबन्तश्रवणेन तत्र पदार्थग्रहे पद्यत इति व्युत्पत्त्या सामान्यतोऽर्थधीहेतुत्वस्य ग्रहे तुल्यवित्तिवेद्यतया तद्वाच्यत्वस्याप्यर्थमात्रे ग्रह इति भावः । ननु शक्तिग्रहस्य व्यवहाराधीनत्वेनैव तदभावात्कथमेतदत आह—कल्पितमिति । सूत्रप्रणयनानुपपत्त्या । सहेत्यादिः, अनेनावास्तवत्वं तस्याहो ध्वनितम् । एवञ्च हल्पदार्थज्ञानस्य प्रागुभयोरपि सत्त्वाच्चादृशसहविवक्षायाः सत्त्वेनात्र द्वन्द्वः सुलभ इति भावः । द्वन्द्वसाधुत्वं तत् । अपिना हल्पदार्थसमुच्चयः । नन्वेवमस्य वैयर्थ्यापत्तिरेवाहो इति दृष्टान्तवैषम्यमत आह—तत इति । उक्तरीत्या द्वन्द्वसाधनोत्तरमित्यर्थः । विशेषेति । "नहि निर्विशेषं सामान्यं

## सरला ।

क्यभेदेन संयोगान्तं यत्पदं तदन्तस्य लोपः स्यात्, झलन्तो यः संयोगः तदन्तं यत्पदं तदन्तस्य लोपः स्या-

## शब्दरत्नम् ।

विशेषजिज्ञासायाम् "आदिरन्त्येन" इत्येकवाक्यतया विशेषतो वाक्यार्थो लक्ष्यसंस्कारकः । किं च, सहविवक्षा—सह वक्तुं वक्तुरिच्छा, सा च सूत्रप्रणयनानुपपत्त्या पाणिनेस्ततः पूर्वमपि हल्पदार्थज्ञानादक्षतैव, बोद्धृबोधस्तु क्रमेणैवेति वाच्यम् , "आद्यन्तौ" ( पा० सू० १।१।४६ ) इत्यादौ यथासङ्ख्यसूत्रारम्भसामर्थ्येन तथा साधुत्वाङ्गीकारेऽप्यन्यप्रकारेण

## भैरवी ।

यो बोधानन्तरम् । विशेषजिज्ञासायामिति । निर्विशेषस्य सामान्यस्याभावेन कारणस्य सामान्यज्ञानस्य वृत्तत्वाद्विशेषजिज्ञासा भवत्येवेति भावः । ननु पृथग्वाक्यार्थबोधे किं साधकमत आह—आदिरन्त्येनेति । विशेषतः—हल्त्वादिना विशेषरूपेण । वाक्यार्थः—वाक्यार्थबोधः । एतेन सूत्रस्य सार्थक्यं द्वन्द्वस्य चोपपत्तिः कृता । श्रोतुर्हल्पदार्थस्य ज्ञानाभावेऽपि वक्तुःपाणिनेस्तज्ज्ञानमस्त्येव । अन्यथा वाक्यप्रयोगमेव न कुर्यात्, यत्नं प्रति इच्छायाः कारणत्वात्सा सहविवक्षा सम्भवति । ततः पूर्वम्—आदिरन्त्येनेत्येतत्सूत्रप्रणयनात्प्राक् । हल्पदार्थज्ञानात्—हकारादिलकारान्तस्य हल्पदार्थत्वेन ज्ञानात् । क्रमेण—प्राग्लकारस्येत्त्वेन ज्ञानं ततो हल्पदार्थत्वेन ज्ञानं ततो हल्पदवाच्य इदिति ज्ञानमिति क्रमेण । समाधत्ते—आद्यन्तावित्यादि । सूत्रारम्भसामर्थ्येनेति । यत्र न द्वन्द्वस्तत्र, यथा लोके—

"शत्रु मित्रं विपत्तिं च जय रञ्जय भञ्जय" ।

## भावप्रकाशः ।

भवति" इति न्यायेन सामान्यज्ञानस्य विशेषजिज्ञासाहेतुत्वात् । अन्यथा वैयर्थ्यमेवास्य स्यादिति भावः । तत्रेष्टबोधाय गमकमाह—आदिरिति । उक्तबोधेनेत्पदार्थज्ञानस्य सत्त्वेनास्यार्थज्ञानस्य सत्त्वादिति भावः । विशेषत इति । हादिहान्तवर्णानां हल्त्वेनेत्यर्थः । वाक्यार्थः—तद्बोध आर्थिकः, पुनस्तस्यानुपयोगात्तावन्मात्रस्यैव श्रवणाच्च । संस्कारक इति । एवञ्च द्वन्द्वोपपत्तिर्नास्याश्च वैयर्थ्यं नाप्यन्योन्याश्रय इति भावः । ननु न सहविवक्षा शब्दार्थः, किन्तु वक्तुः सहवक्तुमिच्छा तस्याश्च "आद्यन्तौ" इत्यादौ वक्तुस्तयोः प्रत्येकं ज्ञानेनोभयत्र सत्त्वेनादोषेऽप्यत्र हल्ज्ञानाभावेन तदभावाद् द्वन्द्वाप्राप्तिरिति दृष्टान्तवैषम्यमिष्टासिद्धिश्च, इत्यतः सत्साम्य दृष्टमिष्टसिद्धिमन्यथा प्रतिपादयति—किञ्चेति । वक्ता चास्य शास्त्रस्य पाणिनिरेवेत्याह—सा चेति । तादृगिच्छा चेत्यर्थः । सूत्रेति । "आदिरन्त्येन" इति सूत्रप्रणयनेनेत्यर्थः । यत्तु "हलन्त्यम्" इति सूत्रप्रणयनेनेति व्याचख्यौ । तन्न, तस्य यत्किञ्चिदर्थकत्वेनापि सार्थक्यापत्तेः । ततः पूर्वमपि—उक्तसूत्रार्थबोधात्प्रागपि । हल्पदार्थेति । हादिहान्तानां हल्त्वेनेत्यर्थः । नन्वेवमपि सूत्रवैयर्थ्यं श्रोतुस्तथाज्ञानाभावेनेष्टार्थासिद्धेरत आह—बोद्धृबोध इति । तेषामुक्तसहविवक्षाभावे प्राक् इत्येतज्ज्ञानबोधस्तत आदिरन्त्येनेत्यस्य ततो हलन्त्यमित्यस्येत्येवं क्रमेणेत्यर्थः । एवः सहाभेन्यवच्छेदे । एवञ्चोभयथापि तस्याः सत्त्वेनासम्भवादिति मूलमयुक्तमेवेति तस्य भावः । नन्वेवमपि दृष्टान्तवैषम्यम्, तथाहि, तत्र पाणिनेस्तयोस्तत्तद्रूपेण समुदितरूपेण च ज्ञानं तत्सूत्रार्थबोधःआगत्यैव, तज्ज्ञानस्य सूत्रादसाध्यत्वात् । क्रमेऽन्यत्रान्वयेन तत्सत्त्वाद् द्वन्द्वप्रयोगः साधुरेव । श्रोतुरपि प्राक् तत् एव तत्सत्त्वेन तच्छ्रवणेन तथैव बोधः । न च पाणिनेर्द्वन्द्वविध्येन बोधेऽपि श्रोतुस्तथा बोधाभावादस्य च तज्ज्ञानसम्भारकत्वा सूत्रव्यर्थ्यमेवेति वाच्यम्, यथासङ्ख्यसूत्रबलात्पाणिनस्तथाबोधेनादोषात्, अत्र तु न तथा द्वयोरेतत्सूत्रार्थबोधात्प्राक् तदज्ञानात् तस्य तच्छास्त्रसाध्यत्वात्सामान्यतो ज्ञानकल्पनायां मानाभावाच्च, सूत्रस्य यत्किञ्चिदर्थकतया सिद्धान्तरीत्या वा सार्थक्याच्च । यत्नानुपपत्तिस्तदन्यगमकाभावाच्चेति । अतस्तद्दृष्टान्तेनात्र तत्साधुत्वोपपादनं तन्न्याय्यमुक्तमेवेति गूढाशयेन समाधत्ते—आद्यन्तावित्ति । सूत्रारम्भेति । अत्र शास्त्रेऽसम्भवाल्लोकादौ स्थानात्यलौकिकप्रमाणादेव सिद्धेस्तस्य वैयर्थ्यमिति भावः । तथा—सत्यपीति शेषः । पाणिनेर्यथासङ्ख्यान्वयेऽपीत्यर्थः । अङ्गीकारेऽपीति । तथान्वयेनेत्यादिः । तत्सामर्थ्यात्तथान्वयेऽपि समूहान्वयरूपेणेत्यर्थः । यद्वा, तथा तेन

## सरला ।

दित्यर्थद्वयं क्रियते । अन्त्ययोगकरणसामर्थ्याच्च पूर्वस्य व्याप्तिरिव ज्ञाप्यते । तेन इहस्थले एव पूर्वयोगस्य

शब्दरत्नम् ।

तस्य साधुत्वकल्पने मानाभावात् । किं च, श्रोतॄणां सह बोधो भवत्वितीच्छया सह वक्तु-मिच्छाया एव सहविवक्षात्वेन श्रोतॄणामपि सहबोध एवोचित । तादृशेच्छया तेषा तादृशबोधाजनकस्य द्वन्द्वप्रयोगे च पाणिनेर्भ्रान्तत्वापत्ति । मुकुलनयन पश्येत्यादौ तु न दोष ,

भैरवी ।

इत्यत्र स्थानादिष्वलौकिकप्रमाणेनान्वयबोधो भवति, तथा शास्त्रेऽपि भविष्यतीति यथा-सङ्ख्यसूत्र न तदर्थं, किन्तु द्वन्द्वार्थमेव । लोके यथा द्वन्द्वनिर्देशे यथासङ्ख्य न प्रतीयते तथा शा-स्त्रेऽपि न स्यात् । अत एव "अजाविधनौ देवदत्तयज्ञदत्तावित्युक्ते न ज्ञायते कस्याजाधनं कस्याविधन" इति भाष्ये उक्तम् । अतस्तथाऽन्वयबोधार्थं पूर्वोक्तरीत्या यथासङ्ख्यसूत्रसहायेना-स्तु साधुत्वमिति भाव । अन्यप्रकारेण-श्रोतुर्वक्तुश्च प्रथमत सामान्यत , तत श्रोतु प्रथम-तो हल्त्वेन, ततो हल्पदवाच्यत्वमिति य उक्त प्रकारस्ततोऽन्यप्रकारेण । अयम्भाव —प्रकृते यथासङ्ख्यसूत्रविषयताया अभावाच्छ्रोतुर्द्वन्द्वस्य साधुत्वज्ञानं, तत प्राथमिको बोधश्चान्योन्या-श्रयान्न सम्भवतीति पूर्वमप्युक्तसहविवक्षापदार्थोऽसम्भवदुक्तिक इत्याह-किञ्चेत्यादिना । श्रो-तृसम्बन्धिसहबोधकर्तृकवक्तृसत्तेच्छा सहविवक्षा, सा यदा सम्भवति यदा श्रोतु सह बोध स्यात्, तथाऽत्र तु न सम्भवत्यन्योन्याश्रयादिति सहविवक्षव नास्तीति कल्पनीयम् । ननु पाणिने-स्तादृशी इच्छा कल्प्यतामत आह—तादृशेच्छयेति । भ्रान्तत्वापत्तिरिति । इच्छाम्प्रतीष्टसाधन-ताज्ञानस्य कारणतया श्रोतृसमवेत सहज्ञान मदिष्टसाधनमिति ज्ञानं पूर्वं पाणिने कल्पनी-यम् । श्रोतुस्तु सहज्ञानं न भवतीति पाणिनिसमवेतस्य ज्ञानस्य सहबोधविशेष्यकत्वावच्छि-न्नश्रोतृसमवेतत्वप्रकारकस्य भ्रमात्मकत्वेन पाणिनेर्भ्रान्तत्वापत्तिरित्यर्थ । तादृशबोधाजनकेति सहबोधाजनकस्येत्यर्थ । ननु लोके य पुरुषोऽन्यतरविषयकज्ञानवान् नतूभयविषयकज्ञानवांस्त-म्प्रति 'मुकुलनयनम्पश्य' इति प्रयोगो दृश्यते तथाऽत्रापि भविष्यतीत्यत आह-मुकुलनयनमिति ।

भावप्रकाश ।

प्रकारेण । अयम्भाव —यद्यपि समासत उपस्थितिरेकैव तथापि तत्सूत्रारम्भसामर्थ्येनात्र शास्त्रे लाघवेन द्वन्द्वनिर्देशेऽपि प्रत्येकान्वयबोधतात्पर्येण तथा बोधकपृथग्वाक्यकल्पनया बोधो न तत्र प्राक् । अन्यथा साहित्ये द्वन्द्वविधानात्क्रमाबोधो न स्यात् । एव च तत्सूत्रद्वन्द्वनिर्दिष्टयोस्तथान्वयेनापि द्वन्द्वस्य साधुत्वं बोधयति स्वशास्त्रे । एवञ्च प्राक् तत पदार्थोपस्थितावप्यतात्पर्यविषयत्वान्न समूहान्वयबोधस्तथा तत्परत्वात् । तेन शाके मापन्तौ वर्णानां विप्रकृष्टौ लाघनाधरकृताकृतरागेत्यादौ न द्वन्द्वस्य साधुत्वमिति । अन्यप्रकारेणेति । एतस्य तत्पदवाच्यत्वेनान्यस्य हल्त्वेन ज्ञानमिति रूपेणेत्यर्थ । तस्य—द्वन्द्वस्य । एवमाद्ये दूषणमुक्त्वा स्वदुक्तादिविशेषेऽपि सहविवक्षापदार्थो नवि ध्वनयितुम् "आदिरन्त्येन" इति सूत्रमेव तत्र मानमिति शङ्कां दूरीकर्तुं चापसाधारणम् । द्वितीये तदाह—किञ्च श्रोतॄणामिति । श्रोतृसम्बन्धिसहबोधकर्तृभवनेच्छा हेतुर्वक्तृसम्बन्धिसहदर्शनेच्छाया इत्यर्थ । एवेनोक्तदोषाव्याप्ति । सहविवक्षात्वेन—लक्षणार्थत्वेन । श्रोतृणामपीति । द्वन्द्वप्रयोगेण श्रोतु सहबोधस्यैव वक्तृतात्पर्यविषयत्वस्य निर्णयात् । अन्यथा ता प्रति पर्युं द्वन्द्वप्रयोगो वृथा स्यादिति भाव । अपिर्वक्तृसमुच्चये । सहबोध इति । सहबोध एवेत्यर्थ । एतेन क्रम-सामान्यबोधयोर्व्यावृत्ति । एवञ्च दृश्यते न दोष । अत्र तु अन्योन्याश्रयग्रस्तत्वाद् बाधित स इति भाव । नन्वेवमपि श्रोतुर्हल्पदार्थाज्ञानेन तथा सहबोधासम्भवेनात्र क्रमेणैव बोधोऽस्त्वत आह—तादृशेच्छेति । उक्तरूपेच्छयेत्यर्थं । द्वन्द्वप्रयोगान्यथानुपपत्त्या तस्या आवश्यकत्वादिति भाव । तेषाम्—श्रोतॄणाम् । तादृशबोधेति । हल्पदार्थाज्ञानात्तथा सहबोधाजनकद्वन्द्वमिति शब्दप्रयोगे त्वित्यर्थ । तान्प्रतीति शेष । भ्रान्तत्वेति । श्रोतृनिष्ठहल्पदार्थाज्ञानस्य तस्य ज्ञानेऽज्ञानेपि भ्रान्तत्वापत्तिरित्यर्थं । एतेनादौ विशेषाज्ञा-नात्पाणिने, सामान्यज्ञानम् । किञ्च श्रोतुर्द्वन्द्वोपपत्त्यर्थं क्रमेण बोधाच्चदावश्यक वक्तुस्तथात्वेऽपीत्यपास्तम्,

सरला ।

प्रवृत्तिरिति तत्र वार्तिकैकवाक्यतया यणतिरिक्ते एव अज्झलि तत्प्रवृत्तिरिति । अत एव "ङे प्रथमयोरम्" इत्यत्र

## शब्दरत्नम् ।

उभयवत्त्वेन ज्ञातं प्रत्येव तादृशशब्दप्रयोगात् । तेन रूपेण ज्ञानं भ्रमः प्रमा वेत्यन्यदेतत् । किं च, पाणिनेः पूर्वं हल्पदार्थज्ञानेऽपि तदभिप्रायेण न प्रयोगः । अन्यथा व्याख्यातृपरम्परावगतवक्तृतात्पर्यानुपपत्त्या "लट् स्मे" (पा०सू० ३।२।११८) इति सूत्रस्थकैयटोक्त-

## भैरवी ।

पूर्वपक्त्युक्तसहविवक्षापदार्थमभ्युपगम्यापि दूषणमाह—किञ्च पाणिनेरिति । हल्पदार्थज्ञानेऽपि आदिरन्त्येनेति सूत्रप्रणयनान्यथानुपपत्त्या हल्पदार्थज्ञानेऽपि । तदभिप्रायेण—हल्पदार्थज्ञानतात्पर्येण । न प्रयोगः—न हलिति प्रयोगः । अन्यथा—तादृशतात्पर्यकल्पने । व्याख्यात्रिति । पाणिनिप्रभृतयो ये व्याख्यातारस्तेषां परम्परयाऽवगतं यत्तात्पर्यं तदन्यथानुपपत्त्येति समुदितार्थः । लट् स्म इत्यादिलक्षणाया अनुमानस्य च हेतुसद्भावात् "लट् स्मे" सूत्रे यथा कैयटेन लक्षणोक्ता तथेहापि भविष्यति । "लट् स्मे" इति सूत्रे वार्तिककृता "स्मपुरा भूतमात्रे, न स्मपुराऽनद्यतने" इति वार्तिके पठितम् । तत्र स्मपुरेत्याकारकसूत्राभावादन्यथानुपपत्त्या प्रथमवार्तिके स्मपुराशब्दाभ्यामाद्यन्ताभ्यां 'लट् स्मे' 'अपरोक्षे च' 'न नौ पृष्टप्रतिवचने' 'नन्वोर्विभाषा' 'पुरि लुङ् चास्मे' इति पञ्चसूत्री लक्ष्यत इत्युक्तम् । तत्र लक्षणायामस्मानन्तु यदि लक्षणा न स्यात्तदा प्रथमवार्तिकेन च 'लट् स्मे' 'अपरोक्षे च' 'पुरि लुङ्' इति सूत्रत्रयस्य भूतमात्रे प्रवृत्तिर्बोधिता तस्यैवाद्यतननिषेधप्रतिपादनद्वाराऽनद्यतने विधानप्रतिपादने भूतविशेषे विधानमिति लभ्यते । ततश्च भूतमात्रे इत्यनेन सामान्येन विधानेन विरोधः प्राप्नोति । यदा तु प्रथमवार्तिके लक्षणा तदा पञ्चसूत्र्या भूतमात्रे प्रवृत्तिर्बोधिता । तथा च 'लट् स्मे' 'अपरोक्षे च'

## भावप्रकाशः ।

भ्रान्तत्वापत्तेः । श्रोतुस्तदुपपत्तेरलावश्यकत्वाच्च, ततः कस्यापि सामान्यतोऽबोधाच्चेति दिक् । ननु द्वन्द्वप्रयोगेण श्रोतुः सह बोधस्यैव वक्तृतात्पर्यविषयत्वमित्ययुक्तम्, गुरुलघ्वनं पश्येत्यादावन्यतरज्ञानवतोऽन्यतरस्यैव बोधेन तादृग्वक्तृतात्पर्यविघातादिति खण्डनकारोक्तं गुरुदूषणं खण्डयति—गुरोरिति । दोष इति । द्वन्द्वासाधुत्वरूप इत्यर्थः । उभयज्ञत्वप्रकारकज्ञानविषयश्रोतारं प्रत्येव 'गुरुलघ्वनम्' इत्यादिद्वन्द्वप्रयोगादिति हेत्वर्थः । एवेनान्यतरज्ञत्वेन ज्ञातव्यावृत्तिः । एवञ्च देशाद्रागतस्य तद्दर्शनवतः कस्यचिल्लघुबोधासम्भवेऽपि तादृशस्योद्देश्यस्य श्रोतुः सहबोधस्यैव सत्त्वेन तस्याः सत्त्वात् न तात्पर्यविघातः । भ्रमे तु श्रोतुर्न कस्यापि बोधः । अत्र तु न कश्चिदपि हलः प्रागुभयज्ञ इति विशेषः । अत एव तुः प्रयुक्तः । एतेन पाणिनेर्हल्पदार्थप्रसिद्धेस्तुल्यपदैकक्रियान्वयित्वेन वक्तुमिच्छा सहविवक्षा । वक्ता च स एवेति कुतस्तदसम्भवः । बोद्धॄणां यद्यपि द्वन्द्वघटकहल्पदार्थाज्ञानात् द्वन्द्वार्थबोधो दुर्लभस्तथापि क्लेशज्ञाप्या तेन प्रत्याहारे हल्पदार्थसिद्ध्या तदर्थबोधोपपत्तिः । नहि तेषामप्यादौ तज्ज्ञानमावश्यकमिति नियमोऽस्ति, यतस्तदसम्भवेन द्वन्द्वोऽनुपपन्नः स्यादिति रत्नकारापुक्तमपास्तम् । तत्प्रमाया हेतुत्वे कथमन्यत्र प्रयोगोऽत आह—तेनेति । उभयज्ञत्वेनेत्यर्थः । तथा च भ्रमप्रमासाधारणज्ञानत्वेन हेतुत्वं लोकसिद्धमिति भावः । एवञ्च तदसम्भवादिति उक्तियुक्तं वेति बोध्यम् । ननु नायं सहविवक्षापदार्थः, धानोरिति सूत्राक्षरतोऽलाभात् । अतस्तदुक्तमादृशतामभ्युपेत्याप्यन्ये दूषणमाह—किञ्च पाणिनेरिति । अभ्यन्तं व्याख्यातम् । तदभिप्रायेति । ज्ञातहल्पदार्थतात्पर्येण न हलिति द्वन्द्वप्रयोग इत्यर्थः । अत्र हेतुमाह—अन्यथेत्याद्यापत्तेरित्यन्तेन । अन्यथा—तत्तात्पर्येण तत्प्रयोगाङ्गीकारे । व्याख्यात्रिति । पाणिन्यादयो ये व्याख्यातारस्तेषां या परम्परा शिष्यप्रशिष्यरूपा

## सरला ।

मकारप्रश्लेषपरभाष्यं सगच्छते । एतेन वाक्यभेदात्पूर्वयोगस्याज्झल्यपि प्रवृत्तिरिति प्रत्युक्तेऽपि लकारलोपस्य गुरुमत्त्वेन चिन्त्यमिदमित्यपास्तम् । वस्तुतस्तु व्यत्ययो बहुलं लिङ्याशिष्यङिति लकारप्रश्लेषपरभाष्यप्रामाण्यात् लकारातिरिक्तो यो यण् तदतिरिक्तेऽज्झलि प्रवृत्तिरित्यर्थावस्य वाच्यतया लकारे सयोगान्तलोपस्य गुरुमत्त्वेन चिन्त्यमिदम् ।

मूले सहविवक्षाया असम्भवादिति । एकरूपावच्छिन्नस्यैकरूपावच्छिन्ने एकरूपसंसर्गेणान्वयः

शब्दरत्नम् ।

रीत्या लक्षणया, तन्त्रान्तरीयप्रथमादिव्यवहारेण प्रथमादिपदानामिव शक्त्यनुमानाद्वा ततः श्रोतॄणां बोधसम्भवेनेतरेतराश्रयस्यैवाभावेन तदाशङ्का–लक्ष्येतिवक्तव्यमित्यादिसमाधानपरभाष्यासङ्गत्यापत्तेः । न चैवमजादिव्यवहारस्यापि लक्षणादिनैवोपपत्तौ "आदिरन्त्येन"

भैरवी ।

'पुरि लुङ्' इति सूत्रत्रयस्याद्यतनभूतेऽपि प्रवृत्तिः प्राप्ता, सा द्वितीयवार्तिकेन प्रतिषिध्यते । 'न नौ पृष्टप्रतिवचने' 'नन्वोर्विभाषा' इत्यनयोस्तु भूतमात्रे प्रवृत्तिरिति सिध्यति । एवञ्च तत्र स्वभाष्यप्रघट्टकत्वेन प्रथमवार्तिके लक्षणा यथाऽस्ति तथेहापि हकारादिलकारान्तसूत्रसमुदायघटकान्तसूत्रान्त्ये लक्षणाऽङ्गीकार्या । अन्त्यपदञ्च तादृशे तात्पर्यग्राहकं भविष्यति 'गभीरायां नद्यां घोष' इत्यत्र यथा नद्यामित्यस्य गभीरनदीतीराभिन्नाधिकरणप्रतिपादकत्वे गभीरायामिति तात्पर्यग्राहकं तद्वत् । लक्षणयेति तृतीयान्तस्य बोधसम्भवेनेत्यत्रान्वय' ।

शास्त्या निर्वाहे लक्षणाया अनौचित्यमित्यभिप्रायेणाह—तन्त्रान्तरीयेत्यादि । यथा तन्त्रान्तरे स्वौजस् इति प्रथमा, अमौट्शसिति द्वितीया, इत्यादि उक्तम्, तेनैवात्र शास्त्रे प्रथमाद्वितीयापदार्थमहस्तद्वत् । अनुमानादिति । हल्पदं हकारादिषु शक्तं हकारादिबोधतात्पर्येण

भावप्रकाशः ।

तयाऽवगत ज्ञानं यद्वक्तृतात्पर्यं तदन्यथानुपपत्त्येत्यर्थः । इयञ्च लक्षणाया शक्त्यनुमाने वा हेतुः । ननु तथापि जघन्ये लक्षणेति मीमांसकसिद्धान्तात् तत्रैव विरोधोपस्थितेश्चान्त्यपद एव तस्या औचित्यमत आह—लट् स्मे इति । कैयटोक्तरीत्या तद्वत् । अय भावः—तत्र हि "स्म पुरा भूतमात्रे" "न स्मपुराऽद्यतने" इति वार्तिकद्वय पठितम् । तत्र कैयटः—तत्राद्ये स्मपुराशब्दाभ्यामाद्यन्ताभ्यां "लट् स्मे, अपरोक्षे च, ननौ पृष्टप्रतिवचने, नन्वोर्विभाषा, पुरि लुङ् चास्मे" इति पञ्चसूत्री लक्ष्यते । अन्यथा आद्ये भूतमात्रे स्मविधानस्यैव चाद्यतननिषेधद्वारा तद्विशेषप्रतिपादने तात्पर्येण निषेधादेकत्र "लट् स्मे, अपरोक्षे च, पुरि लुङ् चास्मे" इति सूत्रत्रयविषये एकस्य भूतमात्रविधि–अद्यतननिषेधयोरत्यन्तविरोधादसम्भवदुक्तिकत्वोपपत्तिः । तदयमर्थः- उक्तसूत्रत्रयेणानद्यतने भूते प्रत्ययः, "ननौ पृष्ट" "नन्वोर्विभाषा" इतिसूत्रद्वयेन भूतमात्रे प्रत्ययः, अन्त्ये लक्षणौचित्येऽपि लक्ष्यानुरोधादग्रिमभाष्याचार्य एव सेति । एवमत्राप्याद्यन्ताभ्यां हकारलकाराभ्यामुक्तहेतोर्लक्ष्यानुरोधादन्त्यपदसामानाधिकरण्यानुपपत्त्या च हादयो लक्ष्यन्ते । तदवच्छेदकं च तद्वाच्यवाच्यघटितत्वं तत्तद्वर्णवत्त्वस्य तत्तद्वृत्तित्व वेत्यन्यदेतत् । तथा च स सिद्धान्तो न स्वीक्रियत इति । लक्षणा च शक्त्यनुमानवद्बोधसम्भवे हेतुः । क्वचिदावश्यकत्वेऽप्यनुमित्या निर्वाहे लक्षणा न युक्तेत्याह—तन्त्रान्तरीयेति ।

वस्तुतः शक्त्यभावेन समुदायस्य शक्यसम्बन्धरूपलक्षणाऽसम्भवः । उभयोर्लक्षणाङ्गीकारे तु गौरवमत आह—तन्त्रान्तरीयेति । शास्त्रान्तरीयेत्यर्थः । स्वौजसित्यादि प्रतितन्त्रिकमिति भावः । ननु तात्पर्यानुपपत्तेर्लक्षणाबीजत्वस्य सर्वतन्त्रप्रसिद्धत्वादस्तु तथा मा, शक्तिबीजत्वस्य तु कस्याप्यनभिमतत्वात्कथं तया तदनुमानमत आह—प्रथमादीति । अयम्भावः—यद्यप्येवं तथापि पूर्वव्याकरणेषु प्रतितन्त्रिक संज्ञायाः कृतत्वात्तदनुरोधेनोक्तहेतोः प्रातिपदिकार्थेत्यादिषु प्रथमादिपदाना यथा तत्र शक्तिकल्पनमेवमत्रापि तेषु हादिहान्तास्वरूपेण पठित्वा हल्संज्ञायाः कृतत्वात्तदनुरोधेनोक्तहेतोस्तेषु तस्य तत्कल्पनमिति । ततः– तत्तात्पर्यकहल्शब्दप्रयोगमात्रात् । तदाशङ्का–इतरेतराश्रयाशङ्का । आदिना एकशेषनिर्देशाद्वा सिद्धमित्यस्य परिग्रहः । परेति । एतदुभयपरेत्यर्थः । एवञ्च तत्परिहारार्थं तत्रापि प्राक् तादृश हल्पदार्थज्ञानमाश्रित्य कथञ्चित्सद्विवक्षया द्वन्द्वसाधनप्रयासो विफल आपद्येतेति भावः । एतेन सूत्रमते वर्णवत्प्रसिद्ध एव हल्पदार्थ इति मन्दोक्तमपास्तम् । चैवं–तत्र लक्षणाद्यङ्गीकारे । लक्षणादिनेति । उक्तप्रकारलक्षणादिनेत्यर्थः ।

सरला ।

सहविवक्षा । यथा धवखदिरौ छिन्धीति । अत्र साहित्यावच्छिन्नस्य धवखदिर इत्यस्य एकरूपावच्छिन्नच्छिदधात्वर्थच्छेदने कर्मत्वसंसर्गेणान्वय इति तत्र सहविवक्षा । प्रकृते हल्शब्दस्यार्थज्ञानाभावेन तदर्थस्यैकरूपावच्छिन्नत्वज्ञान, तस्य चैकरूपसंसर्गेण एकरूपावच्छिन्नेऽन्वयज्ञानञ्च दुःशकमिति । कुठारेण धवं

शब्दरत्नम् ।

(पा०सू०१।१।७१) इति सूत्रवैयर्थ्यम्, क्वचिल्लक्षणादिना बोध इति सर्वत्र लक्षणाद्याश्रयणमेवेति नियमाभावात् । "नासूया कर्त्तव्या यत्रानुगमः क्रियते" इति "पङ्क्तिविंशति" (पा०सू०५।१।५९) इति सूत्रे भाष्योक्तेः । तस्मात्करिष्यमाणशक्तिग्रहोपायकपदस्य तदभिप्रायेणाचार्यस्य पूर्वमप्रयोग इत्येव कल्पना ज्यायसी । ध्वनितश्चायमर्थो "नाऽज्झलौ" ( पा० सू० १।१।१० ) इति सूत्रेऽष्टादशानां ग्रहणाभावाय "वर्णानामुपदेशस्तावत्, उप

भैरवी ।

पाणिन्युच्चरितत्वादित्यनुमानादित्यर्थः । एवम्—अनुपदोक्तरीत्या लक्षणाया शक्त्यनुमानस्य चाऽङ्गीकारे । नियमाभावादिति । व्याकरणस्य शक्तिग्राहकत्वसिद्धान्तस्यैवमेवोपपत्तिरिति भावः । नासूयेति । प्रकृतिप्रत्यययोरानन्त्येन शब्दानां साधुत्वज्ञानं न सम्भवति । तत्र केषाञ्चिच्छब्दानां साधुत्वमाचार्येण प्रतिपादितम् "पङ्क्तिविंशति" इत्यादिना । शब्दानामानन्त्यात्सर्वेषां तत्र सम्भवतीति तथा न कृतम् । नह्येतावताऽऽचार्यस्य दोष इति । उपसंहरति-तस्मादिति । करिष्यमाणेति । करिष्यमाणः शक्तिग्रहोपायो यस्य तादृशं यत्पदं तस्य । तदभिप्रायेण—प्राग्ज्ञाताभाभिप्रायेण । आचार्यस्य—पाणिनेः । पूर्वम्—शक्तिग्रहोपायात्पूर्वम् । अस्मिन्नर्थे साधकान्तरमप्याह—ध्वनित इत्यादिना । अस्य भाष्येणापीत्यत्रान्वयः । ग्रहणाभावायेति । अष्टादशे-

भावप्रकाशः ।

मादिना शक्तिसंग्रहः । एवमग्रेऽपि । एवं स्पष्टार्थं वैयर्थ्यपदोत्तरं वा योज्यम् । क्वचित्—इत्यादि । इतिशेषो । सर्वत्र—अनादिपरेष्वपि । तत्र हेतुमाह—नासूयेति । भाष्यकृतो वार्त्तिककृतं प्रत्युक्तिः । तत्र हि "विंशत्यादयः सप्रकृतिप्रत्यया निपात्यन्ते" इत्युक्त्वा तत्र दोषानुक्त्वा "अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिषु"–इत्युक्तम् । तेन पूर्वकल्पस्य दुष्टत्वाद्धाशब्दस्तदर्थं । तत्र प्रकृतिप्रत्यययोरनुगमाभावेऽप्यर्थाभिधानात्ते यथा व्युत्पन्नाः, एवमेतेऽपि सङ्ख्यायाः सङ्ख्येये न स्वभावतः पृथक् प्रयुक्ता द्वयोर्धिवदनेकार्था इति न फलं तस्येति तद्भावः । ततः सूत्र समर्थंयन् भाष्यकृत् 'सहस्रं गवां' 'सहस्रं गावः' इत्यादिप्रयोगदर्शनात्तेषामपि शुक्लादिवद् गुणिनि यौगिकत्वमेव । नहि सङ्ख्यानिरपेक्षसङ्ख्येयबोधकत्वं तेषां, येन स्वदभीष्टत्वं स्यादिति न तद्दृष्टान्तेन सूत्रप्रत्याख्यानसम्भवः । तर्हि तथापि सूत्रमावश्यकमिति शङ्कानिरासायोक्तवान् नासूयेति । प्रकृतिप्रत्यययोरनुगमं विना मन्दबुद्धीनामननुग्रहात् । अननुगमस्य दोषत्वेऽपि नाचार्यस्य [illegible], सर्वशब्दानुगमस्यानन्त्येन कर्तुमशक्यत्वादिकप्रदर्शनार्थमत्र कृतानुगमोऽपि न तस्य स तद्विषयेषु विंशत्यादिष्वर्थविशेषानिश्चयरय स्वप्रज्ञापराधजन्यत्वेन तस्यानपराधत्वादिति तद्भावः । तदाह—भाष्योक्तेरिति । परिष्कृतमुपसंहरति—तस्मादिति । उक्तभाष्यासङ्गतेरित्यर्थः । करिष्येति । करिष्यमाणः, ननु कृतः क्रियमाणोऽकरिष्यमाणो वा शक्तिग्रहस्योपायो यस्य तस्य पदस्येत्यर्थः । तदभिप्रायेणेति । प्राक्ज्ञाताऽर्थाभिप्रायेणेत्यर्थः । पूर्वम्—तादृशशक्तिग्रहोपायज्ञानात्पूर्वम् । एतेन वस्तुनो बोद्धृणामपि न तदनुपपत्तिः, भाविनी इत्यादावर्थप्रसिद्धिमादाय पदार्थद्वयस्यैकबुद्ध्युपारूढत्वमात्रेण तदुपपत्तेरिति रत्नाकरमन्दाद्युक्तमपास्तम् । उक्तेऽर्थे हेत्वन्तरमप्याह—ध्वनित इत्यादिभाष्येणापीत्यन्तेन । अष्टादशानामिति । तदादीनामित्यर्थः । तेनेत्यादिना ग्रहणादिसंग्रहः । अत एवान्तेऽष्टादशादीनामिति वक्ष्यति । उपदेश इति ।

सरला ।

दधि इत्यत्र उदाहरणाय एकरूपसंसर्गेणेति । अत्र सदिर च दिधि इत्यत्र उदाहरणाय एकरूपावच्छिन्नस्येति । एकरूपावच्छिन्न इत्यस्य निवेशात् घ पद सदिर दिधि इत्यादावतिव्याप्तिः ।

[illegible]

तस्य ... य अग्रे करिष्यते

इति ... एव "नाज्झलौ"

नोति भावः ।

१ [illegible] "अत्र सत्र" इति सूत्रे 'अचि' इत्यस्यानुवृत्ते साधकत्वं भव

मध्यगानामिति । आद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आक्षिप्यते; तस्य

शब्दरत्नम् ।

देशोत्तरकालेत्सञ्ज्ञा, इत्सञ्ज्ञोत्तरकालः प्रत्याहारः, प्रत्याहारोत्तरकाला सवर्णसञ्ज्ञा, तदु-त्तरम् "अणुदित्" (पा०सू०१।१।६९)इति सवर्णग्राहकमित्येतेन समुदितेनान्यत्र सवर्णानां ग्रहणं भवति न स्वस्मिन्नापि स्वाङ्गे" इत्येवं वाक्यापरिसमाप्तिप्रतिपादकभाष्येणापि । अन्यथा तत्तच्छास्त्रप्रणयनानुपपत्त्या पाणिनेस्तथाज्ञानस्य पूर्वमपि सत्त्वेनाचार्येण तथा प्रयोगे बोद्धृणामपि क्रमेण तथा बोधे उपपन्ने किं तेन कृतं स्यात्, कथं वा "नाऽऽज्झलौ" (पा०सू०१।१।१०) इत्यत्राष्टादशादीनां ग्रहणवारणे भाष्योक्तं सङ्गतं स्यादिति विभा-व्यताम् । तदाह—तस्मादिति ।

आद्यन्ताभ्यामिति । अवयवत्वेन बोधकाद्यन्तशब्दाभ्यामित्यर्थः । तस्येति ।

भैरवी ।

स्यादि । न स्वस्मिन्—नाण्पदे । स्वाङ्गे—नाज्झलावित्यत्र । वाक्यापरीति । वाक्यस्य-परि-[illegible] पदस्य [illegible] उपदेशा-[illegible] ज्ञानस्य सत्त्वेन तत्तत्सवर्णाभिप्रायेण प्रयोगेणाण्पदेन सवर्णग्रहणं दुर्वारमित्यर्थः । विभाव्यतामिति । द्वन्द्व-वादिनेति शेषः । तदाह—तदेतत्सर्वम्मनसि निधायाह ।

अवयवत्वेनेति । अवयवम्प्यावयविनम्प्रति नित्यसाकाङ्क्षत्वादाक्षेपस्य सम्भवः । तृती-

भावप्रकाशः ।

याद्यनुच्चारणमित्यर्थः । तत्र प्रत्यासत्त्यैवच्छास्त्रप्रवर्त्तकानामिति भावः । उत्तरकालेत्सञ्ज्ञेति । ज्ञातस्य संज्ञा-विधानात्, तदपि तदव्यवधानेन पदार्थोपस्थितिरपि पश्चादिति भावः । प्रत्याहारः—"आदिरन्त्येन" इति सूत्रैकवाक्यतयाऽणादिसंज्ञारूपः । सवर्णसंज्ञा—इहविषयैतत्संज्ञित्वप्रदः । तदुत्तरेति । सवर्णसञ्ज्ञोत्पत्तिनिश्च-योत्तरकालं तत्सूत्रमकारादिभिः स्वसवर्णत्वेन ज्ञातानां ग्रहणं बोधयतीत्यर्थः । एतेनेति । तत्समुद्भुक्ते-नाणुदित्सूत्रेणेत्यर्थः । समूहस्याप्युक्तरीत्या परम्परयोपयोगादिति भावः । अन्यत्र—समुदितपदकान्य "ऋकः सवर्णे" इत्यादौ । विधेयान्यत्रेति शेषः । स्वस्मिन्—अणुदित्सूत्रे । स्वाङ्गे—उपदेशादौ । सवर्णानां ग्रहणं भवतीत्यस्यानुषङ्गः । ग्रहणत्वं चोपकारकत्वेन, तदा तद्वाक्यार्थानिष्पत्तेः । तदाह—वाक्यापरीति । स्वस्वा-ज्ञान्यतरज्ञबोधकाले समुदितवाक्यार्थापरिसमाप्तीत्यर्थः । सवर्णपदार्थनिर्णयं विना तद्ग्रहणबोधनासामर्थ्य-मिति यावत् । तथाच साकाङ्क्षतयाऽर्थवद्वाक्यस्याप्यपरिसमाप्तिरिति भावः । स्फुटीभविष्यति चैतत् । हेतुत्वं विशदयति-अन्यथेति । प्रकृते प्राग्ज्ञातार्थाशयेन प्रयोगाङ्गीकारे इत्यर्थः । "तुल्यास्य—नाऽऽज्झलौ-अणुदित्" इत्यादिशास्त्रप्रणयनान्यथानुपपत्त्या हलपदार्थज्ञानवत्तत्रापि क्रमेण तत्तत्पदार्थज्ञानस्य तत्तत्सूत्रा-र्थबोधात्प्रागपि सत्त्वावश्यकत्वेन तज्ज्ञानस्य तत्तच्छास्त्रासाध्यत्वेन च पाणिनिना हलपदप्रयोगवत् "नाऽऽ-ज्झलौ" इत्यादौ सवर्णाशयेनोक्तन्यायस्य श्रोतॄन्प्रति प्रवृत्तत्वाच्चप्रयोगे कृते तेषामप्युपदेशादिक्रमेण हलपदा-र्थज्ञानवत्तदनुपपत्त्या लक्षणादिना बोधे जाते तन्न्यायबोधकभाष्येण किं कृतमित्यक्षरार्थः । अयम्भावः—तत्र दीर्घेकारेण शस्यापि ग्रहणादच्त्वाद्धल्त्वाच्च शयोः सवर्णसंज्ञानिषेधे 'परश्शतानि' इत्यत्र 'झरो झरि' इति लोपो न स्यादित्याशङ्का निराकर्तुं तन्न्यायाश्रयणम् । पाणिनेस्तथाव्यवहारे तु तयोरुक्तरीत्या निषेध-प्राप्तिस्तदवस्थैव, तन्न्यायस्य श्रोतॄन्प्रति प्रवृत्तत्वेऽपि तं प्रत्यप्रवृत्तत्वात् । एवं च तदाश्रयणं व्यर्थमिति । एवमकारादिभिरष्टादशादीनां ग्रहणेऽकाराद्योरपि मिथो निषेधः स्यादित्याह—कथं वेति । वारणमिति । दीर्घप्लुताकाराभ्यां ह्रस्वेणासावर्ण्ये तु प्रश्लेषादिति स्पष्टमन्यत्र । भाष्योक्तमिति । उक्तन्यायेनेति भावः । विभाव्यताम्—द्वन्द्ववादिभिरिति शेषः । तदाहेति । तत्सर्वं हृदि निधायाहेत्यर्थः ।

तयोः समीपबोधकत्वे पूर्वापरशब्दवदवधिमच्छब्दत्वे वाऽनिष्टसिद्धेरुक्तं मूले—अवयवाभ्यामिति ।

च युगपद्वक्तुं प्रयोगाभावात्तदवयवबोधकत्वेनान्वी सञ्ज्ञा मध्यगेषु विश्राम्यति, न त्वाद्यन्तयो, सञ्ज्ञास्वरूपान्तर्भावेण तयो पारार्थ्यनिर्णयादिति भाव । स्वस्य चेति । "स्वं रूपम्" (पा०सू० १।१।६८) इत्यनुवृत्ते । स्वं रूपं चादेरेव गृह्यते, नान्त्यस्य, 'अन्त्येनेत्यप्रधानतृतीयानिर्देशात् । सर्वनाम्नामुत्सर्गत प्रधानपरामर्शित्वात् ।

शब्दरत्नम् ।

समुदायस्य । तयो पारार्थ्येति । सञ्ज्ञास्वरूपबोधकतया शक्तिग्रहकार्ये एव तयो पारार्थ्यनिर्णयादित्यर्थ । परामर्शित्वादिति । वस्तुतो ज्ञापकादिनाऽन्त्यापि न संज्ञाना भैरवी ।

यार्थ प्रकारता । तयो —आद्यन्तयो । पारार्थ्येति । सज्ञिबोधकत्वनिर्णयात् । संज्ञा हि सज्ञिन बोधयति नतु सज्ञास्वरूपमपि । प्राचामनुरोधेन मूलस्थोक्त व्याख्याय सिद्धान्त

भावप्रकाश ।

तद्बोधकपदाभावादाह—अवयवत्वेनेति । प्रकारत्व तृतीयार्थ । तस्य चैकदेशे बोधे—न्वयो नित्यसाकाङ्क्षत्वात् लोके प्रथमादिरन्तो वेत्युक्तेऽवशिष्टानां किञ्चिदस्तीति नियमेन प्रतीते सह प्रयोगे । परस्मिन्सति यस्मात्पूर्वो नास्ति, पूर्वस्मिन्सति यस्मात्परो नास्ति, तद्बोधकाभ्यामाद्यन्ताभ्यामवयवत्वेन बोधकाभ्यामाद्यन्तशब्दाभ्यामित्यर्थ. समुदायस्येति । आदिमध्यान्तसमूहरूपस्येत्यर्थ । अननावयवा समुदाय इति मूलमप्युक्तसाधकमिति ध्वनितम् । अत एवोद्देश्यत्वविधेयत्वाभ्यामन्वयस्य रूढ्ये तस्यामनुक्तस्यानादानर्थक्यात्तद्विधि न्यायसञ्चार. । एतेनाक्षरसमाम्नाये तथात्वादिदमयुक्तमित्यपास्तम् । उक्तयुक्तेः सिद्धानुशासनत्वाच्छास्य कार्यार्थसंज्ञायास्तत्फलत्वाच्चेति भाव । मौलतृतीयान्तार्थमाह—सहेति । शक्तिग्रहेति । एतेन तत्रानीमनस्वात्सा स्यादित्यपास्तम् । इत्यत्र इति । एतेनाचमन्त्वीत्यादेरिवरेवद्द्वन्द्वेऽपि साहित्यस्य विधेयत्वान्वयान्तर, स्वस्मिन्ननुवृत्तिस्तु नियमशास्त्रवदन्त्यनिवृत्तिताऽर्थिका । आद्यादेरप्ययमेवाशय । अत एव तत्र भेदेनोक्ति । एवञ्च वार्त्तिकान्यरीतिरेव मूलकृद्दिष्टा । अत एव निर्देशादित्युक्तम् । अन्यथा अपथा तत्त्वादन्त्यैव वदेदित्यपास्तम् । अवयवेषु मज्ञाविश्राम्यतीत्येव सिद्ध मध्यमपदयोरनागन्तत्वन स्यात्परे । अन्तारूपसमूहस्यापि अफलत्वेनैवोक्तरीत्या वारणेन न त्वित्यादिनिर्णयान्त्यन्तग्रन्थस्य निष्फलत्वापत्तेश्च । तन्मते तद्विशेषकस्य तत्रासम्भवाच्चेति दिक् । मूले—उत्सर्गत इति ।

दर्शने राजमानहासस्यैशमी तुरङ्गमा ।

इत्यादौ व्यभिचारादिति भाव । यथाकथञ्चित्तस्य पूर्वमुपस्थितौ तस्यापि तेन परामर्श इति तु भाष्यादौ स्पष्टम् । नन्वेवं रीत्या मूले आदिर्मध्यान्त्यवारणेऽप्युक्त, असम्भवाद् वार्त्तिकस्य ज्ञापकत्वेन तेनैव वारणसम्भवाच्च । स्वमित्यस्य तत्रावश्यकत्वेन मूत्रमत्याख्यानामहत्वेश्च । अन्त्यवारणार्थमेनत्क्लेशादीकारेऽपि मध्यानुबन्धवारणाय वार्त्तिकस्यावश्यकतया प्रक्षिप्तेऽपीति न्यायात्प्राबल्याशयेनाह—वस्तुत इत्यादि । ज्ञापकादिनेति । तेनैवेत्यर्थ । अत्र एवोपसहारे तथाकि॰ । यथ च प्रत्याहारेऽन्त्यग्रहणं स्यात्तर्हि 'पचति इत्यादावाद् गुणाद्यप्रसक्ति, अत 'क्ङिति च' इत्यादिज्ञापकाश्रयणमिति भाव । आदिना प्राधान्यश्लोप्यौ सङ्ग्रह । अस्यापि—अन्त्यस्यापि । अपिना मध्यानुबन्धसमुच्चायक । सञ्ज्ञाकार्यमिति । तद्रूप कार्यमित्यर्थ ।

सरला ।

अत्र मूले आद्यन्ताभ्यामवयवाभ्यामित्युक्ते सूत्रे आदि–अन्त्यशब्दयो सत्त्वेऽपि तदवयवयोरसत्त्वेन असाम्भवस्यं माभूदिति विव्रियते—अवयवत्वेनेति । तथा अवयवत्वेन बोधकाद्यन्तशब्दयो सूत्रे सत्त्वेन नासामञ्जस्यमिति भाव । वस्तुतस्तु अवयविनं विना अवयवयोरेव अनुपपत्तिर्नतु तद्बोधकशब्दयोरिति अवयवत्वेन बोधकाद्यन्तशब्दाभ्यामवयविन समुदायस्य आक्षेपेण भवात् तदवस्थमसामञ्जस्यमिति आद्यन्तपदजन्यबोधविषयाभ्यामिति व्याख्येयम् । तथा सूत्रे एव आदिशब्दस्य अन्त्यशब्दस्य च सत्त्वेऽपि तावदवयवयोरपि तत उपस्थितेस्ताभ्यामवयविनस्समुदायस्य आक्षेप इति नोक्तदोषावकाश ।

पारार्थ्यनिर्णयादिति । बोधजनकत्वनिर्णयादित्यर्थ । यो हि बोधजनक स बोधविषयो न भवतीति

## शब्दरत्नम् ।

यम्, आद्यन्तशब्दाभ्यामाद्यन्तघटितसमुदायस्याक्षेपणान्यथासिद्धेस्तयोः प्रापकाया सञ्ज्ञाया प्रकारान्तरेणाशक्यवारणत्वात्। स्वशब्दानुवृत्तश्च न फलम्। भाष्येऽपि एतत्फलितार्थकथनमेव स्वस्य च रूपस्येति। सञ्ज्ञास्वरूपत्व विशिष्टस्यास्तु प्रत्ययः स्वबोध्यत्वं चास्तु को विरोधः। यथा "अच्च घेः" (पा० सू० ७।३।११९) इत्यादौ गुणदर्शनेन घिशब्दस्यापि घिसञ्ज्ञायाद्धर्त्व सद्भव। एवमजादिमध्यमा स्वसञ्ज्ञिघटकाकारादिभिन्नाकारचकारयोरपि प्राप्नोत्येव। किं च, स्वशब्देन ककारान्त्यपरामर्शासम्भवेऽपि विशिष्टपरामर्शो न बाधकं, तत्र

## भैरवी।

माह—वस्तुत इति। अस्यापि—संज्ञास्वरूपघटकान्त्यस्यापि। अपिना समुदायघटकत्वं तृतीयवर्णपरिग्रहः। प्रकारान्तरेण-ज्ञापकादिभिन्नप्रकारेण। अनुवृत्तिपदोत्तरश्चकारो भिन्नक्रम फलपदोत्तरं द्रष्टव्यः। तेन तदनुवृत्तेः फलाभावश्चेत्यस्य लाभः। नन्वेवमनुवृत्तिपरभाष्य कारीयव्याख्यानविरोध इत्यत आह—भाष्येऽप्येतदिति। को विरोध इति। यत्रोद्देश्यता वच्छेदकविधेययोरेकरूपेणोपस्थितिस्तत्रोद्देश्यविधेययोरनन्वयबोधो 'दण्डवान् दण्डवान्' इत्यत्र यथा। नहि तथा प्रकृतेऽस्ति। अकारादिचान्तसमुदायपर्याप्तसमुदायत्वमुद्दे श्यतावच्छेदकमनित्यानुपूर्वी तु विधेयतावच्छेदिकेति भावः। प्राप्नोत्येवेति। एतेन भवदुक्तरीत्या आद्यन्तयोर्वारणाभावः, स्वं रूपमित्यनुवृत्तेर्वैयर्थ्यञ्च ध्वनितम्। यत्सूत्रे स्व

## भावप्रकाशः।

तात्पर्यं ध्वनयितुं तत्र हेतुमाह—आद्यन्तेति। तद्बोधकत्यादि। अन्यथा—मध्यगानाम्। तयोः—आद्यन्त्ययोः। संज्ञाया—अजादिसंज्ञायाः। प्रकारान्तरेणेति। वार्तिकोक्तज्ञापकाद्यन्यप्रकारेणेत्यर्थः। तेन स्वरूपस्यैव वारणं नादेरिति भावः। अत एवाह—स्वशब्देति। च फलपदोत्तरं योज्यः, तदनुवृत्ते फलाभावश्चेत्यर्थः। नन्वेवं भाष्यासङ्गतिरत आह—भाष्येऽपीति। अपिना परममूलसमुच्चयः। एतदिति। ज्ञापकादी त्यर्थः। एवेनानुवृत्तिनिरासः। तदेतदुपपादयति—सञ्ज्ञेति। विशिष्टस्य—वर्णद्वयात्मना जित्यादेः। एवम ग्रेऽपि। प्रत्यकं तद्रूपेणास्य चस्य चेत्यादेः। स्वेति। अजादिपदस्येत्यर्थः। चसवर्णे। का विरोध इति। संज्ञा हि संज्ञिनं बोधयति न स्वम्, विरोधात्। उद्देश्यविधेयभावस्य भेदनिबन्धनत्वात्तत्र शक्तिग्रहासिद्धेः। नैवमत्र, उक्तरीत्या तदवच्छेदकयोस्तयोश्च भिन्नत्वादिति भावः। उक्तमेव दार्ढ्याय सदृष्टान्तमाह—यथेति। घिशब्दस्येति। इदञ्च तदन्तसंज्ञापक्षे। वर्णसंज्ञापक्षे तु तद्घटकेकारस्यापीत्यर्थः। आदिना दृष्टान्तान्तरसङ्ग्रहः। तथा गुणशब्दः संज्ञारूपस्याबोधकोऽपि स्वघटकाकारस्यापि तथा। अत एव 'हे नदि' इत्यादौ ह्रस्वे सन्निपातपरिभाषया "एङ्ह्रस्वात्" इति लोपो न स्यादित्याशङ्क्य 'गुणात्सम्बुद्धेरित्येव सिद्धे तथाकृतसूत्रसामर्थ्यात्तद्विषये तस्या अप्रवृत्तेः' इति 'इकोऽसवर्णे'ति सूत्रे यदप्यसङ्गच्छते। अन्यथा 'हे गुण' इत्यत्र लोपासिद्ध्या ह्रस्वपदचारितार्थ्येन तदसङ्गतिः स्पष्टैवेति। निर्गोविसुपसर्गति—एवञ्चेति। अविरोधे चेत्यर्थः। अचकारस्य स्वपाठः पौनरुक्त्यापत्त्याऽस्यैव वैयर्थ्यापत्त्या च ग्रन्थासामञ्जस्यात्। प्राप्नो

## सरला।

नियमाभिप्रायेणेदम्। वस्तुतस्तु नायं नियमः, किन्तु यो बोधजनकतावच्छेदकः स बोधविषयतावच्छेदको न भवति। येन रूपेण बोधजनकता तेन रूपेण बोधविषयता न भवतीति यावत्। घडित्यादौ घित्वेन बोधकता, इकारान्तत्वेन च बोध्यतेति न विरोधः। तदेव स्पष्टयति—वस्तुत इत्यादिना। ज्ञापकेति। "अनुनासिकः" इत्यादिनिर्देशादिज्ञापकेत्यर्थः।

अशक्यवारणत्वादिति। आदित्वेन अन्त्यत्वेन च रूपेण तयोर्बोध्यत्वाभावेऽपि आद्यन्तघटितसमुदायघटकत्वेन रूपेण तयोर्बोध्यत्वस्य वारणे मानाभावादिति। एवञ्चादेरपि बोधस्य सुलभत्वेन न तदर्थं स्वशब्दानुवृत्तिरिति। तदाह—स्वशब्दानुवृत्तेश्चेति। को विरोध इति। आदेरेव बोधकत्वमन्त्यस्य तात्पर्यग्राहकत्वमिति शेखरोक्त्यनुसरणे तु चिन्त्यमिदम्।

**आद्योरुच्चारणमिति** । यद्यप्युपदिश्यतेऽनेनेति करणव्युत्पत्त्या शास्त्रमुपदेश इति भाष्यवृत्त्यादिषु व्याख्यातं तथापि तत्प्रौढिवादमात्रम् । करणे घञो दुर्लभ-

शब्दरत्नम् ।

समुदाये फलाभावादवयवयोर्विश्रान्तिं प्राप्स्यति । तस्माज् ज्ञापकादिनैवान्त्यस्य तत्कार्यं वारणीयमित्यलम् ।

**भाष्येति** । तत्र हि "उपदेश इति किम्, अभ्र आँ अपः, प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देश इति नानानुपदेशः" इत्युक्त्वोपदेशोद्देशयोर्लोकप्रसिद्धाश्रयेण सङ्कीर्णत्वमा-

भैरवी ।

रूपमित्यस्यानुवृत्तिं कृत्वा स्वपदेनान्त्यपरामर्शाभाव उक्तस्तद्वैयर्थ्यमप्यस्तीत्याह—विशिष्टे-ति । विशिष्टेति । अजित्यादिविशिष्टेत्यर्थः । तस्मात्—उक्तप्रकारद्वयात् ।

तत्र हीति । "उपदेशेऽज्" इतिसूत्रव्याख्यानपरभाष्ये हीत्यर्थः । प्रत्यक्षमिति । अत्र प्रत्यक्षशब्दोऽर्शआद्यजन्तस्तेन प्रत्यक्षस्येन्द्रियग्राह्यस्याख्यानमित्यर्थो लभ्यते । प्रत्यक्षमिति ख्यानक्रियाविशेषणम् । गुणैः प्रापणम्—साधारणधर्मोपादानेन कथनम् । नानाविति । अनुनासिकशब्देन 'आङोऽनुनासिक' इति सूत्रेण विधानमनुनासिकत्वन्तु साधारणमिति भावः । सङ्कीर्णत्वमिति । प्रत्यक्षाख्यानेऽप्युद्देशप्रयोगदर्शनेन सङ्कीर्णत्वम्, यथा शिष्येण "अनुवाकमुद्दिशतु" इत्युक्ते गुरुणा "शन्नो देवीरभिष्टय" इत्युक्ते शिष्य आह—'उद्दिष्टो मेऽनुवाकः' इति ।

त्येवेति । तथा च तयोरुच्चारणं तदनुवृत्तिनैष्फल्यं च सिद्धमिति भावः । प्रत्युतानुवृत्तावप्यनिष्ट तदवस्थमेवेत्याह—किन्त्विति । असम्भवेपीऽति । मूलोक्तरीत्येति भावः । बाधकमिति । मूलोक्तमित्यर्थः । एव च मूलोक्त्या अनिर्वाह एवेति भावः । तत्र—विशिष्टपरामर्शे सति, समुदायविशेषणं वा । एतेन भाष्यमतेऽपि न तत्सूत्रस्य सर्वथा अभावः, नित्यवद्दृष्टार्थत्वभाव यस्य, एव धात्वनुबन्धः सुलभैवेत्यपास्तम्, तत्कृते अवधारणासङ्गत्यापत्तेश्च । यत्तु तन्मतेऽपि लाभान्‌ 'आदिरन्त्य इच्च सह' इति न्यासे कार्यं गुरुभूतधात्वासेनान्त्ये प्राधान्यबोधनद्वारा आदेः प्राधान्यबोधनेन परार्थत्वेऽपि मध्ये न्यबोधनम्, आदिपदावृत्तिर्वा । तन्न, गौरवात्, उक्तरीत्या तस्यावश्यकत्वाच्च । तद्ध्वनयन्नाह—तस्मादित्याद्यलमित्यन्तेन । तस्मात्—आवश्यकत्वादेतयोः । तस्यार्थम्—मध्यस्य कार्यम् । एतेन तस्मादित्यादिग्रन्थः पुनरुक्तो निःसारश्चेत्यपास्तम् ।

करिष्यमाणासकृद्गुर्वादिमतखण्डनसूचितमद्वेषनिरासायाह मूले—यद्यपीति । न केवलं मम एवैवाभिनिवेशः, किन्तु यस्य कस्याप्यसदुक्तिनिरास इति सदर्थमात्रग्राहित्वेन [illegible]

[illegible]

'उपदे[illegible]

शेस्य [illegible] । यद्यप्यनुनासिकत्वमपि तद्ग्राह्यं तथापि तच्छब्दबोध्यत्ववैशिष्ट्या न तथेति भावः । गुणैरिति । प्रत्येकं प्रसिद्धसाधारणधर्मोपादानेन यद् बोधनं स उद्देश इत्यर्थः । अनुत्वमनन्त्वमिति भावः । नानाविति । "आङोऽनुनासिक" इतिसूत्रविहितानुनासिक इत्यर्थः । तयोच्चारणेनाबोधनात्तथा चान्त्य एवाग्रमिति भावः । व्यवहारेणेति । तेनाप्यर्थः ।

सरला ।

"प्रत्यक्षमाख्यानमिति । तत्तद्धर्मविशिष्टोच्चारणम् । वै० च स्वावच्छिन्नविधेयताकशाब्दबोधानुकूलत्वम्, स्वावच्छिन्नविषयताकश्रावणप्रत्यक्षानुकूलत्वम् एतदुभयसम्बन्धेन । अत्र आँ इत्यत्रानुनासिकविधौ अनुनासिकपदघटित 'अनुनासिक' इत्यानुपूर्वीरूपधर्मस्य श्रावणप्रत्यक्षविषयतावच्छेदकत्वेऽपि शाब्दबोधीयविधेयतावच्छेदकत्वं नास्ति, आँत्वस्य विधेयतावच्छेदकत्वात् । तस्य तत्त्वेऽपि न श्रावणप्रत्यक्षविषयतावच्छेदकत्वमिति । गुणैः प्रापणम् । साधारणधर्मैः कथनमित्यर्थः । सङ्कीर्णत्वमिति । 'उद्दिष्टो मेऽनुवाकः' 'उपदिष्टो मे पन्था' इत्यादौ ।

त्वात्, ल्युटा बाधात् । न च घ , असंज्ञा वं न् । प्रायेण सञ्ज्ञायामिति व्याख्यानस्य

---

शब्दरत्नम् ।

शङ्कय "उपदेशनेऽजनुनासिक' इति वार्त्तिकदर्शितन्यायस्य खण्डनाय "उपदेश इति करणे घञ्, उपदिश्यतेऽनेन' इत्युक्तम् । तच्च शास्त्रं शास्त्रकरणं प्रत्यासत्त्यैतच्छास्त्रीयधात्वागमप्रातिपदिकप्रत्याहारसूत्रप्रत्ययादेशरूपम् ।

प्रौढिवादमात्रमिति । वार्त्तिककृदुक्तन्यायसाध्यार्थस्य कथंचित्सूत्रतोऽपि लाभसम्भवात् न्यायान्तरप्रवृत्तिस्ते वृथैवेति प्रौढ्या बाधयितुमेवं वाद इति भावः । घञ इति । "अकर्तरि च' (पा०सू०१।१।१९)इत्यत्र सञ्ज्ञायामित्यस्य प्रायिकत्वात्तत्प्राप्तिरिति भावः । बाधादिति । वाऽसरूपविधिस्तु क्तल्युट्तुमुन्खलर्थेषु प्रतिषिद्ध । न च तत्र साहचर्येण भावल्यु

भैरवी ।

क इति । इदञ्च सङ्ख्यानेत्व ल्ट् सदा इति सूत्रविहितसंग्रहायावश्यकमिति भाव । वार्त्तिकेन । 'सिद्धन्तूपदेशनेऽननुनासिक इति वचनात्' इति वार्तिकस्यार्थ । इदञ्च वार्तिकमुच्चारित इत्यस्याध्याहारेण व्याख्येयम् । प्रत्याहारसम्पादकं सूत्रम् 'अइउण्' इत्यादिसूत्रमिति । प्रत्यासत्त्येति । अस्योपस्थितत्वेनेत्यर्थः ।

प्रौढिवादमात्रमित्यस्य महत्त्वनार्थं वस्तुतोऽसङ्गतमित्यर्थः प्रतीयते, स तु न युक्तः भाष्यकारोक्तत्वमङ्गतत्वकथनस्यायुक्तत्वादतस्तद्व्याचष्टे—वार्तिककृदिति । कथञ्चित्—बाहुलकरूपागतिकगत्या । प्रायिकत्वादिति । अत एव 'को भवता दायो लब्ध' इत्यादिप्रयोगा इति भाव । ननु वाऽसरूपविधिना ल्युड्विषये घञपि भविष्यतीत्यत आह—वाऽसरूपेति । प्रतिषिद्ध इति । अत्र ज्ञापकम्—"अर्हे कृत्यतृचश्च' इति सूत्रे कृत्यतृज्ग्रहणम् । तद्धि चकारसमुच्चयलिङा कृत्यतृचोर्बाधा माभूदिति नियते । यदि वाऽसरूपविधिर्नित्य स्यात्तदा तेन सिद्धेऽस्य ग्रह०

भावप्रकाश ।

तेन "ल्ट् सदा" "निष्ठा" इतिविहितानामपवर्गसङ्ग्रह । अत एव 'ष्णान्ता' इति सूत्रे वार्तिककारेणोपदेशपदेन तस्यैव ग्रहणम् । कथं तर्हि तत्त्व्युत्पत्तिरत आह—उपदेशनेति । उच्चारित इति शेष । उक्तम्—भाष्यकृता । तत्र हीत्यस्यार्थः । तच्च—उपदेशकरणं च । अस्य रूपमित्यन्तेनाप्रसिद्धशास्त्रपदार्थग्रहणेऽनिष्टसिद्धिराह—शास्त्रेति । प्रयोगेत्यादि । ननु तथाप्यतिप्रसक्तिरेवात आह—प्रत्यासत्त्येति । उपस्थितत्वेनेत्यर्थ । एतच्छास्त्रीयेति । एतच्छास्त्रोपात्तेत्यर्थ । एतेन तथा रणेऽपि आह प्रातिपदिकत्वादादेशत्वाच्च दोषस्तदवस्थ एवेत्यपास्तम् । धात्वागमेति । 'हलन्त्यम्' इत्यत्र व्यवसितपदार्थत्वेन भाष्योक्तनिर्णयं । निपातस्य तु प्रातिपदिकत्वादेव सिद्धमिति न पृथगुक्ति । एवञ्च नाव्याप्त्यतिव्याप्ती इति भाव । उक्तहेतोर्यथाश्रुते प्रौढिवादमात्रमित्यस्यायुक्तत्वेऽपि तन्नेत्याद्यनुक्त्या तथोक्तिमात्रेण च सूत्रेऽनेकार्थकल्पनं वर्णयितुं व्याचष्टे—वार्त्तिकेति । कथञ्चित्—अगतिकगतिबाहुल्याश्रयणेन इत्यर्थ । तमेवोपपादयति—करणेत्याद्यगतिकगतिरित्यन्तेन सूत्रकृत् । यत्तु "अकर्तरि च" इत्यत्र सञ्ज्ञायामित्युक्त्या घञोऽप्राप्तौ ल्युट बाधादित्ययुक्तमिति खण्डनकृत्, तन्नेति ध्वनयन्नाह—अकर्तरीति । प्रायिकत्वादिति । अत एव 'को भवता दायो लब्ध' इत्यादि सिद्धम् । स्पष्टं चेदं तत्रैव भाष्ये । एतेन तत्सञ्ज्ञायां संज्ञायामिति च्छेद । अव्याप्तिप्रत्याख्याने चोभयोस्तुल्ये इति भाष्योक्तं प्राचामनुरोधेनेति ध्वनितम्, भाष्यविरोधादिति भाव । तत्प्राप्ति—घञ्प्राप्ति । यत्तु वाऽसरूपन्यायेन पक्षे घञ् सुलभ इति स , तन्नेति ध्वनयितुमाह—वाऽसरूपेति । प्रतिषिद्ध इति । वचनात्तदनित्यत्वाद । तत्र ज्ञापकं तु "अर्हे कृत्यतृचश्च' इति तयोर्ग्रहणम् । तत्र हि चकारसमुच्चेयलिङा कृत्यतृचोर्बाधा मा भूदिति तयोर्ग्रहणमिति भाव । तत्र—वचने अपूर्वे, तन्मूले वा परिभाषारूपे । साहचर्येणेति । परेण तुमुनवि

क्लिष्टत्वात् । न ह्युपाधेरुपाधिर्भवतीत्यादिना भाष्यकृताऽवहेलनाच्च । अत एव घा-

शब्दरत्नम् ।

एव ग्रहणमिति वाच्यम् । ईषत्पान सोमो भवतेत्यत्र कर्मणि खल् नेति भाष्यादिप्रामाण्येनात्र साहचर्यानाश्रयणादिति भावः । क्लिष्टत्वादिति । गुणप्रधानसन्निधौ प्रधानस्य विशेषणे साकाङ्क्षत्वे इतरान्वयस्तस्यायुक्त इति क्लेश इति भावस्तदाह—नहीत्यादिना । भाष्यकृतेति । अस्यार्थस्येति शेषः । एवं चोभयप्राप्तौ कर्मणीति नियमात् कर्तरि षष्ठीति बोद्ध्यम् । अवहेलनाच्चेति । चो हेतौ, यतोऽवहेलनमतः क्लिष्टत्वमित्यर्थः । घापवाद इति । ल्युडपवादश्चेत्यपि बोद्ध्यम् । तत्रापि सञ्ज्ञायामित्यनुवृत्तेरिति भावः ।

भैरवी ।

व्यर्थं स्यात् । साहचर्येण-परतुमुन्साहचर्येण । खल् नेति । किन्तु "आतो युच्" इति युचैवेति शेषः । यदि साहचर्याश्रयणमत्र स्यात्तदा तुमुन्साहचर्येण भावार्थकखल्विषय एव वासरूपविधिनिषेधेन प्रकृते कर्मार्थकत्वेन निषेधाप्राप्त्या भाष्यासङ्गतिः स्पष्टैवेति भावः । क्लिष्टत्वमुपपादयति—गुणेति । विशेषणे इति । निरूपितत्वं सप्तम्यर्थः, तस्याऽऽकाङ्क्षायामन्वयः । एवञ्च विशेषणनिरूपिताकाङ्क्षावत्त्वे इतरान्वय इत्यर्थो लब्धः । इतरान्वयः—इतरस्मिन् प्रधानातिरिक्ते गुणे । तस्य—गुणस्य । अयुक्त इति । किन्तु प्रधानान्वय एव न्याय्यः । प्रकृते च विधेयतया प्रत्ययः प्रधानं, तद्विशेषणमेव प्रायेणेति, न तु सञ्ज्ञायामित्यस्येति । एवञ्चोक्तन्यायत्यागे एव प्रायेण सञ्ज्ञायामित्यन्वय इति भावः ।

भाष्यकृतावहेलनादित्यत्र भाष्यकृच्छब्दात् "कर्तृकर्मणोः" इति षष्ठी प्राप्नोतीति शङ्कावारणायाह—अस्यार्थेति सूत्रे—अत एवेति । तथा व्याख्यानस्य क्लिष्टत्वादित्यर्थः । [illegible] ल्युटो बाधकत्वशङ्काया घापवादत्वकथनमनुपपन्नमेवेत्यत आह—ल्युडपवाद इति । तत्रापि-हलश्चेति सूत्रेऽपि ।

भावप्रकाश ।

शेषः । पूर्वेण तु तदाश्रयितुमेवाशक्यमिति भावः । खल् नेताति । किन्तु 'आतो युच्' इति युचैवेति शेषः । "वाऽसरूप" इतिसूत्रस्थे भाष्ये स्पष्टमिदम् । तदाह—भाष्यादीति । अन्यथा तत्र एव भावखलर्थविषय एतन्निषेधेन तत्र कर्मार्थकत्वेनाप्राप्त्या तदसङ्गतिः स्पष्टैवेति भावः । वैषम्ये तु न बीजमित्याह—अत्रेति । उक्तरूपे वचन एवेत्यर्थः । क्लिष्टत्वादितीति । यत्तु व्यवहितान्वयात्क्लिष्टत्वमिति मान्या, तत्र चामनुरोधेन । तस्यापि बहुषु दर्शनात् । यथाश्रुते तत्रेऽपि वल्म्यासत्त्वान्वये तत्त्वाभावाच्च । गुणस्य विशेषणस्य साकाङ्क्षत्वमित्यपि न, "गुण कृतात्म" इति न्यायेन तस्यापि तदङ्गत्वात् । तदेतद्ध्वनयितुमन्यदीयैव स्थलविशेषाशयेन तत्त्वमाह—गुणेति । इत्याद्यनवसरगुणेन प्रधानमपेक्षाभावे विशेषणान्तरस्योभयसन्निधावित्यर्थः । उक्तन्यायस्त्वेतदन्तविषयक इति भावः । अत्रानुवादत्व प्रधानत्व, विधेयत्व गुणत्वमिति मीमांसकमते न मते, किन्तु शास्त्रसम्भेगोचरत्वाद्गोचरत्वे एवेति स्पष्टमन्यत्र । विशेषणे—विशेषणान्तरे । निरूपितत्वं सप्तम्यर्थः । तस्य तन्निरूपिताकाङ्क्षावत्त्वे चमनीत्यर्थः । इतरान्वय इति । इतरस्मिन्प्रधानान्यगुणेऽन्वय इत्यर्थः । तस्य—विशेषणान्तरस्य । अयुक्त इति । उपस्थितमिति न्यायेन तदन्वयस्यैव न्याय्यत्वादिति भावः । इतिहेतौ । तत्त्व चात्र प्रयोजनम् । तदाहेति । उक्तरीत्या प्रयोगक्रमेत्यादारभ्येत्यर्थः । इत्यादिनेति । चान्तेन हेतुनेति भावः । ननु कर्मणोऽप्रयोगान्नियमाप्रवृत्त्या षष्ठीप्राप्त्या पदासङ्गतिरत आह—अस्येति । एतनान्तर्भावे येनेति नन्नियमप्राप्त्या न षष्ठीत्यपास्तम् । प्राक्षिप्तेनोभयो प्रयोग एव तत्प्राप्त्या तत्रापि शेषपूरणस्यावश्यकत्वात् । तद्ध्वनयन्नाह—एव घति । शेषपूरणे चेत्यर्थः । नन्वेवञ्चासङ्गतिरत आह—चो हेताविति । स्वहेतावित्यर्थः । तदाह—यत इति । गुणेत्याद्युक्तहेतोरित्यर्थः । नन्वेवमपि ल्युटो बाधे शङ्कानुपपत्तिरेवात आह—ल्युडिति । एतेन 'न च घ' इत्यपीदं बोध्यमिति सूचनम् । मूलस्थान एवेत्यस्यार्थं सूचयन्नत्रार्थं हेतुमाह—तत्रापीति । हलश्चेत्यत्रा

यत्तु धातुसूत्रेत्यादि पठन्ति । तत्र व्याचक्षते—"करणव्युत्पत्त्या पूर्वार्धोपात्तानामुपदेशत्वं, कर्मव्युत्पत्त्या त्वागमादीनाम् । उणादिलिङ्गानुशासनयोरपि सूत्रत्वात्सिद्धे पृथगुपादानं गोबलीवर्दन्यायेन । एवं गणत्वादेव सिद्धे धातोरपि" इत्यादि ।

अत्रेदं वक्तव्यम्—किमेषामुपदेशसञ्ज्ञा, उत योगमात्रम् ? नाद्यः, संज्ञायाः

---

शब्दरत्नम् ।

देश" ( पा० सू० १।१।४९ ) इति सूत्रे च भाष्ये भावघञन्तस्यैव तस्याङ्गीकाराच्चेति दिक् । धातुसूत्रेत्यादीनि ।

धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् ।

आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिताः ॥ इतीत्यर्थः ।

उपदेशत्वमिति । उपदेशशब्दव्यवहार इत्यर्थः । धातोरपीति । प्रत्ययेभ्य उणादिभ्योऽपीत्यपिशब्दार्थः । वाक्यशब्देन वार्तिकम् । शीङ्, ल्यप्, घोरट्, उण्, आचारेऽवगल्भ, धुर्, अण्, अनङित्युदाहरणानि । उपदेशसञ्ज्ञेति । उपदेशपदं योगरूढमेष्विति

मैरवी ।

इति वाच्यम्, "व्यवसितान्त्यग्रहणम्" इति भाष्यैकवाक्यतयाऽस्मिन्नपि पक्षे सत्पदार्थज्ञानाय तौ सदिति सूत्रोपस्थितेरावश्यकत्वात्तथा तत्र यस्य शब्दस्य बोध्यस्तदन्त्यस्य ग्रहणमित्याशयात् । एवमेव "निष्ठा" इत्यत्र निपातनस्थले बोध्यम् । वस्तुतस्तु पूर्वविधक्लेशपरिहाराय वा हुल्कारकरणे धजन्तस्वीकार एवोचित इति बोध्यम् । अत एव "भजतष्टक्छसौ" इति सूत्रविहितान्त्यस्येत्त्वसिद्धिः । अत एवाह-दिगिति । एतेन शेखरोक्तसिद्धान्तार्थः सूचितः ।

उपदेशत्वमित्यस्य शब्दस्य सन्निधोपदेशशब्दप्रकृतिकत्वप्रत्ययान्तत्वे वक्ष्यमाणलोकरूपगानामापत्तिरत आह—उपदेशशब्देति । वाक्यशब्दो न सुप्तिङन्तचय इत्यादिप्रसिद्धार्थः, किन्तु रूढ इत्याशयेनाह—वाक्यशब्देनेति । ननु प्राचा योग एव प्रदर्शित इति विकल्पप्रदर्शनं तन्मतखण्डनमयुक्तमत आह—उपदेशपदमिति । तथाच भवत्कृतं योगार्थवर्णनमप्रकृतम्

भावप्रकाशः ।

दावफलत्वेनानित्यत्वेन च दोषोद्धरस्याप्यभावेन तदाश्रयणं नोचितमिति भावः । ननु चिन्त्यमेतत्—समुदायादावयवस्याप्युपदेशकरणात्तदन्त्यस्यापि लोपापत्त्या सामर्थ्यवर्णनायुपपत्त्या मूलशैथिल्यात् । स्वन्मतस्यानुवृत्तावपि सिद्धान्तेऽननुवृत्तेश्च । अत एव भाष्ये तस्यास्थिरानेकान्तत्वे 'अत्र मी मतिः' इत्येकफलमुक्तं, न तु तदर्थमिति । "तस्मिन्" इतिसूत्रस्थभाष्यं तु एकदेश्युक्तिरिति स्पष्टमन्यत्र । किञ्च तयाऽप्यनुवृत्तिः कर्तुमशक्या । "भजष्टक्छसौ" इत्यादिविहितेषु इत्संज्ञालापत्तेः । परस्य सत्त्वेन नादेरनन्त्यत्वात् यदि तूपदेशे धातुत्वादियुक्तान्त्य इत्यर्थस्तर्हि सम्मतसिद्धिर्मोक्षिवेपीति न्यायापत्त्या गौरवं चान्यपदसामर्थ्येनैव तल्लाभे तद्वैयर्थ्यं च । एवञ्चाबाधकेनागत्याऽऽवश्यकतया च बाहुल्काश्रयणम्, उपदेशपदं सिद्धान्ते व्यर्थमेवेति चेत् ? सत्यमेव । अत एव 'इति बोध्यम्' इत्यन्तेन दोषाभासगणमुक्त्वा परिष्कृतसूत्रस्थमेवं दोषमेवाह—उद्देशश्चेति । उणादीनामव्युत्पन्नत्वस्य कंसग्रहणात्पाणिनिमतत्वेनोणादिपाठस्योणाद इति सूत्रोदाहरणप्रदर्शनमात्रार्थत्वेन च तेषां तत्त्वाभाव इति भावः । "आदेच" इति सूत्रे कैयटे स्पष्टमिदम् चेनोपदेशेऽत्वतः, एवाच उपदेशे, प्रत्यक्षमाख्यानमित्यस्य सङ्ग्रहः । तस्य—उपदेशशब्दस्य, इष्टसिद्धेनिष्ठाभावाच्च । दिगिति । तदर्थस्तु तत्र विपक्षे बाधकासत्त्वेन तत्र पक्षे स्वारसिकत्वेन बाधकाभावेन तथाऽङ्गीकारेऽप्यत्र न तथा, प्रागुक्तयुक्तेः एकदेश्युक्तित्वेन तथा बाधकाभावाच्चेति भाष्यकृत्सरणिरेशरणमिति दिक् ।

ननु वाक्यशब्देन न प्रसिद्धम्, तत्र तस्य फलाभावात् साहचर्यभङ्गापत्तेश्चात आह—वार्त्तिकमिति तथा तान्त्रिकव्यवहारादिति भावः । लिङ्गानुशासनस्यानुपयुक्तत्वादुदाहरणेष्वनुक्तिः । ननु प्राचो रूढत्वोक्त्या व्याख्यातुर्योगस्यैवोक्त्या तथा विकल्पानवकाशोऽत आह—उपदेशपदमिति । उभयोक्

शास्त्रकारैरनुक्ते, असंज्ञात्वाद् घप्रत्यया नेति भाष्योक्तेश्च। अस्मदादिकृतसंज्ञाया शास्त्रव्यवस्थापकत्वेऽतिप्रसङ्गाच्च, आमोऽमित्त्वमदन्तत्वादित्यादिस्वग्रन्थविरोधाच्च। न ह्युत्सृष्टानुबन्धस्यामो न प्रत्ययत्व, येन मित्त्व न भवेत्। किं चैवं प्रत्ययविधौ पञ्चम्या षष्ठीप्रकल्पकत्वे सन सनन्तादेशोऽस्त्वित्याशङ्क्योपदेशाभावादित्सञ्ज्ञा न स्यादिति भाष्यकैयटोक्तं व्याकुप्येत। किञ्च "न धातुलोप"(पा०सू०१।१।४) इति सूत्रे "धातुग्रहणं किम्? लूञ् लविता पूञ् पविता" इति भाष्यम्, उपदेश एवानुबन्धलोपे कृते ततो धातुसञ्ज्ञेत्येतपर कैयटग्रन्थश्च विरुद्ध्येत। अपि च, "श्वमारेद्धो"( पा० सू० ६।४।११९ ) इति सूत्रे लोपशश्चेति द्विशकारको निर्देश,

---

शब्दरत्नम्।

भाव। ननु नञ्शास्त्रव्यवहार एवाभिमतोऽस्त आह—आम इत्यादि। न चाकारोच्चारणं व्यर्थम्, तेनास्मत्पक्षज्ञापनस्यैवौचित्यादिति भाव। आदिना यकारादौ धुक्षुपच णपावित्यादिसंग्रह। उपदेशाभावादिति। भाष्यस्योपदेशाभावादित्यर्थ। ततो धातु

भैरवी।

दिशब्दार्थवर्णनप्रदर्शनमुख प्रकारादिशब्दार्थवर्णनप्रदर्शनमित्यत्र विकल्पप्रदर्शनतात्पर्यमिति भाव।
मूल सञ्ज्ञया इति। सञ्ज्ञारूपत्वं विनाऽस्य शब्दस्य रूढत्वन्न सम्भवतीति भाव। ननु शास्त्रकृत्कृतसञ्ज्ञारूपत्वाभावेऽप्यस्मत्कृतत्व साऽस्त्वित्यत आह मूल— अस्मदादीनेति। अतिप्रसङ्गा दिति। रघुनाथादिशब्दं बालकेन आपमक्तुं तेन पूर्वपदादिति णत्वापत्तिरूपातिप्रसङ्गादित्यर्थ।
सञ्ज्ञात्वाभावेऽपि न तद्ग्रन्थीयसंज्ञापरमनुपपन्न, तस्य व्यवहारलाक्षणिकत्वादित्याह—सञ्ज्ञाशब्देनेत। अभिमत इति। तस्यति शेष। अस्मत्पक्षेति। भावप्रयत्नस्य इत्यर्थ। किमत्र विनिगमकमिति चेत्? कृत्स्नार्थकल्पने लाघवमेवेति गृहाण। यकारादौ इति। चुम्बुवादिप्रत्ययाद "चुटू" इति सूत्रेणेत्त्ववारणाय तेनेत्युक्तम्।

ननूपदेशाभावादित्यसङ्गतम्, स्थानिवत्त्वस्य सत्त्वादत आह—आदेशत्वेनेति। अभ्युपगमवादोऽयम्। वस्तुतस्त्वसङ्गत एव "अथवा नानुबन्धे सति प्रकॢप्त्या भवितव्यम्" इत्यादिना भाष्य एव दूषितत्वात्। कृदन्त एवेति। यस्य क्रियावाचकत्व तस्य धातुसंज्ञा, क्रियावाचकत्वार्थबोधनाय प्रयुज्यमानशब्दस्य कस्यापीति भाव। अनुबन्धस्येत्संज्ञया निवृत्तिस्तूच्चारणान्यथ

भावप्रकाश।

यङ्नादिवत्तस्यैव व्याख्यानेन पाचकादिवदा नव मतमिदमित्य मूलकृता प्रतिपाद्यते। पक्षोपदर्शनेऽस्य साङ्गत्यम्। तद् अन्वर्थं नामेत्यर्थो वा बोध्य। अत एवाग्रे मतमिति युक्ति सङ्गच्छते। मूलाशयेनायं पक्षो व्याख्यानाश्रयेनान्वय इति तात्पर्यं तु मात्रप्रदानवैय्य स्पष्टमेवेति भाव। 'असंज्ञात्वात् घनयोर्यनो न' इति मूले पाठ। घप्रत्यय इति पाठे तु घनकैदेशानुकरणं बोध्यम्। संज्ञाशब्देनेति। तदर्थबोधकशब्देनेत्यर्थ। एव—संज्ञात्व व्यवच्छेद। एतेन संज्ञाया इत्यादिदूषणत्रय मौल परिहृतम्। अस्मत्पक्षेति। भावप्रयत्नग्रहणस्य इत्यर्थ। कृत्स्नार्थबोधनेन लाघवादिति भाव। यकारादौ इति। एव वदतो मा यकारस्योपदेशपदानुवृत्तिरित्याशय इति वदता प्राचां मते तत्रापि तदनुवृत्त। एवञ्च सिद्धान्तेऽननुवृत्तावपि तद्रीत्याऽयं ग्रन्थ। भाष्यग्रन्थस्तु "हलन्त्यम्" इति सूत्रस्थस्वग्रन्थाशयक इति न दोष। एतेनासिद्धमाबस्य प्रकृतानुपयुक्तत्वाच्चिन्त्यमिदमित्यपास्तम्। ननु स्थानिवत्त्वेन तथोक्तिरयुक्तेत्यत आह—आदेशेति। वस्तुत इयमेवैकदेश्युक्तिरिति स्पष्टमन्यत्र। कैयटानुपूर्वीमाह—लूञ् इति। ननु बन्धो न धात्वेकदेश, यस्मादुपदेश एवेत्संज्ञा। प्रयोगे त्विच्छेदादित्यत्रैव। यद्यप्युक्तयुक्तिस्थानिव आचयोरुद्धारस्तथाप्यस्योद्धारेण तयोरपि तत्सम्भवात्, गौरवेण तथा नोक्तं तद्ग्रहणवत्त्वेनैव खण्डनद्दुक्त-

तीय । योगस्यैव पुरस्कारे परिगणनस्य व्यर्थत्वात् । धात्वादिषु करणव्युत्पत्तिरागमादिषु नेति वैषम्यस्य दुरुपपादत्वाच्च । उपदेशताप्रयोजकधातुत्वादिरूपोपाध्यत्र-

---

शब्दरत्नम् ।

एष्वेतस्य रूढिरित्युक्ते परिगणनताया एव लाभात् । योगस्यैवेति । न तु रूढेरित्यर्थः । परिगणनस्येति । धात्वादिगणनस्येत्यर्थः । वैषम्येति । भाष्यरीत्या करणव्युत्पत्त्यैव सर्वत्र इष्टसिद्धेरिति भावः । उपदेशताप्रयोजकेति । योगमात्रस्वीकारे उपदेशता—उपदेशकरणता, न हि तत्प्रयोजकं धातुत्वादि भवतीति तद्विरोधः । सञ्ज्ञात्वे तु उपदेशता—उपदेश

भैरवी ।

त्पत्तिरिति परे तु नाम ग्रहः, त्वदुक्तरीत्या भाष्यकृताऽपरिगणनात् । व्यवस्थितान्तस्य ग्रहणमिति व्याख्यानेऽपि नासद्ग्रहः प्रातिपदिकान्तत्वादिति च ध्वनितम् । ननु मन्मतेऽपि परिगणनं नेत्यत आह—एष्वेतस्येति । अस्य—धातुसूत्रेत्यादिना पठितस्य । परिगणनस्यैवेत्यत्र परिगणितकारकावच्छेद्यमाह—नत्विति ।

नन्वन्यत्र यथा परिगणनङ्कर्तव्यमित्युच्यते तथा अत्र प्रोक्तमिति परिगणनमिति कथनं नोचितमत आह—धात्वादीनि । मूले—दुरुपपादत्वादिति । सकृदुच्चरितस्य शब्दस्यैकव्युत्पत्त्यैवार्थबोधकत्वात्तु तत्र व्युत्पत्तिद्वयसम्भवः । एकार्थबोधकतया चारितार्थ्यादानृषी मानाभावादिति भावः । करणेति । प्रकृतिजन्यबोधप्रकारस्यैव भावप्रत्ययार्थतयोपदेशशब्दो यदि करणव्युत्पन्नस्तदा करणताया एव भावप्रत्ययार्थत्वमित्याशयः । न हीत्यादि । प्रयोज्यप्रयोजकभावस्यान्वयव्यतिरेककल्पनया यथा चैत्रे चैत्रत्वधर्मसत्त्व एव पाचकत्वमन्यथा नेति कस्यापि न सम्मतम्, किन्तु विक्लित्त्यनुकूलव्यापारसत्त्वमेव पाचकत्वप्रयोजकं, तथा धातुत्वादिकं न करणताप्रयोजकम् । पूर्वस्मिन्पक्षे तु न तद्ग्रन्थविरोध इत्याह—सञ्ज्ञात्वे त्विति । उपदेशशब्दस्येति । भावप्रत्ययप्रकृतिभूत उपदेशशब्द स्वरूपपर ततस्तत्प्रत्ययस्तद्वृत्तिधर्मपर इति

भावप्रकाशः ।

कर्मकरणव्युत्पत्तौ द्वयस्यापि सम्भवः, तदुक्तपरिगणनस्य तन्मतेऽभावात् व्यवस्थितपदार्थेषु प्रातिपदिकस्यापि गणनाभावेति सूचितम् । ननु मयापि परिगणनं नोक्तमत आह—एष्विति । धात्वादिष्वित्यर्थः । एतस्य उपदेशशब्दस्य । अस्य—तदर्थस्य । तवार्थमाह—नत्विति । ननु मया 'इति परिगणनम्' इति कण्ठतो नोक्तमत आह—धात्वादीति । ननु न मम तद्गणने तात्पर्यं, किन्तूदाहरणप्रदर्शनमात्रेऽत आह मूले—धात्वादिष्विति । अर्थभेदेन कर्मकरणव्युत्पत्तिप्रदर्शनादागमादिषु सा नेत्येवं फलितस्येत्यर्थः । एतेन पूर्वार्धोपात्ताना तथात्वमुक्त्वा आगमादिलक्ष्याण्युक्त्वा गुरूक्तस्यैते च कर्मव्युत्पत्त्योपदेशा इत्यस्यैते इत्यनेन धात्वादिसर्वपरामर्शित्वाद्य भिन्नक्रमतास्य सर्वे ते कर्मव्युत्पत्त्या चेत्यर्थेन सर्वत्र व्युत्पत्तिद्वय तदभिमतमिति न वैषम्यमिति मनोरमाकारोक्तमपास्तम् । आगमादिषु भावकरणव्युत्पत्त्यकथनेनाग्रिमग्रन्थस्य तन्मात्रकथनपरत्वेन चाक्षरमर्यादया तथाऽलाभात्, भावकरणसाधनयोर्द्वयोरप्युपदेशशब्देन तन्त्रेणापादानमिति तदीयोत्तरग्रन्थविरोधापत्तेश्च । किञ्च कर्मव्युत्पत्त्यङ्गीकारस्याफलत्वात्तद्ध्वनयन्नाह—भाष्यरीत्येति । धात्वादिवदागमादिभिरपि प्रयोग उपदिश्यत इति भावः । एतेनोपदेशशब्दस्य सकृदुच्चरितत्वादन्यतरव्युत्पत्त्या सर्वत्र निर्वाहाच्च दुरुपपादत्वमिति भाष्योक्ति प्राचामनुरोधेनेति ध्वनितम्, भाष्यविरोधापत्तेः । ननु न मम वैषम्ये सर्वत्र व्युत्पत्तिद्वयकथने वा तात्पर्यं किन्तु एतस्य शुद्धयौगिकत्वप्रतिपादने, एवञ्च बाधकाभावादस्तु भाष्यरीतिरेवात आह—उपदेशतेति मूले । तद्ध्वनयन् भाष्यरीत्यैव मूलाशयमाह—योगेति । भाष्योक्तत्वादि । मात्रपदेन रूढिपरिगणनवैषम्यादिव्यवच्छेदः । तत्प्रयोजकमिति । तद्व्यवहारप्रयोजकमित्यर्थः । सञ्ज्ञात्वे तु कथञ्चिद्योज्यमित्याह—सञ्ज्ञात्वे त्विति । योगरूढत्वे त्वित्यर्थः ।

च्छिन्नसमुदायान्त्य हल् इत् इत्यर्थ इति स्वग्रन्थविरोधाच्च । पक्षद्वयेऽपि सिद्धान्तानुशासनस्ये प्रकृतानुपयोगात् । लोपश्चेति शकारस्यासंग्रहाच्च । "आदेच उपदेशे" ( पा० सू० ६।१।४५ ) "उपदेशेऽत्वत " (पा०सू०७।२।६२) इत्यादावाद्योच्चारणस्यैवोपदेशपदार्थतया सर्वसम्मतत्वाच्चेति दिक् ॥

---

शब्दरत्नम् ।

शब्दत्वम् ,उपदेशशब्दस्य शब्दपरत्वात् । तदवच्छिन्नस्य प्रयोजकं तु रूढ्यर्थतावच्छेदकतया धातुत्वादि वस्तु शक्यमिति भाव । शकारस्येति । न ह्यनेन किञ्चिदुपदिश्यत इति भाव । ननूपदिश्यते ज्ञाप्यतेऽनेनेति तदर्थ , धात्वादिभिर्हि प्रयोगो ज्ञाप्यते, मद्वदनेनापि शकारेण सत्वाश्रयत्व ज्ञाप्यते, इत्यरुचेराह—आदेच इति । सर्वेति । भाष्यकारादीत्य

भैरवी ।

भाव । तदवच्छिन्नस्येति । उपदेशतया प्रयोजकमिति विग्रहे या षष्ठी तस्यास्तदवच्छिन्नस्य न्धित्वमर्थ इति कल्पनेन तदवच्छिन्नस्येत्यस्य लाभ । प्रयोजकपदन्तु रूढ्यर्थतावच्छेदक लाक्षणिकमित्याशयेनाह—रूढ्यर्थेति । यथा हर्यादिनानार्थपदस्य विष्णुत्वादिरूपा नानाधर्मा शक्यतावच्छेदका भवन्ति तथेहापि धातुत्वादिक रूढ्यर्थतावच्छेदक सम्भवतीत्याशय । न चास्मिन्पक्षे प्रयोजकपदस्य यदि लक्षणा तदा द्वितीयपक्षेऽपि प्रयोजकपदस्यावच्छेदके लक्षणास्तु, तथा चापदेशकरणतावच्छेदकमित्यर्थो भविष्यतीति तत्पक्षेऽपि न स्वग्रन्थविरोध इति वाच्यम्, अन्यूनानतिरिक्तवृत्तिधर्मस्यैवावच्छेदकतया धातुत्वादेन्यूनवृत्तितयाऽवच्छेदकत्वासम्भवादिति भाव ।

कश्चित्तु उपदेशतेत्यत्रोपदेशशब्दस्य संज्ञाशब्दतया संज्ञाशब्दस्य शब्दस्वरूपस्यैव संज्ञिपरत्वात्प्रकृतिकभावप्रत्ययार्थस्यमित्युपदेशतेत्यस्योपदेशशब्द इत्यर्थ एवोचित इत्याहु तन्न, योगरूढस्य शब्दस्य शब्दस्वरूपप्रवृत्तिनिमित्तकत्वासम्भवात् । मूले पक्षद्वयसाधारण दूषणमाह—लोपश्चेतीति । आद्यपक्षे परिगणनेनासङ्ग्रह स्पष्ट । द्वितीये तमुपपादयति—न ह्यनेनेति । तदर्थ —उपदेशपदार्थ । सर्वसम्मतत्वेऽपि भाष्यानुसारिणां भाष्यसम्मतार्थे एवाग्रह इत्याशयेनाह—भाष्यकारादीति । ननु करणव्युत्पत्तिस्तर्हि प्रसिद्धार्थकैव स्यादत आह—

भावप्रकाश ।

अस्य वस्तु शक्यमित्यत्रान्वय । यत्तु तत्रोपदेशता तच्छब्द इति । तन्न, एतस्या योगरूढतया शब्दाप्रवृत्तिनिमित्तकत्वेन तस्य तद्व्युत्पत्त्यर्थत्वासम्भवात् । यदप्युपदेशता तत्करणत्वावच्छिन्न धातुत्वादीति । तदपि न, तथापि तत्प्रयोजकधातुत्वादीत्यसङ्गतेरत आह—उपदेशशब्दत्वमिति । शब्दपरत्वादिति । अर्थेति शेष । अनुकरणत्वादिति भाव । कथञ्चित्त सङ्गमयति—तदवच्छिन्नस्येति । तत्त्वावच्छिन्नशब्दव्यवहारस्येत्यर्थ । तथा च तत्र तस्य लक्षणेति कृत इति भाव । तद्वृत्तीति । योगार्थतावच्छेदकं [illegible] इत्यर्थेति तत्पक्षेऽपि एवमपि योजयितुमशक्यमेवेति भाव । ननूपदेशनाप्रयोजकेत्यस्य उपदेशनापर्याप्य धिकरणतावच्छेदके इत्यर्थं । उपदेशत्वं यावन्ति पर्याप्त तत्रोपदेश इत्युक्त तथोक्तेरतो न स्वग्रन्थविरोध इति येन नङ्गदतो मूले पक्षद्वयसाधारणदोषमाह—पक्षद्वयेऽपीत्यादिना । दोषान्तरमाह—लोपश्चेतीति । ह्यनेनेऽपीत्यस्यानुषङ्ग । पूर्वं तु शब्दता भाष्याविरोधो दत्त इति न पौनरुक्त्यम् । तत्र च उक्तमु पादित चेति, द्वितीये सिद्धान्तरीत्येव हेतुमाह—नह्यति । तत्र प्रथमपक्षे दोषोद्धारं प्रागुक्तं हृदि निधाय द्वितीय पक्षे तत्रीत्याऽपि दोषोद्धारप्रकारमाह—ननूपति । तदर्थं —उपदेशशब्दार्थं । ननु "आदेच" इति सूत्र सिद्धान्ते न तथा, तत्र कर्मव्युत्पत्त्यङ्गीकारादत आह मूले—उपदेशेऽत्वत इति । आदिना 'एकाच उप देशे" इत्यादिपरिग्रह । ननु सर्वसम्मतत्वेऽपि किं भाष्यानुसारिणामत आह—भाष्येति । एकदेशेन त भति प्रौढ्योक्तत्वेऽपि तत्प्रकारस्यान्यत्रावश्यकत्वेनैतद्भाष्यस्यापि सिद्धान्तत्वेन तदाश्रयणेऽपि

उपदेशेऽजनुनासिक इत् (पा०सू०१।३।२) ॥ यद्यप्यत्रोपजीव्यत्वादनुनासिकसञ्ज्ञा प्रथमं वक्तुमुचिता, तथापि नासिकामनुगत इति योगाश्रयणेनैव गतार्थ-

---

शब्दरत्नम् ।

च । यत्र तु करणव्युत्पत्त्यैवार्थसङ्गतिः, तत्र त्वास्तु "कृत्यल्युटः" (पा०सू०३।३।११३) इति बाहुलकाल्ल्युडभावः । यथा "यन्निमित्तत्वैरूप्यप्रयुक्तोपदेशाप्रवृत्तौ" इत्यादाविति दिक् ॥

नासिकामनुगत इति । नासिकामभिहत्य वायुनाऽभिव्यञ्जित इत्यर्थः । प्राति-शाख्यशिक्षादौ लोके च तद्व्यवहारस्य तथैवोपपादनमावश्यकमिति तात्पर्यम् । अत एव

भैरवी ।

यत्र त्विति । इत्यादाविति । आदिना भाष्ये "यस्य सन्ध्यक्षरेषु तपरोपदेशादचेत्तपरोच्चारणम्" इति वाक्यस्य सङ्ग्रहः । मूले—दिगिति । दिगर्थस्तु प्रागुक्तभाष्यवार्त्तिकस्वारस्येन "लुट् सञ्ज्ञा" इ-त्यादिसङ्ग्रहानुरोधेन सकललक्ष्यसाधनानुरोधेन बाहुलकाश्रयणमेवोचितमिति ।

नन्वनुनासिकपदादनु पश्चान्नासिकाङ्गत इति, नासिका पश्चाद्व्याप्रियते यस्मिन्निति वार्थः प्रतीयते, तथा चानुनासिकाकारादीनामनुनासिकत्वगुणरहितानां स्वरूपोपलम्भात्तद्विषये मत-भेदेन यथायुक्तस्यार्थस्य सम्भव इति तेषां सङ्ग्रहो भवति, तथापि यादीनां तद्गुणरहिताना-मनुपलम्भात् युगपदेवोभयावच्छेदेनोत्पन्नाभ्यां वायुसंयोगाभ्यामुत्पत्तिरिति विनिगमनाविर-हेणोभयोः स्थानत्वमतः कथं योगाश्रयणेन गतार्थता ? किञ्च—

'अनुस्वारयमानाञ्च नासिका स्थानमिष्यते'

इति शिक्षोक्तेस्तेषामसङ्ग्रहोऽत आह—नासिकाममीति । तथा च नायमुक्तरीत्या यौगिकः । किन्तु नासिकामनुगत इत्यत्र योऽनुशब्दस्तस्याभिहत्येति गत इत्यस्य चाभिव्यञ्जित इत्यर्थ इति सर्वेषां संग्रह इति भावः । उक्तयोगाश्रयणमावश्यकमित्याह—प्रातिशाख्येति ।

न केवलं प्रातिशाख्यादावेव तथा, किन्तु प्रकृतशास्त्रेऽपीति सूचयन्नाह—अत एवेति । यो-

भावप्रकाशः ।

सिद्धान्तभूततद्भाष्यानुरोधेन यथैवात्र युक्तं न तु प्रौढमोक्तैतद्भाष्यानुरोधेन तथेति भावः । मूलोक्तदिगि-त्यस्यार्थस्तु शिक्षानुशासनवन्मंव्युत्पत्तिपरिगणनानुपयोगात्सर्वथा प्राचोक्तमयुक्तमेव । तथा च भाष्यद्वय-बलादन्यतराश्रयणमस्तु, न तु भाव एवेत्यवधारणमिति । तथा प्रागुक्तमयुक्तमेवेति ध्वनयन्नाह—यत्र त्विति । आदिना तपरोपदेशश्चेति वार्तिकसङ्ग्रहः । एवञ्च तत्र तथात्वेऽप्यत्र प्रागुक्तरीत्या बाहुलकाश्र-यणमिति भाष्य सम्यक् प्राचीनग्रन्थासाङ्गत्येपि मूलभाष्ययोरैक्यं चेति फलितं, तद्ध्वनयन्नाह-इति दिगिति । इत्यलम् ।

ननु नासिकामनु पश्चाद्गत, अनु पश्चान्नासिका व्याप्रियते यस्मिन्वेत्यन्यतरयोगार्थस्य तेषु स्वरेषु सम्भवः, तेन तदभिव्यक्तौ सत्यां नासावच्छिन्नवायुसंयोगेन तद्गुणाभिव्यक्त्यङ्गीकारात्, न यादिषु, तत्रा-तद्गुणस्वरूपानुपलब्धेरुभयावच्छेदेन वायुसंयोगोत्तरमेव तद्गतस्वरूपाभिव्यक्त्याऽविनिगमकेनोभयोः स्थान-त्वेन युगपदेवोभयसम्बन्धात् । एवं यमानुस्वारेष्विति । "अनुस्वारयमाना च" इति शिक्षोक्त्या तेषां नासि-कामात्रस्थानत्वेन तस्या एव सम्बन्धात् । तत्कथं तेन गतार्थतेत्यत आह—नासिकामिति । तथा च नोक्तरीत्या तस्य यौगिकत्वं मतम्, किन्तु अनोरभिहत्येति गत इत्यस्याभिव्यञ्जित इत्यर्थ इत्येवम् । यद्वा, नासिकाशब्देन प्रागुक्तस्तद्व्यापारः, तमनु पश्चात् गतो जात इति । इदं च प्रागुक्तेषु सर्वेष्वविशिष्टमिति मूलोक्तानुबोध्यपश्चात्त्वं सम्यगेवेति भावः । मौल्यं च ध्वनितमाह—प्रातिशाख्येति । तथैवोपपत्ति । तत्र वचनाभावादिति भावः । अत्र शास्त्रेऽपि तदावश्यकं तत्रापि सदुक्तमेवेत्यपि तेन ध्वनितमित्याह—अत

त्वाद् 'अनुनासिकसञ्ज्ञासूत्रं मन्दप्रयोजनम्' इति ध्वनयितुं नेहोपन्यस्तम् । उपदेशे

## शब्दरत्नम् ।

मुखग्रहणप्रत्याख्यानभाष्यध्वनितो यमानुस्वारयोरनुनासिकव्यवहारः सूत्रमते सङ्गच्छते । "परोऽनुनासिके" (पा०सू०८।४।४५) इत्यादौ स्वरूपग्रहणाभावस्तु 'पशु' 'अपत्यम्' इत्यादिवदिति ध्येयम् । मन्दप्रयोजनमिति । मन्दं प्रयोजनमस्येति बहुव्रीहिः ।

## भैरवी ।

णाश्रयणादेवेत्यर्थः । प्रत्याख्यानेति । तत्र ह्यादौ मुखग्रहणस्य मुखग्रहणं यमानुस्वाराणामेव मा-भूदित्येवमर्थमिति प्रयोजनमुक्त्वा ये उभयवचनास्तेषां प्रासादवासिन्यायेन संग्रहो मुखग्रहणाभावेऽपि भविष्यति । यमानुस्वाराणान्तु संग्रहेऽपि नैव दोषो न प्रयोजनमित्यनेन फलाभावमुक्त्वा मुखग्रहणप्रत्याख्यानेत्यर्थः । ध्वनित इति । "भवेदुभयवचनानां सिद्धम्" इति कथनेन ध्वनितमित्यर्थः । उभयवचनमुभयावच्छिन्नवायुसंयोगप्रयोज्याभिव्यक्तिविषयत्वेनैवेति तथा कथनेनायमर्थो लभ्यते । नन्विदं सूत्रं यद्यारभ्यते तदाऽशब्दसंज्ञेति निषेधात् "परोऽनुनासिके" इत्यादौ स्वरूपग्रहणाभावो भवति, सूत्रानारम्भे तु स्वरूपग्रहणं प्राप्नोतीत्यत आह—परोऽनुनासिक इत्यादाविति । इत्यादिवदिति । आदिना देवदत्तादिशब्दपरिग्रहः । तथा च स्वं रूपमित्यंशः पश्वादिविषये व्यभिचरति इति तस्यानित्यत्वानुवादकमेवाशब्दसंज्ञेति ननु स्वातन्त्र्येण निषेधविधायकमिति पश्वादिशब्दोच्चारणस्थलवदत्रापि स्वरूपग्रहणाभाव इति भावः । अनुनासिकाकारादिविषये मतभेदश्च कैयटीये प्रसिद्धः—अनुनासिकस्य पूर्वः परो वा भागो मुखेनोच्चा

## भावप्रकाशः ।

[१] एवेति । मदुक्तयोगाश्रयणादेवेत्यर्थः । प्रत्याख्यानेति । प्रासादवासिभ्राष्ट्रवासिन्यायाभ्यामिति भावः । भाष्ये ध्वनित इति । तत्रत्यभाष्ये इत्यर्थः । 'उक्तन्यायाभ्यां भवेदुभयवचनानां सिद्धं यमानुस्वाराणामपि प्राप्नोति नैव दोषो न फलम्' इति ग्रन्थेनेति शेषः । सति तद्व्यवहारे दोषफलाभावोक्तिर्युक्ता, न त्वन्यथेति भावः । सूत्रमते इति । मदुक्तयोगान्यतरस्य तत्रासम्भवेन पाणिन्याद्यनभिमतत्वेऽपि प्रातिपदिकादिसञ्ज्ञावद्रूढिमात्रस्वीकारे नेयं नासामात्रवचनत्वेनोभयघटितत्वाप्राप्त्या व्यवहारानुपपत्तिस्तन्मते इति मदुक्तयोगोऽपि शरणम्, सङ्ख्यावत्प्रशस्तया योगार्थबाधस्य पाणिनेरप्यदृष्टत्वादिति भावः । इदमपि पाणिनिशिक्षा—कल्पान्तिशाख्याद्यनुरोधेनोक्तम् । "नासिक्या नासिकास्थानाः मुखनासिक्या वा" इति नैत्तिरीयप्रातिशाख्यरीत्या तु पक्षान्तरे सूत्रमतेऽपि तद्व्यवहारे न व श्वक्तिमात्र भाष्यम् । तन्वेव 'स्वं रूपम्' इत्यनेनैवाद्विशब्देषु स्वरूपग्रहणापत्तिरत आह—परोऽन्विति । आदिना "अनुदात्तोपदेश" इत्यादिसङ्ग्रहः । इत्यादीति । आदिना देवताद्वन्द्वानामनुष्ठ्यादिसङ्ग्रहः । एवञ्च तस्यात्र व्यभिचरितत्वेनानित्यत्वेनासार्वत्रिकत्वात् प्रत्याख्यातत्वाच्च तद्विनाऽपि निर्वाहः । एतेन तत्राशब्दसंज्ञेति निषेधद्वारा तत्स्वरूपग्रहणवैफल्यनमिति ध्वनयितुं मन्दत्वम् । तथा च मन्दस्य फलविशेषणमिति समानाधिकरणबहुव्रीहिरिति दण्डाद्युक्तमयास्तम् । तद् ध्वनयन्नाह—मन्दोऽस्येति । ज्ञापकादिना व्यधिकरणबहुव्रीहेरपि स्वीकारादिति

## सरला ।

प्रत्याख्यानभाष्येति । तत्र "ये प्रासादवासिनः, गृह्यन्ते ते प्रासादवासिग्रहणेन, ये भूमिवासिनः, गृह्यन्ते ते भूमिवासिग्रहणेन, ये चोभयवासिनः, गृह्यन्ते ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च" इति दृष्टान्तप्रदर्शनेन ये मुखवचना नासिकावचनाश्च वर्णास्ते उभयवचनास्ते नासिकावचनग्रहणाद् अपि भवन्तीति मुखग्रहणं प्रत्याख्याय तत्र पक्षे केवलनासिकावचनानां यमानुस्वाराणामनुनासिकसंज्ञामापाद्य "नैव दोषो न प्रयोजनम्" इति भाष्येणोपपादितत्वेन । फलैक्याय च आरम्भपक्षेऽपि यमानुस्वाराणामनुनासिकसंज्ञाऽवश्यमाश्रयणीया । सा च योगार्थपुरस्कारेणानुनासिकपदस्य बोधकत्वपक्षे सङ्गच्छते । अत्र तु अवश्यत्वानुवादकम् । नन्वेवमनुनासिकस्य शब्दसंज्ञात्वाभावे "स्वं रूपम्" इति स्वरूपग्रहणापत्तिरत आह—परोऽनुनासिक इति । "हलन्तेड्निनाथयोः पशौ" इत्यत्र पशुशब्देन "नस्यापत्यम्" इत्यत्रापत्य-

किम्? अभ्र आँ अप। यद्यपीह "उञः" "ऊँ" (पा० सू० १।१।१७,१८) इत्यत्रैव विधानसामर्थ्यान्नेत्त्वमिति सुवचम्, तथाप्युत्तरार्थमवश्य कर्त्तव्यमुपदेशग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम्। अच किम्? मनिनो मकारस्य मा भूत्। प्रति

---

शब्दरत्नम्।

प्रतिविधेयागलोकप्रतिशाप्रयोजनभिन्नं प्रति सप्रयोजनमित्यर्थः। अभ्र आँ अप इति। अत्रत्यस्यानुनासिकस्य लोपः स्यादिति भावः। विधानेति। इदिति वक्तव्येऽनुनासिकविधान सामर्थ्यादित्यर्थः। नेत्त्वमिति। तत्फलस्य लोपस्य सामर्थ्यादभावे इत्त्वमपि, फलाभावान्नेति भैरवी।

यते, अपरो भागो नासिकया, नासिकावचनमागानुरागवशान्मुखवचनोऽपि भागो नासिकावच इव लभ्यते। अत्र प्रासादवासिन्यायो नास्ति भागस्यैव मुखेन नासिकया चोच्चारणात्। यत्र तु सर्व एव वर्णो मुखेनोच्चार्यते नासिकया च तत्र प्रासादवासिन्यायेन मुखग्रहणं भाष्यकार प्रत्याचष्ट इति।

सन्दप्रयोजनशब्दो न क्रियाविशेषणसन्दशब्दयन्ति समानाधिकरणपदको बहुव्रीहि उक्तरीत्या प्रयोजनालाभात्। किन्तु "सप्तमी विशेषणे" इति ज्ञापकाद्व्यधिकरणपदक इत्याशयेनाह—सन्देष्विति। लोपः स्यादिति। अत्र स्यादित्यनेन सम्भावनामात्रं ननु प्रसक्तिर्वेदे आपाद्यमानरूपाभावात्। यद्यपि "अनेकान्ता अनुबन्धाः" इति पक्षे 'अभ्र आँ अप' इत्य नेट्प्रतिषेध एव सम्भवति तथाऽप्येकान्तपक्षे तदसम्भव एवेति बोध्यते। "आङ इदिति वक्तव्य" इति आङ इच्छन्दसीति वक्तव्य इत्यर्थः। यत्तु "तस्य लोपः" इति सूत्रानन्तरम् 'आङश्छन्दसि' इति लाघवाद्वक्तव्यमिति, तन्न, अचोऽस्यस्य कर्तव्यत्वापत्तेः। स्वस्थाने तथा पाठे तु 'प्लुतप्रगृह्या' इति सूत्रादचीत्येतस्य सम्बन्धेन तदनावश्यकमेव। ननु विधानसामर्थ्यादस्य लोपो माभूदित्संज्ञा तु स्यादेवेत्यत आह—तत्फलेति। तस्येत्त्वस्य फलं लोपः स प्रतियोगितासम्बन्धेनेत्त्वस्य व्यापकः विधानसामर्थ्याद्व्यापकस्य तस्याभावे व्याप्यस्येत्त्वस्या

भावप्रकाशः।

भावः। ननु तथापि प्रयोजनशब्दस्य प्रयोजकपरत्वेन समानाधिकरणबहुव्रीहिरेव युक्त इति चेत्? न, तस्य पूर्वनिपातापत्तेः। अत एव आह—एवंविधेति। सानुनासिकव्यवहारेत्यर्थः। क्रियाशब्दवद् रूढिशब्देऽपि प्रासादवासिन्यायप्रवृत्तेरादिना सङ्ग्रहः। तथा च षष्ठीबहुव्रीह्यभावे तात्पर्यं ननु तथा विग्रह इति भावः। लोप इति। यद्यपि वेदे आपाद्यमानरूपाभावस्तथाप्यस्या नान्तरीयकलोपं विनाऽन्य फलासम्भवेन साफल्यायैवमुक्तिरिति भावः। वस्तुतस्तूक्तहेतोरन्यफलाभावाच्चैतदभावे उपदेशपदं व्यर्थमेव। तद्ध्वनयन्नाह—स्यादिति भाव इति। इदितीति। उञ इदितिवत् "आङ इच्छन्दसि" इति वक्तव्ये इत्यर्थः। एतेनेत्संज्ञाप्रकरणे "तस्य लोपः" इत्युत्तरं वा 'आङश्छन्दसि' इत्येव पाठेन सिद्धिरिति मूलाशय इत्यपास्तम्। अचीत्यनुवृत्तेरावश्यकतया तत्र कर्तुमशक्यत्वात्। ननु विधानसामर्थ्याल्लोपो मास्तु, इत्त्वं तु स्यादेव बाधकाभावादत आह—तत्फलेति। तस्येत्त्वस्य फलं प्रत्याहारसिद्ध्यन्य फलान्तरद्वारभूतं तद्व्यापकं यो लोपस्तस्येत्यर्थः। फलाभावादिति। द्विविधफलाभावादित्यर्थः। एतेन तस्यानुनासिकस्य फलमित्संज्ञा तत्प्रयोज्यलोपस्येत्यर्थः, ननु तस्येत्त्वस्य फलं लोप इत्यर्थः, अकार्यं हि लोप इति 'उपदेशेऽज्' इतिसूत्रभाष्यविरोधापत्तेरित्यपास्तम्। तन्मात्रफलकत्वमिति तद्भाष्याशयेन यथाश्रुतार्थसम्भवात्। एवञ्चोपदेशपदं व्यर्थमेवेति भावः। उत्तरार्थं तु न, तत्र तदनुवृत्तभाष्यानभिमतत्वात्। त्वन्मतेऽपि तद्युक्तत्वस्य प्रागावेदितत्वाच्च। एवञ्च तथापीत्यादि मूलं प्र-

सरला।

पदेन च यथा व्याख्यानात्र स्वरूपग्रहणं तथाऽत्रापि व्याख्यानात्र तद्ग्रहणमिति तद्भाव। इति पक्षे इति। हलन्तशब्दानां तत्पक्षे अनवयवत्वेन समीपेऽवयवत्वारोपेण षष्ठीबहुव्रीहिस्वीकाराद् आसार हलन्तशब्द समीपे

## शब्दरत्नम्।

त्यर्थः। ननु 'श्वश्व आं श्वयति' इत्यत्र "अनेकान्ता अनुबन्धाः" इति पक्षे "आदितश्च" (पा०सू० ७।२।१६) इतीट्प्रतिषेधः फलम्। न च लोपाभावे इदितिमहासंज्ञाकरणात् संज्ञाऽपि नेति वाच्यम्। महासंज्ञयैव लोपसिद्धौ "तस्य लोपः" (पा०सू० १।३।९) इत्यस्य वैयर्थ्यापत्तेः। "इक्" इत्यादौ ककारादिश्रवणानापत्तेश्च, इति चेत्? न, "अनुबन्धानामेकान्तत्वमेव" इति मुख्यपक्षे लोपाभाव इत्याशयात्। तथा हि मुख्येऽव

## भैरवी।

यभाव इत्यर्थः। फलान्तरमाशङ्क्य निराचष्टे—न चेति। महासंज्ञेति। इत् इति व्यञ्जनमात्रं संज्ञा कर्त्तव्या, तथा च लाघवम्। इदिति तु ण्वीति इत् इत्यर्थकमिति लोपो न विधीयतीत्याशयः। इक इत्यादाविति। प्रत्याहारार्थमित्त्वं सम्यगावश्यकमेव। तथा च महासंज्ञया तन्निवृत्तिः स्यादिति भावः। ननु न तस्येतन्मात्रोच्चारणं किन्तु तत्सदृशस्यैव। अत एव "आदिरन्त्येन" इति सूत्रव्याख्यानावसरे इता इत्सदृशेनेत्युक्तम्। अत एव 'वैयाकरण' इत्यत्र चित्स्वरो नेत्यत आह—आदाविति। तेन "अइउण्"इत्यादौ णादिश्रवणानापत्तिः समुन्मीयते। मुख्यत्वं तस्योपपादयति—तथा हीति। एवं "हलन्त्यम्"इत्यादौ लक्षणायाः अकल्पनेनापि लाघवं बोध्यम्। ननु

## भावप्रकाशः।

सामञ्जस्येन। अत एव तथा व्याख्यातम्। तदेतद् ध्वनयितुमत्रैवैतस्यैकदेश्युक्तं फलान्तरमाशङ्कते—नन्वत्र इति। पक्षे—अस्थिरपक्षे। अत्र पक्षे शिवादौ दधुरनुपपत्तिस्तु प्रागशङ्कादवेदिना न विस्मर्तव्या। फलमिति। अनिष्टोऽपि स फलमित्यर्थः। एव नैव साधकमिति भावः। प्रागुक्तसिद्धान्तं ध्वनयितुं शङ्कते—न च लोपाभाव इति। उक्तरीत्येति भावः। इदिति संज्ञेति। ण्वीति इदिदं वर्णत्यर्थः। एवमग्रेऽपि। यथाश्रुते तु विधुमादितुल्यत्वेन तदसङ्गतिः स्पष्टैव। इतोऽप्येतस्या लोपफलस्यावश्यकत्वादिति भावः। ननु तथा सिद्धस्यापि तस्य साधुत्वार्थं तदावश्यकमत आह—इक इति। न कर्मसंज्ञया तन्निवृत्तेरिति भावः। नन्विक इत्यादौ कादिश्रवणे न बाधकं, तस्येत्कादितुल्यत्वेऽपि तत्त्वाभावात्। अत एव वैयाकरणे चित्स्वरो न। एवं चेद् चिन्त्यमत आह—आदाविति आदीति च। ताभ्याम् "अइउण्" इत्यादिसन्निधेश्च णादिश्रवणानापत्तिसङ्ग्रहः। सिद्धान्ते तु तत्रेत्संज्ञायामपि तस्य लोपः इति न, अणादिग्रहणसिद्धस्य पात्रयत्वेन तत्र तदसम्भवेन तदन्यफलाभावेन लोपमात्रस्याफलत्वेन च निर्देशसामर्थ्यादिष्टार्थबोधभावापत्तेर्लोपद्वारकफलान्तराभावात् तत्सत्त्वे एव तयोर्व्याप्यव्यापकभावाद्। अत एव "लोपश्च बलवत्तरः" इति सङ्गच्छते। तन्नाक्षिप्तान्तर्गतत्वेन ग्रहणं मा भूदिति तन्न्यफलमस्त्वात्। धातुपाठानुरोधेन तथैव बोध्यम्। एवञ्चैतस्या अन्वर्थत्वं वक्तुमशक्यम्। अत एव तट्टीकायां तत्र तत्र भाष्ये महासंज्ञाकरणस्य हेतुत्वेनोल्लेखः। अत्र तथाशयेनोल्लेखेऽपि वस्तुतस्तदभावः स्पष्ट एव। एवञ्च प्रागुक्तरीत्या ऽनयोर्व्याप्यव्यापकभावोऽपि नास्माकं गौरिति भावः। एवानेकान्तत्वव्यावृत्तये। तदाह—मुख्येति। "तस्य लोपः" इति सूत्रभाष्योक्तरीतिं भावः। स्पष्टं चेदमत्र। लोपाभाव इति। अनिष्टफलरूपदोषाभाव इत्यर्थः। अन्यत्रैवात्रापि 'तथापि स्यात्' इत्याशङ्कां निरसितुमारोपाभावेन लाघवमाह—तथा हीति। तेषामवयवत्वे हीत्यर्थः। मुख्ये इति। तत्र च तयोरन्तरस्य स्वारसिकत्वादिति भावः। एवं "हलन्त्यम्" इत्यादौ लक्षणाऽपि नेति बोध्यम्। उक्तोदाहरणे तदभावमुपपादयति—न चेति। नहीत्यर्थः। अयम्—श्वा अवयव—मुख्यावयवः। अदोषादिति। तदभावे दोषसामान्याभावादित्यर्थः। एतच्चैतद्ग्रन्थनेनेति

## सरला।

यस्येत्यर्थेन "आदितश्च" इति सूत्रेण श्वश्वाकारस्य समीपे सत्त्वादस्माद्धातोर्विहितस्य क्तस्येडागमनिषेध इति भावः। महासंज्ञेति। एति गच्छति प्रयोगे न निश्चीयते इत् इत्यर्थः। महासंज्ञया लोपसिद्धावपि तस्य साधुत्वाय सूत्रस्यावश्यकत्वमिति न वैयर्थ्यमित्यस्त्येवाह—इक इतीति। मुख्यपक्षे इति। "उभयमिदमनुबन्धेषूक्तमेकान्ता अनेकान्ता इति। किमत्र न्याय्यम्? एकान्ता इत्येव" इति भाष्येण एकान्तपक्षस्यैवानुबन्धविषये मुख्यत्वबोधनादिति भावः। तत्पक्षे हि अनुबन्धानामवयवत्वेन आरोपानपेक्षणेन

"उभे वनस्पत्यादिषु युगपत्" (पा० सू० ६।२।१४०) इति पूर्वोत्तरपदयोराद्युदात्तत्वे कृते "अनुदात्तं पदमेकवर्जम्" ( पा० सू० ६।१।१५८ ) इति शेषनिघातः । पूर्वपदभूतयोस्तनूशची—एतयोरन्त्यस्य पाक्षिकं स्वरितत्वं प्रातिशाख्ये उक्तम्—

---

शब्दरत्नम् ।

दिः । शेषनिघात इति । अस्य तथापीति शेषः । तेनोदात्तौ अनुदात्तौ प्राप्नुत इति

भैरवी ।

आद्युदात्तत्वे कृत इति वनस्पत्यादिगण एव ऊप्रत्ययान्तस्तनूशब्द आद्युदात्तो निपात्यते, "नभ्राड्" इति सूत्रे निपातित 'तत्पुरुषे तुल्य' इत्याद्युदात्तो नपाच्छब्दः, एतयोः समासे समासान्तोदात्तत्वे प्राप्ते 'उभे वनस्पत्यादिषु युगपत्' इत्यनेन पूर्वोत्तरपदयोः प्रकृतिस्वरे सति द्वयोरप्याद्युदात्तत्वप्राप्तिरिति भावः । एवं शचीशब्दः शार्ङ्गरवादिङीनन्तत्वादाद्युदात्तः, पतिश्च डतिप्रत्ययान्तत्वादाद्युदात्तः । तेन-शेषपूरणेन, अनुदात्तावेव प्राप्नुत इत्यर्थो लभ्यते ।

भावप्रकाशः ।

प्रामाण्यादर्थमात्रैवेति च व्यवस्था बोध्या । एवञ्च ह्रस्वग्रहणमनुन्त्रमिति यथाश्रुतमेवेत्याहुः । उभयथाऽपि मम स्यादश्रुतत्वादित्येव सिद्धेऽर्थग्रहणमपि व्यर्थमित्यपास्तम् । ननु अग्रिम 'तनूनपात्' इत्यादि 'निघात' इत्यन्तमूलग्रन्थस्य पूर्वोत्तराभ्यामनन्वयेनासङ्गतत्वापत्तिः । यद्यप्येतदुपपादयति अनेनैन्यवहितेन पूर्वसम्बन्धो घटते तथाप्यन्ते किञ्चिच्छेषपूरणं विनाऽनिर्वाहेणावश्यकतया तत्र तस्य तदैकरूप्यावाप्तावपि न्यैवेत्याह—अस्येत्यादि । एवञ्च वाक्यार्थानिरपि सुसङ्गतो भवत्येवेति भावः । एतेन यथाश्रुतमूलमात्रस्ये ऽध्याहारे गौरवमित्यपास्तम् । तथा सति मध्यग्रन्थस्य स्थितिमाह—तेनेति । शेषपूरणेनेत्यर्थः । प्राप्नुत इति । तावेव प्राप्नुत इत्यर्थः । मूलस्थनिघात इत्यस्याप्ययमेवार्थ इत्यनेन सूचितम् । अयम्भावः—यद्यपि शेषनिघातस्यावग्रहे स्वरीन्याऽधमात्राकालव्यवायरूपायाः "पर. सन्निकर्षः" इति सूत्रबोधितसंहिताया अभावेन "नोदात्त" इति निषेधाप्राप्त्या एकपदीयत्वात् समहिमाश्रय "उदात्तादनुदात्तस्य" इति स्वरित प्राप्त एवेति न तदावश्यकत्वम् ।

"उदात्तपूर्वं नियतं विवृत्या व्यञ्जनेन वा ।
स्वर्यतेऽन्तर्हितं न चेदुदात्तस्वरितोदयम् ॥"

इत्यस्य तु न प्राप्तिः । प्रातिशाख्यमते संहिताया. पदप्रकृतिकत्वेन पदान्तादिपदादिभिर्यत्सन्दधदेकीकुर्वन्नेति रचनां प्राप्नोति सा संहितेत्यर्थकेन पदान्तादिपदादिभिः सन्दधदेति यदेति संहितालक्षणेन पदपाठेऽप्येकपदेऽपि प्रायेण तस्या अभावात् । न च नेदं तदधिकारस्थं, तावताऽपि पूर्वोत्तरप्रातिशाख्यभाष्यसन्दर्भेण विवृतेस्तदधिकारस्थत्वेन तथा व्यवहितमित्युक्तया चास्य पदपाठेऽप्रवृत्तेः । इथं च संहितापाठे एव प्रवर्तते । नन्वेवमस्तु तेन स्वरितः तस्य पुनरनुदात्तत्वं भविष्यति । तथाहि,

उदात्तपूर्वं स्वरितमनुदात्तं पदेऽक्षरम् ।

इत्यनेनानुदात्तभावः "इन्द्रो होता" इत्यादौ पदे एव क्रियते । तत्र तदा स्वरितपाठेऽपि सा संहितैकपद्यागिनी । सर्वत्रैव च पदे एकमुदात्तं स्वरितं वा शिष्टमनुदात्तमित्येतच्छास्त्रसिद्धान्तनिर्वाहाय आद्युदात्तमध्योदात्तान्तोदात्तोदात्तादिस्वरितमध्यस्वरितान्तस्वरितस्वरितद्व्युदात्तयुदात्तमनानुदात्तानां पदेषु एकादशस्वराणां चोपपत्तये "उदात्तपूर्वं स्वरितम्" इत्यादीनि "न चेत्पूर्वं तथा गतात्" इत्यन्तानि चत्वारि तत्र सूत्राणि । मुख्योपयोगस्तु मूलसाधनद्वारा संहितास्वरसाधने । एवञ्च संहितावदवग्रहेऽपि निघातस्यैव श्रवणं स्यादिति तदावश्यकत्वमेवेति वाच्यम् । स्वतन्त्रपदपाठेऽवग्रहे तेनाप्यप्येतेऽपि संहितात्वाभावस्य तुल्य-

सरला ।

वाक्यस्य सामानाधिकरण्यान्वयानुपपत्तिस्तदवस्थैवेति तदुद्धारार्थं तु लक्षणादीनिर्यते । अकाराद्युच्चारणाधिकरणपाठे उकाराद्युच्चारणाधिकरणकालस्वरूपत्व सम्भवति इति न सामानाधिकरण्येनान्वयानुपपत्तिरिति ।

ज्ञायते इति प्रतिज्ञा। "आतश्चोपसर्गे" ( पा० सू० ३।३।१०६ ) इति कर्मण्यङ्। प्रतिज्ञा आनुनासिक्यं येषामिति विग्रहः। एवं च 'प्रतिज्ञासमधिगम्ये प्रतिज्ञाशब्दस्य लक्षणा' इति क्लिष्टं व्याख्यानं नाश्रयणीयम्, "पाणिन्युपज्ञं व्याकरणम्" इत्यादिष्विव लक्षणां विनैव निर्वाहात्। यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं

## शब्दरत्नम्।

यद्यन्यपदार्थे बहुव्रीहिः। न चायमाकारोऽङ्धातोरप्यत्र इत्यदोषात्। प्रतिज्ञेति। प्रतिज्ञानविषय इत्यर्थः। प्रतिज्ञाशब्दस्येति। भावाद्यन्तस्येत्यर्थः। क्लिष्टेति। शक्तिग्राहकव्याकरणस्त्वाच्छन्दस्यैव तदर्थबोधसम्भवे लक्षणाश्रयणं क्लेश इति भावः। लक्षणां विनैवेति। अत्र लक्षणया व्याख्यानं कुर्वताऽपि तत्र लक्षणां विना मदुक्तरीत्यैव व्याख्यातम्। एवं च पूर्वापरविरोधस्तस्येति भावः। न चोभयोर्विधानेऽपि लाघवाद्भावे शक्तिः, कर्मणि लक्षणा, अनुशासनमपि लाक्षणिकार्थानुशासनमेवेति वाच्यम्, "ल कर्मणि" ( पा० सू० ३।४।६९ ) इत्यादीनामपि तथात्वापत्तौ 'तिङां कर्त्रादौ शक्तिः' इति

## भैरवी।

'दोषाभावः' इति प्राग्लिखितमेव, पुनरिह 'इत्यदोषात्' इत्युच्यते इति पौनरुक्त्यमिति चेत्? न पूर्वस्य दोषपदस्यैव प्रतिषेधप्रसङ्गरूपदोषपरत्वमस्य तु दोषसामान्यपरत्वमिति भेदात्।

'प्रतिज्ञानुनासिक्याः' इत्यत्र प्रतिज्ञाशब्दः कर्मबोधकाऽन्त इत्याशयेनाह—प्रतिज्ञानेति। लक्षणावादिमतमुपपादयति—भावेति। लक्षणेति क्लिष्टमित्यनेन लक्षणास्वीकार एव क्लेश इति प्रतीयते स तु न युक्तः, लक्षणाया उच्छेदापत्तेरतो भावार्थमाह—शक्तीति। मूले—पाणिन्युपज्ञमिति। आद्यर्थकोपशब्दपूर्वकाज्ज्ञाधातोः कर्मण्यङ्। पाणिनेरुपज्ञेति कर्तृषष्ठ्या समासः। पाणिनिकर्तृकाद्यज्ञानविषयभूतमित्यर्थः। तत्र दृष्टान्ते। उभयोः भावकर्मणोः। तथात्वापत्तौ लाक्ष

## भावप्रकाशः।

भावः। एतेनादोषादिति पुनरुक्तमित्यपास्तम्। विषय इति पाठस्तस्यानर्हत्वात्। एतेनोदासीनं च नोपेक्षाबुद्धिविषयमिति वदन् रत्नाकरः प्रत्युक्तः। नन्वेव लक्षणा वृथेत्यत आह—भावेति। प्रतिज्ञया समधिगम्यमानुनासिक्यमेषामिति केनचिदुक्तं मध्यमपदलोपिनित्यव्यधिकरणबहुव्रीहिं लक्षणाभावेन सकल्पैव गुरुणोक्तमिति बोध्यम्। नन्वेव लक्षणोच्छेदाऽत आह—शक्तीति। एवञ्च शक्त्यभावे सा भावत्वस्यैवेति भावः। ननु तदद्युक्तत्वादिनोभयत्रापि तुल्यार्थाङ्गीकारात् दृष्टान्तासङ्गतिः, तदुक्तिरफला च, दोषदानेनैवेष्टार्थसिद्धेरत आह—भवेति। प्रतिज्ञाशब्दे इत्यर्थः। तत्र-दृष्टान्ते। मदुक्तेति। उपज्ञ आद्यर्थं, कर्मण्यङ्, उपज्ञायत इत्युपज्ञा पाणिनेरुपज्ञेति कर्तृषष्ठ्या समासः। पाणिनिकर्तृकाद्यज्ञानविषयं व्याकरणमिति शब्दोऽर्थः इत्येवं दीक्षितोक्तरीत्येत्यर्थः। पूर्वापरेति। उक्तयुक्त्या तत्र तथा व्याख्यानेन दृष्टान्तसङ्गतिर्वेत्यर्थः। विरोध इति। विरोधोऽपीत्यर्थः। एवञ्च तदुक्तिसाफल्यमिति भावः। एतेन भावकृतादर्शभाष्यनियपास्तम्, क्लिष्टत्वात्, उक्तरीत्यैव निर्वाहे वृत्तिद्वयकल्पनागौरवाच्चेति। ननु प्राचीनमते यथोक्तेऽपि प्रकृत्युपस्थितत्वकृतलाघवेनैतदनुरोधेन [illegible] एवान्यथा नीयतामिति न विरोधो न वा दृष्टान्तत्वमिति मूलं चिन्त्यमिति सन्नाह—न चोभयोरिति। भावकर्मणोरित्यर्थः। शास्त्रानर्थक्यमपि नेत्याह—अन्विति। एतेन शक्यार्थानुशासनव्यवच्छेदः। तथात्वेति। लाक्षणिकार्थानुशासनत्वापत्तावित्यर्थः। एतेन न हि विधानमात्रेण तत्र शक्तिः, कृद्योगषष्ठ्या कर्तृकर्मणोर्विधानेऽपि प्रचुरतरप्रयोगेण सम्ब

## सरला।

मुख्येऽवयवविन्यैवान्यपदार्थे बहुव्रीहिरिति नैतत्फलं सम्भवति। तदाह—तदा हि इत्यादिना भावाद्यन्तस्येत्यर्थ इति। कर्मण्यङोऽसामञ्जस्यादिति भावः। व्याख्यातमिति। पाणिनिसमवे

परिभ्रष्टस्तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक् स्थित इत्यनुमीयत इति भावः ।

ननु रलयोरिति न्यून टकारस्यापि मध्यगतत्वादित्यत आह—प्रत्याहारे-ष्विति । व्यवह्रियन्ते इति । प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्रेति बाहुलकाद-धिकरणे घञ् । यद्यपि योगमात्रमकारादिसञ्ज्ञास्वतिप्रसक्तं तथापि योगरूढिरिति

शब्दरत्नम् ।

सिद्धान्तासङ्गत्यापत्ते व्याकरणस्याभियुक्तोक्तशक्तिग्राहकत्वस्य भङ्गापत्तेश्च ॥

टकारस्यापीति । अत्र यद्वक्तव्यं तदन्यत्रोक्तम् । बाहुलकादिति ।

भैरवी ।

णिकार्थबोधकत्वापत्तावित्यर्थ । अभियुक्तोक्तेति ।

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

इति वृद्धोक्तेत्यर्थ । अत्र—रप्रत्याहारविषये । अन्यत्र—लघुशब्देन्दुशेखरे । 'लण्सूत्रस्थाकारो यद्यनुनासिकः स्यात्तदा "अनो [illegible]
व्यवहरेत् । एवं यण्घटि [illegible]
प्रामाणिकम्' इत्यादि त [illegible] इत्यत्र रत्यव सिद्धे लकारोच्चारणं लण्सूत्रस्थाकार-निष्पाद्यप्रत्याहारनिर्देशस्य क्वचिदनाश्रयणमिति ज्ञापनाय । तेन शुल्कमाचष्टे शुल्कयति, शुल्क-यतीति शुल् इत्यत्र "रात्सस्य" इति नियमाप्रवृत्त्या संयोगान्तलोपस्य प्रवृत्तिसिद्धिः । अत एव "रदाभ्याम्" इत्यत्र "रोः सुपि" "वनो र च" इत्यनयोश्च न दोषः । ■ चानयोरकार उच्चारणार्थो न त्वनुनासिक इति भ्रमितव्यम्, निषेधविषये इत्सञ्ज्ञां विना निवृत्त्यसिद्धेः । "रदाभ्याम्" इति सूत्रे प्रत्याहारस्य ग्रहणे "प्रफुल्त" इत्यत्र "आदितश्च" इतीट्प्रतिषेधाल्लकारात्परस्य तस्य नत्वा-पत्तिः । यदपि यण्घटितसूत्रेषु लाघवाय यप्रत्याहारनिर्देशमेव कुर्यादिति तदस्त्यवीय, "इणो यण्" "इग्यणः सम्प्रसारणम्" इत्यत्र लाघवाभावात् । "इको यण्" इत्यत्र मात्रालाघवसत्त्वे ऽपि 'योऽचि' इत्युक्तं प्रक्रियागौरवमस्त्येव ।

किञ्च लण्सूत्रस्थाकारनिष्पन्नप्रत्याहारनिर्देशस्य क्वाचित्कत्वं यप्रत्याहारेणैव निर्दिशेदित्ति-धादिनाऽपि वाच्यम् । अन्यथा महाशूद्री' इत्यत्र 'यथोपधात्' इति प्रतिषेधस्य प्राप्त्या "जातेः" इति सूत्रविहितङीषभावस्य 'येये' इत्यनेन यकारादिचतुष्टयादंशघटितानिष्टरूपाणामिष्टरू-पाभावानां चापत्तेः । ■ चास्यानुनासिकत्वे हल्प्रत्याहारेऽनुनासिकाकारस्य ग्रहणापत्तिः, हल्प्रत्याहारसिद्धे प्रागव्यपदार्थनिष्पत्त्यभावेन "उपदेशेऽच्" इत्यस्यार्थबोधाभावेनास्याकारस्य-त्वानापत्तेः । इष्टापत्तिस्तु कर्तुमशक्या, 'मामांश्चायस्व' इत्यत्र अनधातो क्विपि दीर्घे तत्प्रकृ-तिकसम्बुद्धौ नलोपाभावे 'नश्छवि' इति रुत्वे "अत्रानुनासिक" इत्यनुनासिकपक्षेऽनुस्वाराप-

भावप्रकाश ।

शक्त्या तत्र लक्ष्यार्थस्वीकारादिति तच्छेषभूतमपि तदुक्तमपास्तम् । अभियुक्तेति । 'शक्तिग्रहं व्याकरणोप' इत्यादिनोक्त भावः ।

अत्र यदिति । रप्रत्याहारविषये यद्वक्तव्यं खण्डन तच्छब्देन्दुशेखरे उक्तमित्यर्थः । विस्तरस्तु मत्कृत-तत्खण्डनमण्डनादवसेय । यत्तु बाहुलकस्यागतिकगतिश्चलोपदेशमन्यायेऽपि स्वयमेवोक्तत्वेनात्र तदङ्गीका-

सरला ।

बोधज्ञानविषयो व्याकरणमिति शक्त्यैव व्याख्यानमित्यर्थ । अभियुक्तोक्तेति । अस्य—

' शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥" इति इति शेष. ।

अन्यत्रेति । लघुशब्देन्दुशेखरे । तत्रस्थटिप्पणमवगन्तव्यम् ।

भाव: । प्रत्याहाराश्चैकचत्वारिंशदिति प्राञ्चः । चतुर्दशसूत्रीस्थैर्हल्भिरिङ्भिः कृत्वा

---

शब्दरत्नम् ।

भावघनन्तादर्शआद्यजित्यपि बाहुल्कादविशिष्टमिति भावः । एकचत्वारिंशदिति ।

भैरवी ।

चेरिति वाच्यम् ; लण्सूत्रस्याकारो नानुनासिकत्वविशिष्टः श्रूयते, किन्तु कार्यार्थिन्तथा प्रतिज्ञायत इति वाच्यम् , तच्च कार्यं प्रत्याहारसिद्धिरूपम्, तच्चेत्त्वं विनाऽनुपपन्नमिति हल्प्रत्याहारसिद्धिकाले तस्योक्तरीत्या इत्संज्ञाया प्राप्त्यभावेऽपि "मोऽनुस्वारः" इति सूत्रगतवाक्यार्थनिष्पत्तिकाले लण्सूत्रस्याकारस्येत्त्वप्रवृत्तौ प्रतिबन्धकाभावात्तत्र 'तस्यलोप' प्रवृत्तेर्दुर्वारत्वात् । तावताऽपि मयदुक्तबलवत्तरलोपप्रतियोगित्वरूपहेतुमत्तायाः सत्त्वात्तस्य प्रत्याहारे ग्रहणाभावस्य सिद्धेः ।

[illegible]

यदपि 'लण्' सूत्रस्याकारस्यानुबन्धत्वे तृतीयहेतोरव्यापकत्वापत्तिरूपदोषोद्भावनं,तदपि न मनोरमम्,"अइउण्" इत्यादौ सन्धिकार्यं प्राप्नोतीति शङ्काया वर्णोपदेशकाले अजादिसंज्ञाया अनिष्पादात्सन्धिनेति परकृतसमाधानस्य खण्डनावसरे'वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्तमानानां यणादीनां 'सुध्युपास्य'इत्यादौ तत्स्य इगोद्देश्यतावच्छेदकाक्रान्ते वर्णोपदेशेऽपि प्रवृत्तेर्दुर्वारत्वादिति यथाऽभिहितं, तथा हल्प्रत्याहारनिष्पत्त्युत्तरमच्प्रत्याहारे निष्पन्ने भवत्वादिशब्दोत्तरे यथा"उपदेशे"इति सूत्रस्य प्रवृत्तिर्भवति,तथोद्देश्यतावच्छेदकरूपाक्रान्ते "लण्सूत्रस्याकारेऽपि तस्य प्रवृत्तिर्दुर्वारेति प्रत्याहारग्रहणाभावे साध्ये यत्पक्षतावच्छेदकमनुबन्धत्वं तद्व्यापकस्य बलवत्तरलोपप्रतियोगित्वरूपहेतोरस्त्येव । हल्प्रत्याहारसिद्धेः प्राक् पक्षे परं हेतोः पक्षावृत्तित्वेऽपि न क्षति, अव्याप्यवृत्तेरपि कपिसंयोगस्य वृक्षे व्यधिकरणस्यानुमापकताया दर्शनात् । यदपि 'प्रत्याहारेऽनुबन्धानाम्'इत्यादिनाऽच्प्रत्याहारेऽनुबन्धानां ग्रहणशङ्का कृता ननु हल्प्रत्याहारे, यदि"लण्"सूत्रस्याकारोऽनुनासिकः स्यात्तदा हल्प्रत्याहारेऽकारस्यानुनासिकस्य ग्रहणशङ्काऽपि कर्तुमुचितेति तदकरणान्न्यूनतापत्तिः, अतोऽस्यानुनासिकत्वमप्रामाणिकमिति भाषितम्, तदपेशलम् , तत्रत्याच्ग्रहणस्योपलक्षणत्वात् । यथाश्रुतार्थकत्वे भवन्मतेऽपि उक्तप्र-

[illegible]

वाच्यम्,हल्प्रत्याहारे एवानुबन्धाग्रहणं तेन भाष्येण साध्यते इति भ्रमो "हयवर "इत्यादिसूत्रव्याख्यानोत्तरं शङ्कासमाधानयोःकरणात्मा भूदित्याशयेन तत्र"अइउण्"इत्यादिसूत्रचतुष्टयस्य लेखनात् । हल्प्रत्याहारसाधकसूत्रव्याख्याने मध्ये तथा शङ्कासमाधानयो करणेन हल्प्रत्याहारेऽपि तैर्हेतुभिरनुबन्धाग्रहणसाधनस्याभिमतत्वमिति कल्पनसम्भवादिति कयटानुयायिनः ।

यत्तु बाहुल्यकल्पनापेक्षया भावघनन्तप्रत्याहारशब्दादर्शआद्यजिति व्याख्यानं, तद्दूषयति—भावेत्यादिना । अविशिष्टमिति । गणविशेषे पाठकल्पने वृत्तिद्वयकल्पने गौरवमित्यस्य स्पष्टत्वात् ।

भावप्रकाशः ।

तानौचित्येन भावघनन्तादर्शआद्यच् न्याय्यः । अन्यथा पूर्वापरविरोधापत्तेरिति सच्चनकुतूहलसारादयः, तन्न, तुल्यत्वादित्याह—भावेति । अपिना "अकर्त्तरि च" इति चादसंज्ञायामपि घञ् इत्यस्योपदेशपरे गुरूक्तस्य समुच्चयः । यत्तु "अकर्त्तरि च" इति सञ्ज्ञात्वसत्त्वात् घञ्सम्भवः, तदभावाभ्युपगमे तु बाहुलकादसंज्ञायामपि, मनोरमाया अप्यत्रैव तात्पर्यमिति सुखबोधिन्यामुक्तम् , तन्न, योगरूढत्वेन सञ्ज्ञात्वाभावात् तदर्शो

अष्टाध्याय्यां व्यञ्जनान्ता एकचत्वारिंशदिति तस्यार्थः । तेन सुप्तिङादीनां, रप्रत्याहारस्य, "चयो द्वितीया" इति वार्तिकस्थचयूप्रत्याहारस्य चाधिक्येऽप्यदोष । यत्तु "अम ताडु" इति, "यमिर्धमन्तेष्वनिडेर इष्यते" इति च अम् वार्तिककृता व्यवहृत इत्याहु, तद्भ्रमसाऽभिधानम् । आद्यस्योणादिसूत्रत्वात् , द्वितीयस्य व्याघ्रभूतिकारिकास्थत्वात् , इत्यास्तां तावत् । एष च संख्यानियमो नातीवोपयुज्यत इत्युपेक्षित ।

---

शब्दरत्नम् ।

एकस्मान् ङञणवटा, द्वाभ्यां ष, स्त्रिभ्य एव कणमा स्युः ।<br>
ज्ञेयौ चयौ चतुर्भ्यो, र पञ्चभ्य , शलौ षड्भ्य ॥

इति तदुक्तेरिति भाव ।

भैरवी ।

एकस्माङ्ङञणवटा इति । ङञणवटा एकस्मात्पर ग्राह्या इत्यर्थ । एवमग्रेऽपि । ङ्णणवटा इत्यत्र णकार प्रथमसूत्रस्थो ग्राह्य । अणिति यथा । इण्प्रत्याहारस्तु न तत्र, "अचिश्नु" इति सूत्रे संगृह्य ग्रहणात् । 'आदिरन्त्येन सह" इतिसूत्रस्यानित्यत्वेनैकस्मादित्यादि लभ्यते, तत्र मानन्तु "इको झल्" "अज्झनगमा सनि" इति सूत्रद्वयारम्भ एव । यदि अन्त्येन इता सह यस्य यस्यादेरुच्चारणमम्भवस्तत्र सर्वत्र प्रत्याहार इडपि प्रत्याहार स्यात्, तथा च 'आर्द्धधातुक' इत्यनेन धातोराक्षेपे इडन्तस्य धातो सनि ' इङश्च' इत्यनेन गाऽऽदेशे सूत्रद्वयवैयर्थ्यं स्पष्टमेवेति । तदुक्तेरिति । प्रक्रियाकारोक्तेरित्यर्थ ।

भावप्रकाश ।

बहुलसम्बन्धाभावाच्च । "करणाधिकरणयोश्च" इति तु ल्युटोऽभावाय । पुनर्बाहुल्काश्रयणावश्यकत्वाच्चेति विक । तदाह—अविशिष्टमिति । अत्रापि तस्याकृतिगणत्वाद् वृत्तिद्वयकल्पनापचेश्चार्गानिकगतित्वम् । एवं भावसमुदायरूपस्य यत्नासम्बन्धेन ल्युडभावाय तस्यावश्यकत्वेन संज्ञायां घेति वक्तुमौचित्येन च गुरुत्वादेऽपि तत्त्वमिति भाव । मूलोक्तस्य तथात्वस्य तत्राख्यातुगुरुत्वे बीजं ध्वनयितुं तत्र तदुक्त हेतुमाह—एकस्मादिति । ङ्मणवटा अनुबन्धा एकैकस्मादेवादिवर्णादग्र उच्चारिता सन्त एकैकमेव प्रत्याहार जनयन्ति नानियमेनेत्याविरर्थ । अत्राद्ये आद्यग । द्वितीये द्वितीय इति बोध्यम् । एङ् । यञ् । अण् । छव् । अट् । अष् झष् २ । अक् इक् उक् ३ । अण् इण् यण् ३ । अम् यम् ङम् ३ । अच् इच् एच् ऐच् ४ । यय् मय् झय् खय् ४ । यर् झर् खर् चर् शर् ५ । अश् हश् वश् जश् झश् बश् ६ । अल् हल् वल् रल् झल् शल् ६ इति तदुदाहरणानि बोध्यानि । "श्वास इडड्" इत्यादिज्ञापनात् "आदिरन्त्येन" इत्यस्यानित्यत्वेनेद लभ्यत इति स्पष्ट इडप्रत्याहारत्ने । तदुक्तेरिति । प्रक्रियाकृदुक्तेरित्यर्थ । मौलचयूप्रत्याहारस्यैतदग्रे अप्रत्याहारस्याधिक्येऽप्यदोष इति गुरूक्तिस्तु न दुष्येत्युपसंहरति—मूले आस्तां तावदिति । अत एव आहुरित्युक्तं तन्नेति च नोक्तम् । एतत्र यत्तित्यादिर्मूलग्रन्थस्तत पूर्वं प्रकाशानुवाद इति बोध्यम् ।

सरला ।

एकस्मादिति । ङञणवटा अनुबन्धवर्णा एकस्मादेवादिवर्णात्परे उच्चारिता एकैक प्रत्याहार जनयन्ति । षकारोऽनुबन्धो द्वाभ्यामादिवर्णाभ्यां पर उच्चारित प्रत्याहारद्वयमारभते, एव कणमा अनुबन्धास्त्रिभ्य आदिवर्णेभ्य परे उच्चारिता प्रत्येक त्रीन् त्रीन् प्रत्याहारानारभन्ते । एवमग्रेऽपि बोध्यम् । येषोदाहरणानि—एङ् "एङ पदान्तादति" । यञ् "अतो दीर्घो यञि" । अण् "ढ्रलोपे पूर्वस्य दीर्घोऽण" । य णकारो "अइउण्" सूत्रस्थोऽवगन्तव्य । छव् "नश्छव्यप्रशान्" । अट् "शश्छोऽटि" । अष् झष् "एकाचो बशो भष् झषन्तस्य स्ध्वो" । उभयोरपि प्रत्याहारयोरेकत्रैव सूत्रे उपादानम् । अक् इक् उक् "अक सवर्णे दीर्घ" "इको यणचि" "उगितश्च" । अण् इण् यण "अणुदित्सवर्णस्य चाप्रत्यय" "इण षीध्वंलुङ्-

"ऊकालोऽज्झ्रस्वदीर्घप्लुतः" ( पा० सू० १।२।२७ )॥ ह्रस्वदीर्घप्लुत इति समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । वां काल इवेति । फलितार्थकथनमिदम् । विग्रहस्तु वः कालो यस्येति बोध्यः । ऊशब्देन स्वोच्चारणकालो लक्ष्यते । आद्ये इति । "निपाता आद्युदा-

शब्दरत्नम् ।

सौत्रं पुंस्त्वमिति । यद्यपि इतरेतरयोगेऽपि सौत्रमेकवचनं वक्तुं शक्यं, तथापि "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति तत्र तत्र वार्त्तिकोक्तेर्लिङ्गस्य लौकिकत्वात् व्यत्ययकल्पनमेवोचितं, न ▮ शास्त्रीयवचनव्यत्ययकल्पनमिति भावः । फलितार्थेति । ऊपदेन स्वोच्चारणकालसदृशलक्षणया कालशब्देन समानाधिकरणबहुव्रीहौ तत्, फलतीति भावः । वां काल इति तु न विग्रहो व्यधिकरणत्वादत आह—विग्रहस्त्विति । काल इति आत्याख्यायामेकवचनम् । स्वोच्चारणकाल इति । स्वोच्चारणकालसदृश इत्यर्थः । सादृश्यमूलकं कालयोरभेदाध्यवसाय तु यथाश्रुतमेव साधु ।

भैरवी ।

पुंस्त्वैकवचनयोरेकस्य सौत्रत्वाश्रयणे न विरोध इत्याशयेन शङ्कते—यद्यपीति । ऊपदेनेति । अस्य बहुव्रीहावित्यत्रान्वयः । लक्षणयेति । ऊपदस्येत्यादिः । अभेदाध्यवसायः-अभेदारोपः । अत एव 'मृगचपला' इत्यत्र पुंवद्भावः । यथाश्रुतमेव—सदृशे लक्षणां विनेव ।

भावप्रकाशः ।

यत्तु पुंस्त्वैकवचनयोः सौत्रत्वे न विरोध इति मन्यास्तत्राचामनुरोधेनेति ध्वनयन्नाह—यद्यपीति । तत्र तत्र-बहुषु स्थलेषु । तदिति । पुंस्त्वेत्यर्थः । वचनेति । एकवचनादीत्यर्थः । एवञ्च तयोस्सत्त्वे विरोधः स्पष्ट एवेति भावः । ऊपदेनेति । बहुव्रीहावित्यत्रान्वयः । सदृशलक्षणयेति । तत्र लक्षणयेत्यर्थः । ऊपदस्येति भावः । सामानाधिकरण्ये हेतुरयम् । कालशब्देनेति । तेन चेत्यर्थः । मिथ इति शेषः । तत्-परममूलैकवाक्यबोध्य भिन्नार्थरूपम् । एवञ्चाभेदे शाब्दे भेदः फलतीति परममूल तत्प्रदर्शनमेव न विग्रहप्रदर्शकमिति भावः । यत्तु तथापि सूत्रे कालपदद्वयश्रवणादसंगताह मूले फलितेति, तत्र, बहुव्रीहादिवद् निर्वाहात् । उच्चारणकालतुल्यकालपरकालपदेन वा कालो यस्येति बहुव्रीहिसम्भवात् । तस्यापि परम्परासम्बन्धेन सम्बन्धित्वाच्च । तद्ध्वनयन् तथैवाह—वामिति । यत्तु स्वोच्चारणकाललक्षणायामप्यनिर्वाहान्मूल चिन्त्यमिति जगन्नाथस्तदेव चिन्त्यमित्याशयेनाह—स्वोच्चारणेति । वस्तुतो यथाश्रुतमपि मूलं सम्यगेवेत्याह—सादृश्येति । अभेदेति । अभेदारोपे इत्यर्थः । एतेन नामार्थयोरभेदेनान्वयो न, अभेदेन तु नान्वित एवेत्यपि तदुक्तमपास्तम् ।

सरला ।

स्त्रिया धोऽज्झाद्" "वनो वणचि" । अम् यम् कम् "पुमः खय्यम्परे" "हलो यमां यमि लोपः" "ङमो ह्रस्वादचि ङमुण्नित्यम्" । अच् इच् एच् ऐच् "अचो रहाभ्यां द्वे" "इच एकाचोऽम्प्रत्ययवच्च" "वृद्धिरेचि" "वृद्धिरादैच्" । यय् मय् झय् खय् "अनुस्वारस्य ययि परसवर्णः" "मय उञो वो वा" "झयो होऽन्यतरस्याम्" "पुमः खय्यम्परे" । यर् झर् खर् चर् शर् "यरोऽनुनासिकेऽनुनासिको वा" "झरो झरि सवर्णे" "खरि च" "अभ्यासे चर्च" "शश्छोऽटि" । अश् हश् वश् झश् जश् बश् "भोभगोअघोअपूर्वस्य योऽशि" "हशि च" "नेड्वशि कृति" "झलां जश् झशि" "एकाचो बशो" । अल् हल् वल् रल् झल् शल् "अलोऽन्त्यस्य" "हलोऽनन्तराः" "आर्धधातुकस्येड्वलादेः" "रलो व्युपधाद्धलादेः सश्च" "झलां जश्" "शल इगुपधादनिटः क्सः" । इत्युदाहरणानि । अत्र सर्वेषां प्रत्याहाराणामष्टाध्याय्यामेकैकं सूत्र सगृहीतम् । इतोऽन्यान्यपि सूत्राणि यथासम्भवं तत्प्रत्याहारान्यष्टाध्यायीतोऽवगन्तव्यानि ।

व्यत्ययकल्पनमिति । सौत्रत्वात् साक्षाच्छास्त्रबाधकल्पनापेक्षया लौकिकलिङ्गबाधकल्पनस्योचितत्वादिति । सदृश इत्यर्थ इति । मूलकृता ऊपदस्य उकाराद्युच्चारणाधिकरणकाले लक्षणास्वीकारेऽपि तस्य

ता" ( फि० सू० १० पा ४ ) इत्याकार उदात्त, यच्छब्दस्तु फिट्सूत्रेण । अर्वा ङ् इति । अकारोऽनुदात्त ।

तस्यादित ( पा० सू० १।२।३२ )॥ अतन्त्रमिति । "उपेयिवान्" इत्यत्रान-सर्ग इवाविवक्षितमित्यर्थ । ननु तत्र "ईयिवांसमतिस्रिध" इत्यादिप्रयोगदर्शनाद्-विवक्षाऽस्तु, इह त्वविवक्षायां प्रमाण किम् ? इति चेल्लक्ष्यदर्शन प्रातिशाख्यादिक चेति गृहाण । तथा हि—'येऽरा' इत्यत्रैकार, 'तनूनपात्' 'शचीपतिम्' इत्यत्र पद-पाठे ऊदीतौ चार्धोदात्तौ इति सकलबह्वृचप्रसिद्धम् । तनूनपाच्छचीपतिशब्दया

शब्दरत्नम् ।

फिट्सूत्रेणेति । अन्तोदात्त इत्यर्थ । जस सुप्त्वादनुदात्तत्वम्, "एकादश उदात्तन" (पा०सू०८।२।५) इत्येकार उदात्त इति भाव । अनुदात्त इति । फिट्स्वरेणा न्तस्योदात्तस्य शेषनिघातेनेति भाव । अभिमुखवाच्यव्युत्पन्न प्रातिपदिकम् 'अर्वाङ्' इति ।

अविवक्षितमित्यर्थ इति । इद च—वक्ष्यमाण प्रातिशाख्यं यच्छाखाया,—तच्छा-खास्थमन्त्रादिकोदाहरणविषयम् । तनूनपाच्छचीपतिशब्दयोरिति । अस्य यद्यपीत्या-

भैरवी ।

आद्युदात्त इत्यस्यानन्तर फिट्स्वरेणेत्युपादाने आद्युदात्त फिट्स्वरेणेत्यर्थ प्रतीयेत तथा चानुपपत्ति तस्यान्तोदात्तत्वविधायकत्वादत आह—अन्तोदात्त इति । अत्राङ्शब्दाद्या कारस्यानुदात्तत्वमुपपादयति—फिडित्यादिना । अव्युत्पन्नमिति । फिट्स्वरप्रवृत्तयेऽभिहितम् । तत्र किम्मानमिति चेत् ? 'आङभिमुख' इति वेदभाष्योक्तिरेव ।

इस्वग्रहणमतन्त्रमित्यनेन स्वरितार्द्धमात्रस्याद्यस्योदात्तत्वविधायकमिति प्रतीयते, एवञ्चा सङ्गति, दीर्घादावप्यर्द्धमात्राया उदात्तत्वस्य लोके दर्शनात् । अस्य शास्त्रस्य सर्वशाखासा धारण्येन सर्वोपकारकव्याख्यानस्यौचित्यात्, 'अर्द्धह्रस्वशब्दोऽर्द्धमात्राया रूढ" इति भाष्यविरोधश्चेत्यत आह—इदमिति । इदम् अविवक्षितमित्यादिकथनम् । एभ्यदर्शनमित्यनेन बोधितमर्थं दर्शित 'येऽरा' इत्यादि । तत्र तनूनपाच्छचीपतिशब्दयोरित्यादिना शङ्कामन्थ इति प्रतीयते, तदसङ्गति, शङ्काबोधकशब्दानुपादानादत आह—अस्येति । अस्य ग्रन्थस्येत्यर्थ ।

भावप्रकाश ।

अर्थ इति । उदात्त इति मात्रानुषक्तस्येति भाव । मूले न्यूनता परिहरति—जस इति । अनु दात्तत्वमुपपादयति—फिडिति । फिट्स्वरविधायकेन 'फिषोऽन्त उदात्त' इत्यनेनेत्यर्थ । एवमग्रे मूले च बोध्यम् । अन्तेति । 'अर्वाङ्' इत्यस्येति भाव । ननु तस्य व्युत्पन्नतया फिट्स्वराप्राप्तिरत आह—अभिमुखेति । "अर्वाङभिमुखे" इति वेदभाष्योक्तेरिति भाव । अव्युत्पन्नमिति । पाणिनेरव्युत्पत्ति पक्षस्यैवेष्टत्वादिति भाव । एतेन 'सर्वनाम् अवति' इत्यादिदण्डाद्युक्ति प्रत्युक्ता । यत्तु लोकानां दीर्घादावप्यर्धमात्राया एवोदात्तत्वदर्शनेन सकललोकवेदसाधारण्येनात्र कर्कशालास्थलक्ष्यागा तत्प्राति शाख्यवचनै सिद्धत्वेन च तदन्यविषयत्वस्य वक्तुमौचित्येन व्यपदेशकल्पनासङ्गति । न च सर्वत्रास्य सर्वप्रातिशाख्यैकवाक्यता सम्भवति । एवञ्च मूलादिक चिन्त्यम् । अत एवार्धह्रस्वशब्दोऽर्धमात्राया रूढ इति भाष्योक्ति । एवञ्च ह्रस्वग्रहणस्य मात्रापरत्व न तु स्वशास्त्रसङ्केतितपरत्वमिति योगोऽपि सम्भवतीति मगन्नाथ, तदाशयानवबोधेनायुक्तमिति ध्वनयितुमाह—इदञ्चेति । अविवक्षितमित्यर्थादिकथन चेत्यर्थ । वक्ष्यमाणमिति । मूलकृतेति भाव । विषयमिति । विषयकमित्यर्थ । एवञ्चास्यार्थादिकथनस्य विशेष-विषयत्वेऽप्यत्र मूलकृतोऽपि तथैवेष्टम् । अत एव परममूलेऽतन्त्रमित्येवोक्तम् । तस्य च तत्पदयुक्तग्रहण स्वशास्त्र सङ्केतितरूपेणाबोधक किन्त्वर्धमात्रामात्रबोधकमित्यर्थ । एवञ्च तदुक्तदोषो नेति भाव । मान्यास्तु—अविवक्षितमिति अनुवादानुवाद इत्यर्थ । एवञ्च दीर्घप्लुतयोरप्यर्धोदात्तबोधकमर्धशब्दो न समांशवाची किं-त्ववयववाची । स च कचिद्दे समास क्वचिद्देऽर्धमात्रा तत्तत्प्रातिशाख्यानुरोधेनेति, लोके सर्वत्र भाष्य

"उभे वनस्पत्यादिषु युगपत्" (पा० सू० ६।२।१४०) इति पूर्वोत्तरपदयोराद्युदात्तत्वे कृते "अनुदात्तं पदमेकवर्जम्" ( पा० सू० ६।१।१५८ ) इति शेषनिघातः । पूर्वपदभूतयोस्तनूशाची–एतयोरन्त्यस्य पाक्षिकं स्वरितत्वं प्रातिशाख्ये उक्तम्—

शब्दरत्नम् ।

दिः । शेषनिघात इति । अस्य तथापीति शेषः । तेनोदात्तौ अनुदात्तौ प्राप्नुत इति

भैरवी ।

आद्युदात्तत्वे कृत इति वनस्पत्यादिगण एव ऊप्रत्ययान्तस्तनूशब्द आद्युदात्तो निपात्यते, "नभ्राड्" इति सूत्रे निपातित 'तत्पुरुषे तुल्य' इत्याद्युदात्तो नपाच्छब्दः, एतयोः समासे समासान्तोदात्तत्वे प्राप्ते "उभे वनस्पत्यादिषु युगपत्" इत्यनेन पूर्वोत्तरपदयोः प्रकृतिस्वरे सति द्वयोरप्याद्युदात्तत्वप्राप्तिरिति भावः । एवं शचीशब्दः शार्ङ्गरवादिङीनन्तत्वादाद्युदात्तः पतिश्च डतिप्रत्ययान्तत्वादाद्युदात्तः । तेन-शेषपूरणेन, अनुदात्तावेव प्राप्नुत इत्यर्थो लभ्यते

भावप्रकाशः ।

प्रामाण्यादर्थमात्रेणेति च व्यवस्था बोध्या । एवञ्च हस्वग्रहणमतन्त्रमिति यथाश्रुतमेवेत्याहुः । उभयथाऽपि मम स्यादश्रुतत्वादित्येव सिद्धेऽर्थद्वयमपि व्यर्थमित्यपास्तम् । ननु अग्रिम 'तनूनपाद्'इत्यादि 'निघात इत्यन्तमूलग्रन्थस्य पूर्वोत्तराभ्यामनन्वयेनासम्बद्धप्रलपितत्वापत्तिः । यथाश्रुतेनदुपपादयति क्रमेणेत्यवतरणेन पूर्वसम्बन्धो घटते तथाऽप्यन्ते त्रिविक्रमेणेपूरण विनाऽभिवाञ्छितावश्यकतया तत्र तस्य तदेकरूप्याभावादावर्त्तयैवेत्याह—अस्येत्यादि । एवञ्च शब्दाद्यर्थितिरपि सुलभो भवत्येवेति भावः । एतेन यथाश्रुतमूलसामञ्जस्येऽध्याहारे गौरवमित्यपास्तम् । तथ सति मध्यग्रन्थस्यान्तिममाह—तेनेति । शेषपूरणेनेत्यर्थः । प्राप्नुत इति । तावेव प्राप्नुत इत्यर्थः । मूलस्थनिघात इत्यस्याप्ययमेवार्थ इत्यनेन सूचितम् । अयम्भावः—यद्यपि शेषनिघातस्यावग्रहे स्वरीन्याऽधमात्राकालव्यवायरूपायाः "परः सन्निकर्षः" इतिसूत्रबोधितसंहिताया अभावेन "नोदात्त" इति निषेधाप्राप्त्या एकपदीयनाद्वृत्तसंहितामादाय "उदात्तादनुदात्तस्य" इति स्वरितः प्राप्त एवेति न तदावश्यकत्वम् ।

"उदात्तपूर्वं नियतं विवृत्या व्यञ्जनेन वा ।
स्वर्यतेऽन्तर्हितं न चेदुदात्तस्वरितोदयम् ॥"

इत्यस्य तु न भाति । प्रातिशाख्यमते संहितायाः पदप्रकृतिकत्वेन पदान्तादपदादिभिर्यत्सन्धद्वैकीकुर्वन्ति रचना प्राप्नोति सा संहितेत्यर्थकेन पदान्तात्पदादिभिः सन्दधदेति यत्नेति संहितालक्षणेन पदपाठेऽप्येकपदेऽपि प्रायेण तस्या अभावात् । न च नेदं तदधिकारस्थ, तावताऽपि पूर्वोत्तरप्रातिशाख्यभाष्यसन्दर्भेण विवृतैस्तदधिकारस्थत्वेन तथा व्यवहितमित्युक्त्या चास्य पदपाठेऽप्रवृत्तेः । इथा च संहितापाठे एव प्रवर्तते । नन्वेवमस्तु तेन स्वरितः तस्य पुनरनुदात्तत्वं भविष्यति । तथाहि,

उदात्तपूर्वं स्वरितमनुदात्तं पदेऽक्षरम् ।

इत्यनेनानुदात्तमंशः 'इन्द्रो होता' इत्यादौ पदे एव क्रियते । तत्र तदा स्वरितपाठेऽपि सा साहनोपयोगिनी । सर्वत्रैव च पद एकमुदात्तं स्वरितं वा शिष्टमनुदात्तमित्यैनष्टाह्लासैद्धोत्सर्गनिवाहाय आद्युदात्तमध्योदात्तान्तोदात्तोदात्तादिस्वरितमध्यस्वरितान्त्यस्वरितस्वरितद्व्युदात्त त्र्युदात्तसर्वानुदात्तानां पदेषु एकादशस्वराणां चोपपत्तये "उदात्तपूर्वं स्वरितम्" इत्यादीनि "न चेत्पूर्वं तथा गतात्" इत्यन्तानि चत्वारि तत्सूत्राणि । मुख्योपयोगस्तु मूलसाधनद्वारा संहितास्वरसाधने । एवञ्च संहितावदवग्रहेऽपि निघातस्यैव प्रवृत्तिः स्यादिति तदावश्यकत्वमेवेति वाच्यम् । स्वतन्त्रपदपाठतोऽवग्रहे वैलक्षण्येऽपि संहितात्वाभावस्य तुल्य

सरला ।

कालपदन सामानाधिकरण्यान्वयानुपपत्तिसदवस्थैवेति सद्वत्पर्यन्त लक्षणाऽङ्गीक्रियते । ऋकाराद्युच्चरणाधिकरणकाले ऋकाराद्युच्चारणाधिकरणकालमद्गतत्वं सम्भवति इति न सामानाधिकरण्येनान्वयानुपपत्तिरिति ।

इति न्यायादिति भाव । न कुर्वन्तीति । यथा "निषेदुषीम्" इत्यादौ वसो-रिडन्तरङ्गत्वात्प्राप्तमपि भाविना सम्प्रसारणेन बलादित्वं नङ्क्ष्यतीत्यालोच्य न कुर्वन्तीत्यर्थः ॥

इति परिभाषाप्रकरणम् ।

शब्दरत्नम् ।

*न कुर्वन्तीत्यर्थं इति ।* यदि तु 'सेदुष' इत्यादौ पदावधिकेऽन्वाख्याने सेट् वसु

भैरवी ।

न्तरङ्गे बहिरङ्गे वा यत्कार्यं ऽनानन्तर्यमाश्रीयते तत्र बहिरङ्गपरिभाषा न प्रवर्तत इति हरद त्तेन प्रतिपादित, स तु न युक्त, पचावेदमित्यत्रासिद्धपरिभाषया 'एत ऐ' इति सूत्रप्रवृत्ति वारणपराऽऽकरविरोधात् । किन्त्वयोऽन्यानन्तर्यनिमित्तेऽन्तरङ्गे कर्तव्ये जातस्य बहिरङ्गस्य बहिष्प्रकरणसिद्धेरिति । अत्र जातस्येति निवेशादेव "ओमाङोश्च" इत्यत्राङ्ग्रहणचरितार्थम् । तद्धि खट्वा आ ऊढा इति स्थिते परमपि सवर्णदीर्घम्बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्ग त्वाद् गुणे वृद्धिप्राप्तो तद्बाधनार्थं क्रियते । युगपत्प्राप्तयोरप्यन्तरङ्गस्य बहिरङ्गत्वाभावे वैतत्प-रिभाषायोऽत्र स्यात्तदा अन्यथा बाधादन्तरङ्गपरिभाषाया अप्रवृत्तौ परत्वात्सवर्णदीर्घे ततो गुणे रूपसिद्धावाङ्ग्रहणवैयर्थ्यं स्पष्टमेवेति दीक्षिताशय । वस्तुतस्तु न परिभाषाद्वयम्, कि न्त्वन्तरङ्गे कर्तव्ये जातं तत्कालप्राप्तिकञ्च बहिरङ्गमसिद्धमित्येतदर्थिका परिभाषा एकैव । य च्चानानन्तर्यपरिभाषाया षत्वतुकोरसिद्ध इति सूत्रस्य तुग्ग्रहणं ज्ञापकं तदसिद्धमिति परिभा षाया अनित्यत्व एव ज्ञापकमिति सत्सिद्धि ।

असिद्धपरिभाषाया अपवादभूतामन्यामपि परिभाषा पठन्ति प्राञ्च —अकृतव्यूहा पाणिनीया इति । विशिष्ट ऊहो येषु तानि व्यूहानि शास्त्राणि । ऊहस्तर्कं, स च बहिरङ्गान्तरङ्गनिमित्तविना शरूप । तद्भिन्नि शास्त्राणि अकृतानि परित्यथ । भाविनिमित्तविनाशे इत्यध्याहार । एवञ्चान्तरङ्गशास्त्रनिमित्तस्य बहिरङ्गशास्त्रेण विनाशसम्भावनायामन्तरङ्गशास्त्राणां प्रवृत्ति रूपे न कुर्वन्ति पाणिनिप्रोक्तशास्त्राध्येतार इति फलितम् । अस्याञ्च 'समर्थानाम्' इति सूत्रस्य समर्थग्रहणं ज्ञापकम् । तद्धि कृतसवर्णदीर्घात्सुत्थितशब्दादिञ यथा स्यादित्येवमर्थं क्रियते । तच्चैतत्परिभाषाभावेऽन्तरङ्गं सवर्णदीर्घे कृत एव भविष्यतीति व्यर्थं सदस्या ज्ञाप

[illegible] मित्तस्य सवर्णाच्त्वस्य

तथा च साधुस्थिति

नुनु प्राचीनसम्मताया अकृतेतिपरिभाषाया लक्ष्यसाधकत्वेनावश्यकतया भाष्यकृतैषा कुतो नोक्तेत्याशङ्कायां तदभिप्रायमाह—यदि त्विति । क्रमेणान्वाख्यानेऽकृतेतिपरिभाषा विना

भावप्रकाश ।

न चक्तौत्यस्य सत्त्वे किमर्थं भाष्ये क्वापि नोल्लेख । न च 'असिद्धवदत्राभात्' इत्यत्र कैयटोक्तत्र भाद्धयेन निर्वाह तस्य तत्रैवोद्द्योते खण्डितत्वादत आह—यदि त्विति । क्रमेणान्वाख्याने वा विना अनि र्वाहादाह—पदेति । यद्यपि तन्नवकाशत्वे एव बाधकतानीनमिति प्रकृते असम्भवि, तथापि शास्त्रोपस्थि

सरला

पदावधिकेऽन्वाख्याने इति । अन्वाख्यान नाम शब्दसंस्कार । तच्च क्रमिकान्वाख्यान पदावधिका न्वाख्यानं वाक्यावधिकान्वाख्यानञ्चेति त्रिविधम् । प्रयोगस्योच्चारणक्रमानुरोधेन संस्काररूप क्रमिकान्वाख्या नम् । पदपर्यन्त प्रकृति प्रत्ययांश्च संस्थाप्य तत संस्काररूपं द्वितीयम् । वाक्यपर्यन्त प्रकृती प्रत्ययांश्च संस्थाप्य तत संस्काररूपं तृतीयम् । तत्रान्त्ययोरपि प्रकृतिप्रत्ययसंस्थापनानन्तरं श्रवणक्रमेणैव संस्कार स्वाभाविकत्वात् । वाक्यान्वाख्यानस्य क्वान सन्ति 'क्वी स्त' इत्यादावुदाहरणान । तत्र सेदुष इत्यादौ

शब्दरत्नम्।

अस् इति स्थिते इट्सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं संप्रसारणे वलादित्वाभावादिटः प्राप्तिरेव न, लक्ष्यानुरोधाच्चात्र पदावधिकमेवान्वाख्यानमिति तत्सिद्धिरित्युच्यते, तदैषा परिभाषा निष्फलेति बोध्यम्। अत एव एषा भाष्ये न

भैरवी।

न निर्वाह इति। पदेति। एवञ्च नि सेद् वस् ई अस् इति स्थितिङ्कल्पयित्वा यत्र इट्सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वात्सम्प्रसारणे कृते वलादित्वाभावादिटः प्राप्तिरेव नेति निषेदुषीमित्यादिसिद्धिरित्येषा निष्फलेति नवीनाः। "समर्थानाम्" इति सूत्रस्थसमर्थग्रहणं तु 'विपुत्रः' इत्यत्राकृतसन्धेरपि प्रत्ययदर्शनेनेष्ट सुत्थितादावपि तथाऽकृतसन्धे, 'वार्गाद्ध्रङ्गम्' इति परिभाषया प्रत्ययो माभूदित्येवमर्थं क्रियते। अस्याः परिभाषाया असत्त्वादेव "चौ प्रत्यङ्गस्य प्रतिषेध" इति वचनं वार्तिककृताऽऽरब्धं भाष्यकृता च न प्रत्याख्यातम्। प्रत्यङ्गम्—अन्तरङ्गम्। अस्यां परिभाषायां सत्यां तु 'प्रतीच' इत्यादिरूपाणामनयैव सिद्धेस्तद्वैयर्थ्यं स्पष्टमेव। अत एव "छे च" इति सूत्रे "अवश्यमत्र तुगभावार्थो यत्नः कर्तव्योऽन्तरङ्गत्वाद्धि तुक् प्राप्नोति" इति भाष्ये उक्तम्। परिभाषायाः सत्त्वे तु 'विश्नः' 'प्रश्नः' इत्यादौ तुगभावस्य परिभाषयैव सिद्धेरावश्यकत्वकथनवैयर्थ्यं स्पष्टमेव। अत एव-अस्या परिभाषाया असत्त्वादेव। ननु प्रतिपदविधित्वमनवकाशत्वे सत्येव बाधकत्वे प्रयोजकम्। तच्चात्र नास्ति, लुलुवुपश्चिच्युप इत्यादावस्य चारितार्थ्यात्। अत्र हि—"यस्त्रेकाचः" इति नियमादिड्भावस्य सिद्धेरिति कथमेतदिति चेत्? न, तथात्वाभावेऽपि शीघ्रोपस्थितिकत्वप्रयोज्यं प्रतिपदविधित्वं पूर्वप्रवृत्तौ प्रयोजकं भवत्येवेत्याशयात्। अत एव "प्रत्ययोत्तरपदयोश्च" इति सूत्रव्याख्यानावसरे 'परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषाम्मिथः प्रसङ्गे परश्च

भावप्रकाशः।

तिरपि पूर्वप्रवृत्तौ नियामिकेत्यत्र बाधकाभावस्तदाह—पूर्वमिति। इदमपि परनित्यादिसमवधाने एव। परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति "प्रत्ययोत्तरपदयोश्च" इति सूत्रे कैयटे पाठात्। अत एव 'यमे' इत्यादौ प्रतिपदोक्तत्वात्पूर्वमेत्वे आन्तरतम्यात्लोपो न प्राप्नोतीत्याशङ्क्य "एङ्ह्रस्वात्" इतिलोपेन समाहितम्। एतेन निरवकाशत्वरूपप्रतिपदोक्तत्वस्यैव प्राबल्ये प्रयोजकत्वमिन्त्यमिदम्। अत एव परत्वादीनामेव तत्त्वे प्रयोजकता परिगणिता वृद्धैः। मतद्वयस्यास्यातिरिक्तत्वे तदसङ्गतिः स्पष्टैव। किञ्चैवं 'स्वाग्नि' इत्यस्यापि साधुत्वापत्तिः। नहि व्याख्याभेदेन साधुत्वासाधुत्वे उचिते इत्यपास्तम्, बाधप्रयोजकताया परिगणनेऽपि तस्य यथाङ्गोकारे बाधकाभावात्। 'स्वाग्नि' इत्यस्यैव साधुत्वाङ्गीकारेण व्याख्यामेदस्यैवासत्त्वाचेत्यन्यत्र विस्तरः। अत्र यथा 'इयाय' इत्यादौ न दोषस्तथा स्पष्ट मत्कृतपरिभाषेन्दुशेखरव्याख्याने। नन्वेवमपि पक्षान्तरे दोष एवात आह—लक्ष्येति। अत्र सेदुष इत्यादौ। नन्वेतत्फलान्यथासिद्धावपि फलान्तरसत्त्वादनेकज्ञापकत्वाच्च कथं तत्त्वमत आह—अत एवेति। एव रीत्या फलान्तराणामप्यन्यथासिध्या निष्फलत्वादेवेत्यर्थः। ज्ञापकाना

सरला।

लक्ष्यानुरोधात् पदावधिकमेवान्वाख्यानं स्वीक्रियते। ततश्च सद् वस् अस् इति प्रकृतिप्रत्ययसंस्थापनानन्तरं श्रुतवर्णक्रमेण संस्कारे क्रियमाणे वसुप्रत्ययस्य लिट्स्थानिकत्वेन धातोर्द्वित्वे अभ्यासकार्ये च सेद् वस् अस् इति स्थिते आर्धधातुकस्येड्वलादेरिति इडागमे वसोः सम्प्रसारणम् इति सम्प्रसारणे च प्राप्ते वसुशब्दमुच्चार्यविहितत्वेन प्रतिपदोक्ततया शीघ्रोपस्थितिकत्वात् पूर्वं सम्प्रसारणे वलादित्वाभावेन इडप्राप्त्या सेदुषःत्यस्य सिद्धौ परिभाषेयं निष्फलेति। न च वसोः सम्प्रसारणवत् इडोऽपि "वस्वेकाजाद्घसाम्" इत्यनेनैव विधानेन प्रतिपदोक्तत्वं वसुशब्दमुच्चार्यविहितत्वात् नियमशास्त्राणाञ्च विधिमुखेन प्रवृत्तिर्नियमात्। एवञ्च परत्वात् पूर्वमिट एव प्रवृत्तिस्स्यादिति परिभाषा तन्निवारणाय सफलेति वाच्यम्, सद् वस् अस् इति स्थिते द्वित्वप्रवृत्तिसमकालमेव सम्प्रसारणस्य प्राप्तौ तदानीं कृतद्विर्वचनेकाच्त्वाभावेन वस्वेकाजाद्घसाम्

इको यणचि(पा०सू०६।१।७७) ॥ प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा ल-

---

शब्दरत्नम्।

क्षापि व्यवह्रतेत्यन्यत्र विस्तरेण निरूपितम् ॥

इति परिभाषाप्रकरणम् ॥

ननु व्यक्तिपक्षे इक्पदोपस्थाप्योकारादिभिर्दीर्घादिग्रहणं न स्यात् "उच्चारित एव

भैरवी।

क्लीपस्स्वम्' इति कैयट आह। अत एव 'रमे' इत्यादौ प्रतिपदोक्तत्वेन पूर्वं "सम्बुद्धौ च" इत्यस्य आकारप्रश्लेषाद्धल्ङ्याब्भ्यादिलोपो न प्राप्नोतीत्याशङ्क्यैङ्ह्रस्वादिति लोपेन समाहितम्। अन्यत्र—परिभाषेन्दुशेखरादौ॥

इति परिभाषाप्रकरणविवरणम् ॥

इको यणचि। पदानां वाच्या व्यक्तिरित्येकः पक्षः, आनयनादिकार्यान्वयस्य व्यक्तिष्वेव दर्शनात्। ननु व्यक्तेरानन्त्यात्सर्वासु व्यक्तिषु शक्तिग्रहासम्भवः, यत्किञ्चिद्व्यक्तौ शक्तिग्रहश्चेद्व्यक्त्यन्तरस्य शक्तिग्राहाविषयतया शाब्दबोधविषयत्वं न स्यादिति चेत्? न, जात्यादि-

भावप्रकाशः।

त्वन्तरङ्गपरिभाषानित्यत्वज्ञा.कतैवेति निर्मूलत्वमेवेति भावस्तदाह–अन्यत्रेति। परिभाषेन्दुशेखर इत्यर्थः।

इति परिभाषाप्रकरणम् ॥

व्यक्तिपक्षेऽणुदित्सूत्र, न जातिपक्षे इति प्राचामुद्घोषः। तस्यायम्भावः, यदा सर्वत्र जातावेव शक्तिग्रहेण शब्दार्थत्वं, व्यक्तिलाभस्त्वाक्षेपादिनेति न तत्रापि तत्कल्पनाऽन्यलभ्यत्वात्, तदापि यदि "अष्टन्" इत्यादौ व्यापकजातिपरनिर्देशः, तत्र कार्यबाधात् तदाश्रययावद्व्यक्तिषु तत्सिद्धिः, जातेः साक्षादुच्चारणासम्भवेन यत्किञ्चिद्व्यक्त्युच्चारणमिति तस्या विनिगमकत्वाभावात्। तदा तत्सूत्रेऽणुग्रहणं न। अप्रत्यय इति निषेधस्वरस्य तु वक्ष्यमाणत्वेन "त्यदादीनाम" इत्यादौ न दोष.। एतत्कथने एव मुख्यतात्पर्यं

सरला।

इति प्रतिपदोक्तस्येट्श्वाप्राप्तौ द्वित्वापेक्षया प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात् पूर्वं सम्प्रसारणे ततो द्वित्वे वलादित्वाभावादिटोऽप्राप्त्या परिभाषाया निष्फलत्वात्।

वस्तुतस्तु पदावधिकान्वाख्यानेऽपि घटसेदुषोः इत्येतत्सिद्ध्यर्थं परिभाषाऽवश्यमाश्रयणीया। तथा हि घट सु सद् वस् सु ओस् इति पदपर्यन्तं प्रकृतिप्रत्ययसंस्थापने ओस्निमित्तकमत्वरूप समासस्याप्रवृत्तिकाले सुविशिष्टे सत्त्वेन वस्वन्तेऽभावात् सम्प्रसारणाप्राप्तौ पूर्वमिटि ततः समासे सुब्लुकि ततः सम्प्रसारणेऽपि इटोऽनिवृत्तिप्रसङ्गः। परिभाषासत्त्वे ▮ अन्तरङ्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्या यत्र बहिरङ्गेण अन्तरङ्गनिमित्तविनाशसम्भावना तत्र पूर्वमन्तरङ्गशास्त्र न प्रवर्त्तते इत्यर्थेन घटसेदुषोरित्यत्र यदि पूर्वमन्तरङ्गमिट्शास्त्रं न प्रवर्त्तेत तर्हि समासप्रवृत्त्यनन्तरं बहिरङ्गसम्प्रसारणेनान्तरङ्गेट्शास्त्रनिमित्तवलादित्वनश्येत इति सम्भावनायास्सत्त्वेन पूर्वमिटागमस्याप्रवृत्तिरिति घटसेदुषो. इति सिध्यतीति दिक्।

इति परिभाषाप्रकरणम् ॥

---

पदवाच्या जातिरिति, व्यक्तिरेव वा पदवाच्येति मतद्वयम्। तत्र आद्य व्यक्तीनामानन्त्येन तत्र शक्तिकल्पने गौरवाल्लाघवादेकस्यां जातावेव तत्कल्पनम्। गामानयेत्यादौ व्यक्तिबोधस्तु लक्षणया। न चैवं व्यक्तीनामपि प्रत्येकमेकतया एकस्यां व्यक्तौ शक्तिर्व्यक्त्यन्तरबोधो लक्षणयेति नानन्त्यप्रयुक्तं गौरवमिति वाच्यम्। व्यक्तौ शक्तिस्वीकारे व्यक्त्यन्तरलक्षणाया सम्बन्धकल्पने गौरवात्। तथाहि, व्यक्तौ शक्तौ

अरुणा।

रूपानुगमकथमानां शक्यतावच्छेदकत्वस्वीकारेण समानप्रसरत्वेन शक्तिज्ञानपदार्थोपस्थित्योः कार्यकारणभावाभ्युपगमासम्भवानुपपत्तिरिति तेषामाशयात्। नचाशक्यत्वेन कथं शक्यतावच्छेदकत्वमिति वाच्यम्, अलक्ष्यत्वेऽपि लक्ष्यतावच्छेदकत्ववदशक्यत्वेऽपि शक्यतावच्छेदकत्वसम्भवात्। जातावेव पदानां शक्तिरिति पक्षान्तरम्। व्यक्तिलाभस्त्वाक्षेपात्। आनयनादिक्रियान्वय आक्षिप्तव्यक्तिद्वारैव। जातेरेकत्वाल्लाघवमत्र पक्षे। अत एव "सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्" इति भाष्ये उक्तम्। तत्राद्यपक्षाभिप्रायेणाशङ्कते—नन्विति। इकारादिभिरिति। इकारविषये तु शङ्का न कृता तस्योच्चारितत्वेन तत्राणुदित्सूत्रप्रवृत्तिसम्भ-

भावप्रकाशः।

तेषाम्। एत एव अन्यपक्षचतुष्टये तदावश्यकता बोध्या। अत एव व्यक्तिपक्षे इति दिङ्मदर्शनं तत्र। ते च पक्षाः यथा–व्यक्तावेव शक्तिः, जातिविशिष्टव्यक्तौ वा, व्यक्तिविशिष्टजातौ वा, तत्पक्षेऽपि तत्र व्याप्यजातिपरनिर्देशो वेति। एषां यथासम्भवमुपपत्तिरेषु तदावश्यकत्वं चान्यत्र स्पष्टमिति। एवं सत्याद्यपक्षे भाष्याभिमते लक्षणाश्रयणावश्यिका, तदन्यपक्षचतुष्टये तु तत्सत्त्वेऽपि तदाश्रयणमावश्यकमिति बोध्यम्। तदेतद् ध्वनयितुं मूले पैवाशङ्कते—ननु व्यक्तिपक्षे इति। कथं भाव्यत्। प्रसिद्धत्वादि तथोक्तिः। परम्परा-रमेव तत्र सूत्रचारितार्थ्यसिद्धिस्थानं आह—उकारेति। दीर्घादीति। आदिना प्लुतानामुदात्तादीनां च सङ्ग्रहः। अत एव "किमर्थमिदमुच्यते उदात्तादीनामपि ग्रहणं यथा स्यात्" इति भाष्यं सङ्गच्छते। 'दीर्घादि' इत्युक्तिस्तु तदाप्यवाच्य' इत्यग्रिममूलानुरोधेन, तत्र व्याप्यजातिपरनिर्देशे तेषां सङ्ग-

सरला।

व्यक्त्याश्रयान्तरेण स्वसमवेतसमवायित्वं सम्बन्धः, स्वं वाच्या व्यक्तिः, तत्समवेता तद्वृत्तिर्जातिस्तत्समवायित्वं व्यक्त्यन्तरे, जातौ शक्तिस्वीकारे तु स्वाश्रयत्वमेव सम्बन्धः, स्वं वाच्या जातिस्तदाश्रयत्वं व्यक्ताविति। एवञ्च लक्षणायां सम्बन्धे लाघवगौरवयोः सत्त्वेन जातावेव शक्तिकल्पनस्य लाघवेनौचित्यम्। किञ्च व्यक्तौ शक्तिस्वीकारेऽपि जातेर्वाच्यत्वमावश्यकमेव, व्यक्तीनामानन्त्याद् व्यभिचाराच्च तत्र शक्तिग्रहानुपपत्तेः। एवञ्चावश्यकत्वात्प्रथमोपस्थितत्वाच्चागृहीतविशेषणबुद्धिर्विशेष्यमवगाहते इति न्यायाच्च जातावेव शक्तिर्व्यक्तिबोधो लक्षणयेति पर्यवस्यति। तदुक्तं भट्टैः—

अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः।
आकृतेः प्रथमज्ञानात्तस्या एवाभिधेयता॥ इति।

द्वितीये तु 'गामानय' इत्यादिवाक्यश्रवणसमनन्तरं व्यक्त्यानयनव्यवहारस्यालगादिविशिष्टतया व्यवहारेण शक्तिग्राहकशिरोमणिना व्यक्तावेव पदस्य शक्तिर्ग्राह्यते। न च लाक्षणिकः स इति, अनुपपत्तिज्ञानमन्तरेव व्यवहारप्रवृत्तेर्दर्शनेनानुपपत्तिं विना लक्षणाया वक्तुमशक्यत्वात्। नचानन्त्यं व्यभिचारो वा, शक्यतावच्छेदकजातेरैक्यात्। तदुक्तम्—

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्।
शब्दः सुकरसम्बन्धो न च व्यभिचरिष्यति॥ इति।

नचैव नागृहीत-शक्तिकेन जातौ वाच्यत्वमावश्यकमिति वाच्यम्, अकारणे दण्डत्वादौ कारणतावच्छेदकत्वस्य, अलक्ष्ये तीरत्वादौ लक्ष्यतावच्छेदकत्वस्य स्वीकारेण जातेरवाच्यत्वेऽपि शक्यतावच्छेदकत्वस्वीकारे बाधकाभावात्। अत एवाणुदित्सूत्रस्थमण्ग्रहणमेकशेषारम्भश्च सङ्गच्छेते। जातेर्वाच्यत्वे तद्वैयर्थ्यं स्पष्टमेवेति। तस्माद् व्यक्तिपक्षो जातिपक्षश्चोभावपि शास्त्रसिद्धाविति। तत्र व्यक्तिपक्षे आशङ्कते—नन्वित्यादिना।

उकारादिभिरिति। नन्विक्प्रत्याहारे इकारस्य प्राथम्येन तेनापि दीर्घादीनामग्रहणे इकारादिभिरिति वक्तव्ये उकारादिभिरिति कथमुक्तं शब्दरत्नकृता? नच "उच्चारित एव शब्दः प्रत्यायको नानुच्चारितः" इति अणुदित्सूत्रभाष्योक्त्या विषयतासम्बन्धेन शाब्दबोधे उच्चार्यमाणशब्दनिष्ठवृत्तिज्ञानाधीनोपस्थितेः कारणतया इक्पदे इकारस्याप्युच्चार्यमाणत्वेन अणुदित्सूत्रगृहीततन्निष्ठवृत्तिज्ञानाधीनोपस्थितेर्दीर्घकारा-

शब्दरत्नम् ।

शब्दः प्रत्यायको नानुच्चारितः" इति अणुदित्सूत्रे भाष्योक्तेः । न चोच्चारितस्यैव प्रत्यायकत्वे रहसि पुस्तकमीक्षमाणस्य बोधानापत्तिरिति वाच्यम्, तत्रापि पुस्तकद्रष्टुः स्वीयसू-

भैरवी ।

वात् । दीर्घादीत्यादिना प्लुतानुदात्तादीनां सङ्ग्रहः । उच्चारितः—उच्चारितत्वेन गृहीतः । प्रत्यायकः—स्वार्थबोधनसमर्थः । तत्रापि—पुस्तकेक्षणस्थलेऽपि सूक्ष्मेति । जपमन्त्राणां त्रैस्वर्येण ज्ञानस्यावश्यकतया त्रैस्वर्यस्य ताल्वाद्युपघ्नदेशाद्यधिकरणकोच्चरितत्वरूपतया तत्र सूक्ष्मोच्चारणमावश्यकं, तद्वद्रहसि पुस्तकेक्षणस्थलेऽपि बोध्यम् । एतेन 'उच्चारित एव प्रत्या-

भावप्रकाशः ।

इत्त्वेन वा । अत एव व्यक्तिपक्षे इदुपलक्षणमिति स्वयमेव ध्वनितम् । एतदर्थमेव तथोक्तिरिति तत्त्वम् । यत्तु वर्णसमाम्नाये एकश्रुत्या पाठाद्भेदकत्वाद्वा गुणानां तद्ग्रहणसिद्ध्या गुरुत्वादीर्घादीत्युक्तमिति । तन्न, आप तथा चादित्वदेऽप्यनुनासिकासङ्ग्रहप्रसङ्गादवश्यत्वात् । अत्र पक्षेऽणुग्रहणाद्भेदकत्वस्यैव तत्त्वाच्चेति दिक् । उच्चारितः तत्त्वेन गृहीतः । अन्यथा पाणिन्युच्चारणस्येदानीमसत्त्वेन तदसङ्गतिः स्पष्टैव । एवमग्रेऽपि । एवोक्तमात्रेति—भाष्योक्तेरिति । "प्रत्याहारे सवर्णग्रहणमनुपदेशात्" इत्यादिनेति शेषः । अत एव 'ऋक्'इत्युक्ते तात्पर्यवशाद्विशिष्टसन्निवेशाया "अग्निमीळे" इत्यादिऋचास्ततो बोधेऽपि ततो नार्थप्रत्ययः । अत एव च 'गामानय इत्याह' इत्यादावनुकरणेनानुकार्यप्रतीतावपि न ततोऽर्थबोध इत्यनुभव इत्याद्यन्यत्र विस्तरः । जगन्नाथोक्तिं खण्डयति—न चेति । बोधानापत्तिरिति । अनुच्चारणेन तत्त्वेनाग्रहात् । एवञ्च वाचकज्ञानसामान्यस्यैव बोधे हेतुत्वेन भाष्याद्युक्तमिति भावः । सूक्ष्मोच्चेति । सूक्ष्म-

सरला ।

दीनां सत्त्वेन तेषां ग्रहणे बाधकाभावेन दीर्घौकारादीनामेवाग्रहणप्रसक्त्या तथोक्तिरिति वाच्यम् । अवयवार्थसमुदायार्थ यत्र पृथक्पृथगर्थोपस्थितिस्तत्राऽवयवार्थस्यैव बोधे समुदायोच्चारणस्य वैयर्थ्यमूलकेन अवयवनिष्ठशक्तिनिरूपकार्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति समुदायनिष्ठशक्तिनिरूपकार्थविषयकतात्पर्यज्ञानं प्रतिबन्धकमिति प्रतिबध्यप्रतिबन्धकभावेन प्रकृते इक् इति समुदायनिष्ठशक्तिनिरूपक इकार उकार ऋकार लृकारचतुष्टयरूपार्थविषयकतात्पर्यज्ञानेनावयवभूत-इकारनिष्ठशक्तिनिरूपकाष्टादशेकाररूपार्थविषयकशाब्दबोधस्य प्रतिबन्धेन दीर्घेकारादीनामप्यग्रहणप्रसक्तेः । अत्र इकारोच्चारं ककारोच्चारणेनैव समुदायादेवार्थबोधो भवतु इति पाणिनेस्तात्पर्यावधारणात् । न च "आदिरन्त्येन सहेता" इति सूत्रेणाक्षरमर्यादया आदिवर्णस्यैव संज्ञात्वबोधनेन शक्ततावच्छेदकत्वे लाघवेन च इकार एव चतुष्टयबोधकः ककारादयस्तु 'इकारादयः प्रत्याहारसूत्रस्था एव' इति प्रत्यभिज्ञामात्रोपयोगिनो न तु बोधकत्वरूपाङ्गता इति । अत एवाणुदित्सूत्रस्थः प्रत्याहाराणामाद्यवर्णेषु चारितार्थ्यप्रदर्शनपरः शब्दरत्नग्रन्थः सङ्गच्छते । एवञ्च इक्पदघटकेकारे एव चतुष्टयार्थनिरूपितशक्तेः अष्टादशार्थनिरूपितशक्तेश्च सत्त्वेन अवयवसमुदायशक्तिविषयकोक्तप्रतिबन्ध्यप्रतिबन्धकभावस्याविषयतयाऽष्टादशार्थनिरूपितेकारनिष्ठशक्त्या इकाराणामुपस्थित्या तेषां शाब्दबोधविषयत्वे बाधकाभाव इति तथोक्तिरिति वाच्यम्, "सकृदुच्चरितः शब्दः सकृदर्थं गमयति" इत्येतन्मूलकेन एकशक्तिनिरूपकार्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रत्यपरशक्तिनिरूपकार्थविषयकतात्पर्यज्ञानं प्रतिबन्धकमिति प्रतिबध्यप्रतिबन्धकभावेन चतुष्टयार्थविषयकतात्पर्यज्ञानेन अष्टादशविषयकशाब्दबोधस्य प्रतिबन्धात् । यथा भोजनप्रसङ्गे "सैन्धवमानय" इत्युक्तौ लवणविषयकतात्पर्यज्ञानेनाश्वविषयकशाब्दबोधप्रतिबन्धेन लवणस्यैव बोधः, प्रकरणं च तत्र तात्पर्यावधारकं, तथाऽत्रापि ककारोच्चारणेन चतुष्टये तात्पर्यावधारणेन तद्विषयकतात्पर्येणाऽष्टादशविषयकशाब्दबोधाभाव इति.—इति चेत् । न, तन्त्रेण आवृत्त्या वा दीर्घैकारादीनां कथञ्चिद्ग्रहणसम्भवेऽपि दीर्घौकारादीनां कथमपि बोधासम्भवेन तथोक्तेरिति । एकशक्त्यपरशक्तिप्रतिबध्यप्रतिबन्धकभावस्य तु अत्र विषयतैव नास्ति उभयविधतात्पर्यावधारणसम्भवात् । ककारेण चतुष्टयतात्पर्यस्येव अणुदित्सूत्रस्थाऽणुग्रहणेन अष्टादशविषयकबोधजनकत्वप्रकारकतात्पर्यस्याप्यवधारणात् । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

शब्दरत्नम् ।

मोच्चारणसत्त्वादित्यत आह–प्रत्याहारग्रहणेष्विति । एतेन दीर्घकारादेर्ग्राहकशास्त्रब- इकारादिभिर्बोधे ऽपि तेषामिक्पदवृत्त्याऽनुपस्थितत्वेन तदुत्तरप्रत्ययार्थानन्वयापत्ति-

भैरवी ।

कः' इत्यपकृते, लिपिस्मृतशब्दादर्थबोधानापत्तेरिति परास्तम्, तत्रापि सूक्ष्मोच्चारणस- त्वात् । यत्र नोच्चारणं तत्र नार्थप्रत्ययः । यथा ऋगित्युक्ते विशिष्टसन्निवेशा ऋक् प्रतीयते, तु तस्या उच्चारणमिति यदा, तदा नार्थप्रत्यय, अनुकरणवत् ।

मूले—तद्वाच्यवाच्येति । प्रत्याहारवाच्याक्षरसमाम्नायपठ्यमानवाच्या इत्यर्थः । अक्षरस- माम्नायवाच्यत्वग्राहकञ्चाणुदित्सूत्रमेव । रत्नाकरात् किञ्चिद् गृह्णाति—एतेनेति । इक्पदवृत्त्या— इक्पदशक्त्या । अनन्वयापत्तिरिति । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति सिद्धा- न्तात् । अत एव "सार्वधातुके यक्" इति सूत्रे पच्यमान इत्यादौ कर्तरि शानच्, कर्मणि य- गेति पक्षे प्रकृतिप्रत्ययार्थाविति नियमेन कर्त्रर्थविशेष्यकबोधानापत्तिः, कर्तुरेव प्रथमतो जात- त्वस्याप्यर्थत्वादित्युक्तम् । भावार्थस्तु । लक्षणायां दीर्घादाविक्पदस्य लक्षणारूपा या वृत्तिस्तदा-

भावप्रकाशः ।

रेत्यर्थः । अत एव तत्र स्वीयत्वम् । तच्च स्वमात्रप्राप्यत्वम् । अयम्भावः, अपि मन्त्राणां त्रैस्वर्यनियमेन तत्तत्स्थानेषूच्चारितैरेवोपलभ्यमानत्वरूपेवातत्त्वादीर्घोनाकालिकत्वादिरूपतत्स्वरवादेश्च [illegible] व्यञ्जकतया मानसजपस्थले स्वान्तरापि सूक्ष्मतरताल्वादिव्यापारेण तादृशं तत्स्त्येव । एतेन लिपिस्मृत तदा- दर्थबोधानापत्तिः, अनुच्चारणादित्यपास्तमिति । एतेन नन्वित्यादि निरस्तमिति भाव [illegible] लिप्या प्रतीतशब्दस्य तत्त्वे बाधकाभावदोषमुक्त्वा वक्तमाश्य इत्या प्रतीतशब्दस्य [illegible] । [illegible] स्फोटस्य तदप्रत्यायकत्वं स्यादितिमन्दोक्तमपास्तम्, वक्तुरुक्तेः शब्दमयीत्वात् [illegible] स्फोटे आरोपितसकलस्वरेवेन बाधकाभावाच्च, तत्रापि व्यञ्ज्यत्वसत्त्वेन स्वस्मैऽप्यगतेश्चेति दिक् । "नाज्झ- लौ प्रतिषेधे" इत्यादिशकारसावर्ण्यनिषेधशङ्कासमाधानपरभाष्यकैयटादिकं तु वानिकारस्यैव न तद्दोष इत्यन्यत्र विस्तरः । रत्नाकरोक्तमाद्यं खण्डयति—एतेनेति । उक्तरीत्या तैस्तत्प्रयोगेने [illegible] । प्रत्य- यार्थानन्वयेति । सप्तमीसमासः, तेषामितिस्वारस्यात् । तत्रेत्यध्याहारे तु षष्ठीसमासः । अयम्भावः, प्र- त्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति व्युत्पत्तिः ताभ्यां मिथः समन्वयार्थस्यैव बाधा न कस्यचिदिति बोधयति । तस्याश्च प्रकृतेरनाथ प्रत्ययो भवतीत्युक्त्या प्रत्यासत्त्या मिथः समन्वयार्थबोध एव [illegible] तयोः साधुत्वबोधनमेव मूलम् । अत एव "सार्वधातुके यक्" इत्यत्र भाष्ये 'पच्यमानः' इत्यत्र कर्तरि शानच्, कर्मणि यगसिद्धत्वादाक्ष्य प्रकृतिप्रत्ययौ सहार्थं ब्रूत इत्युक्तम् । तस्यापि शास्त्रबलतया [illegible] प्रतीयमानमर्थं तौ सह ब्रूतो न तु भेदेनेत्युक्त एवार्थः । तथा च प्रकृतिवृत्त्यर्थबोधे तदुत्तरप्रत्ययवृत्त्यर्थोपस्थितिः कारणमिति व्युत्पत्तिरर्थान्तरम् । सा च विशेष्यतया विशेषणतया वा, प्रतीत्यनुरोधात् । विशिष्य कार्यकारण- भावास्तूह्याः । अत एव 'गुड पश्य' इत्यतो माधुर्यबोधेऽपि प्रत्ययार्थानन्वयः । एवञ्चार्थान्तरेण तत्र तस्य शक्यमानाल्लक्षणानङ्गीकाराच्च तथोपस्थितानामपि तेषां स्थानिता न स्यादित्यभ्युपेत्याह—वृत्तिप्रया ज्येति । प्रकृतिवृत्तिप्रयोज्येत्यर्थः । इदञ्च प्रकृताभिप्रायं न तु व्युत्पत्तौ तथा निवेशः, 'घटमानय' इत्या- द्यसङ्ग्रहापत्तेः । किन्तु जनकत्वं तत्र साक्षात्परम्परासाधारणं निविष्टम् । एवं च सूत्रेण निर्वाहे नियमाभ- वेन स्वमतेऽपि लक्षणा न स्यादिति तथाशयवर्णनमयुक्तमेवेति भावः ।

शुद्धा रूढिमतीति या व्यवह्रियते सर्वैस्तस्या एवायं भेदः, मुख्यार्थबाधतत्सम्बन्धरूढिरूपकारणत्रय-

सरला ।

प्रत्याहारग्रहणेष्वितीति । प्रत्याहारबोधकशब्देष्वित्यर्थः । इक्पदवृत्त्येति । उच्चार्यमाणेक्पदनि- ष्ठवृत्त्येत्यर्थः । यद्यप्यणुदित्सूत्रेणाकारादौ दीर्घादिनिरूपितवृत्तिरस्त्याक्षने इति दीर्घादीनामपि वृत्ते- र्बोधोपस्थितिस्तथाऽप्यत्र दीर्घादीनामुच्चार्यमाणपदनिष्ठवृत्त्या नोपस्थितिरिति भावः । वृत्तिप्रयोज्येति ।

।शब्दरत्नम् ।

रित्यपास्तम् , वृत्तिप्रयोज्योपस्थितिसत्त्वेनादोषाच्च । ननु अणुदित्सूत्रं व्यर्थम्-; न च प्रत्याहाराणामाद्यवर्णेषु चरितार्थम् , अन्यसवर्णानामिव तत्सवर्णानामपि; लक्षणयैव ग्रहण-सिद्धेः । न च "अस्य च्वौ" (पा०सू०७।४।३२) इत्यादौ चारितार्थ्यम् , व्यक्तिपक्षेऽप्य

भैरवी ।

अपास्तमिरस्तमित्यर्थः । वृत्तिप्रयोज्येति । प्रकृतिवृत्तिप्रयोज्येत्यर्थः । प्रयोज्यत्वं तु जन्यजन्यत्वम् । नचैवं सति घटमानयेत्यत्र घटोपस्थितिविषयघटे विभक्त्यर्थानन्वयापत्तिर्घटस्य योपस्थितिः सा।घटपदजन्यैव, न तु घटपदजन्यजन्येति वाच्यम्, अस्य ग्रन्थस्य प्रकृताभिप्रायकत्वात्, सामान्यतः कल्पस्तु नियमः प्रकृतिजन्यत्वघटित एव, जन्यत्वजन्यजन्यत्वान्यतरत्वमेव प्रयोज्यत्वमित्यस्य सामान्यतो नियमे प्रवेश इत्यभिप्रायाद्वा ।

प्रत्याहारग्रहणे यदि लक्षणा तर्ह्यणुदित्सूत्रस्याण्ग्रहणं विनापि निर्वाहात्तद्वैयर्थ्यम् । न च [illegible] तत्रापि [illegible] उदि- [illegible] त्वेऽपि [illegible] 'स्वर्गी ध्वस्तः' 'शिखी विनष्टः' इत्यादिस्थल इव विशेषणे पर्यवसानं बोध्यम् । आद्यवर्णेष्विति । तत्रानुबन्धसमभिव्याहारेणाक्षरसमाम्नायिक एवायमिति प्रत्यभिज्ञायाः सम्भवेनाणपदबोध्यत्वस्य सम्भवादिति भावः । अन्यसवर्णानामिव द्वितीयादिसवर्णानामिव । तत्सवर्णानाम्—आदिसवर्णानाम् । प्रत्याहारवाच्यत्वस्याद्विवर्णेऽपि सत्त्वादिति भावः । "अस्य च्वौ" इत्यादाविति । आदिशब्देन "पुरन्" इत्यादिसङ्ग्रहः । एतेषु प्रत्याहारग्रहणाभावादित्याशयः । अत एव शुक्लीभवतीतिवन्मालीभवतीत्यस्य सिद्धिः । शङ्कानुरोधेनाह—व्यक्तिपक्ष इति । अस्य—"अस्य

भावप्रकाशः ।

वाक्यात् । यथा त्वगादिशब्दानां 'त्वचा ज्ञातम्' इत्यादौ त्वगिन्द्रिये । त्वगाश्रयसम्बन्धस्य "गङ्गायाम्" इत्यादौ सम्बन्धभावेन मुख्यार्थबाधस्यानादितात्पर्यस्य च तत्तद्वाविशिष्टत्वात् । अत एव 'असति प्रयोजने मुख्यार्थबाधप्रतिसन्धानपूर्वकं तत्सम्बन्ध्यपरार्थबोधे निरूढलक्षणा' इति व्यवहारः, अन्यथा रूढिशक्तिरेवेति सिद्धान्तोऽलङ्कारिकवैयाकरणयोः । इयमेव द्विरेफादौ मीमांसकगुरुतार्किकैर्लक्षितलक्षणाशब्देन व्यवह्रियते । शक्यसम्बन्ध इत्यत्र साक्षात्परम्परासाधारणसम्बन्धनिवेशात् । नव्यनैयायिकमते तस्या अतिरिक्तत्वे तु अत्रापि तथैवास्ताम् । अत्रमते तत्र साक्षात्सम्बन्धस्यैव निवेशः । लक्षितेन बोधितेन लक्षणं यस्यामिति व्युत्पत्त्या क्रमेणैवोपस्थितेः । तन्नियमे तथाजन्यत्वनिवेश आवश्यक इति केचित् । वस्तुतस्तु द्विरेफादौ रूढिशक्तिरेव, न लक्षणा; बाधप्रतिसन्धानं विनैव बोधात् । अत एव भ्रमरादार्थबोधः कोशेषु भ्रमरपर्यायेषु पाठश्च सङ्गच्छते इति स्पष्टमन्यत्र । प्रकृते तूक्तरीत्या निरूढलक्षणैव । एतेन शाब्दिकमते निरूढलक्षणा नैवास्ति । यद्यस्ति, तर्हि तस्याःप्रसिद्धत्वेन लक्ष्यतावच्छेदकज्ञानसत्त्वात्तज्ज्ञानार्थमेव "अणुदित्" सूत्रमिति मिथो विरुद्धम् । किञ्च निरूढपदं व्यर्थम्, लक्षणयैवेत्येव वदेत् इति मन्दोक्तमपास्तम्, उक्तयुक्तेः तत्प्रसिद्धिमात्रेण प्रकृते तज्ज्ञानस्य मूर्खेणापि वक्तुमशक्यत्वाच्च निरूढपदस्योक्तरीत्या सफलत्वाच्चेति दिक् ।

नन्वेवं जातिपक्ष इव व्यक्तिपक्षेऽपि तद्व्यर्थमित्युद्द्योतभाष्यायसङ्गतिरित्याशयेनाशङ्कते—नन्वणुदिदिति । अणुपदविशिष्टं सूत्रमित्यर्थः । आद्येति । तेषामुच्चारितत्वेन प्रत्यायकत्वसम्भवादिति भावः । अस्य च्वाविति । अप्रत्याहारग्रहणेन लक्षणानङ्गीकारादनुच्चारितत्वेन तत्त्वसम्भवाच्च । अत एव 'मालीभवति' इत्यादिसिद्धिरिति भावः । शङ्कानुरोधेनाह—व्यक्तीति । अस्य, "अस्य च्वौ" इत्यादिसूत्रस्था-

सरला ।

कार्यकारणभावस्वरूपे विषयतासम्बन्धेन शाब्दबोधं प्रति उच्चार्यमाणपदनिष्ठवृत्तिप्रयोज्योपस्थितेः कारण

शब्दरत्नम् ।

प्रत्याहारसूत्रस्थतो भेदेनाण्त्वाभावादिति स्पष्टम् "अणुदित्"-( पा०सू०१।१।६९ ) सूत्रे भाष्ये-इति चेत् ? न, लक्ष्यतावच्छेदकज्ञानार्थमेव तदुच्चारितार्थ्यात् । प्रत्याहारेषूपलक्षणं

भैरवी ।

ऋवौ"इत्यादिसूत्रस्थाकारादिवर्णस्य । भेदेनेति । यत्र प्रत्याहारनिर्देशस्तत्र यथा आद्यवर्णस्यानुबन्धसमभिव्याहारेण एवाणत्वमिति प्रत्यभिज्ञाविषयत्वं तथाऽत्राभावेनैतेषु तादृशप्रत्यभिज्ञाया असम्भवेन भेदस्य निश्चितत्वेनेत्यर्थः । अत एवाह—अण्त्वाभावादिति । ननु "ष्वादीनां ह्रस्व" इति निर्देशेन ज्ञापकेनाप्रत्यय इति निषेधारम्भेण च तत्सदृशेऽपि प्रत्याहारनिर्दिष्टबोध्यत्वमर्भवतीति निश्चयो भविष्यति । अन्यथा "सनाशंसभिक्ष उः" इत्यत्रोपात्तोकारस्यापि "अलुक् ऋवौ" इत्यकारप्रश्लेषेण ग्रहणकशास्त्राप्राप्तेस्तद्वैयर्थ्यं स्पष्टमेव । अत एव "अक्षाताम्" इत्यत्र तकारद्वयस्य हल्प्रत्याहारबोध्याक्षरसमाम्नायिकतकारसादृश्येन "झलो झलि" इत्यस्य प्रवृत्तेरिति चेत् ? न, "इणो यण्" इत्यत्र णकारचिन्हेन यकारांशे तत्प्रत्यभिज्ञासत्त्वेन तत्राप्रत्यय इत्यस्य चारितार्थ्यात् । "ष्वादीनाम्" इति निर्देशस्यापूर्वार्थज्ञापकत्वकल्पनापेक्षया मूलोक्तार्थ एवोपष्टम्भकत्वस्य सम्भवात् ।

लक्ष्यतावच्छेदकज्ञानार्थमिति । तद्वाच्यवाच्यत्वरूपस्य लक्ष्यतावच्छेदकधर्मस्य लक्ष्येषु ज्ञानार्थमित्यर्थः । प्रत्याहारवाच्यत्वस्याक्षरसमाम्नायपठितेषु "आदिरन्त्येन सहेता" इति सूत्रात् ज्ञानसम्भवेऽपि तद्वाच्यत्वस्य दीर्घादिषु ग्रहोऽणुदित्सूत्रादेवेति भावः । प्रत्याहारग्रहणेष्वि-

भावप्रकाशः ।

कारादिवर्णस्य । प्रत्याहारेति । प्रत्याहारप्रतिपादक "अइउण्" इत्यादिसूत्रस्थाकारादित इत्यर्थः । प्रत्याहारावयवेषु अन्त्येनाकाराद्भिन्नजातीयचिह्नरूपोच्चारणं भावरूपत्वस्य प्रत्यभिज्ञायामप्यत्र तथात्वाभावादिति भावः । भाष्ये इति । तत्र "अनुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात्" इत्यादिनेति भावः । यस्त्वप्रत्यय इतिज्ञापकेन तत्सदृशेऽपि कार्यम्, अन्यथा "ष्वादीनाम्" इत्यादावप्यनण्त्वात्तत्प्रसक्तौ किं तेन, तेन 'भवाताम्' इत्यादावपि न दोषः । प्रत्याहारस्थतकारसदृशान्यतकारे परे लोपप्रवृत्तेरिति मन्दः । तन्न, यणित्यादावुक्तरीत्याऽप्रत्यय इत्यस्य चारितार्थ्यात्, 'अवाताम्' इत्यादावन्यथा दोषाच्च तत्प्रत्याभावात्, [illegible] ज्ञापनेऽणुग्रहणवैयर्थ्यापत्तेश्च, तदभावे ज्ञापनासम्भवाच्चेति दिक् । ननु "ऊकाल" इत्यत्र ह्रस्वसंज्ञाविधायकप्रथमवाक्ये उकारोऽण् सवर्णान् गृह्णातीति द्विमात्रादेरपि ह्रस्वसंज्ञापत्तिरिति भाष्यासङ्गतिः, तदुक्तम् । तथा "अणुदित्" इत्यत्राप्रत्यय इति किमर्थम् ? "सनाशंसभिक्ष उः" "न सामान्तिके" इत्यत्रमिदमुच्यते "अप्रत्ययादेशटित्किन्मित" इति वक्तव्यम् "इदमस्थमुः" इत्यादिभाष्यासङ्गतिस्तत्र एवेति चेत् ? न, व्यक्तिपक्षे लक्षणापरत्वेन जातिपक्षपरत्वेन वाऽदोषात् । लक्ष्यतेति । तत्र न स्ववाच्यसवर्णत्वे "पुमः ख्य्यम्परे" इत्यादौ दोषापत्तेः किन्तु स्ववाच्यवाच्यत्वमेव मूलोक्तम् । तस्य च ग्रहो न कोऽपि । तत्र तथा व्यवहाराभावात् । नान्यत्र शास्त्रेऽन्यव्याकरणे इव सूत्रं विना ग्रह इति [illegible] । [illegible] "आदिरन्त्येन" [illegible] प्रत्यभिज्ञा-रितत्वग्रहसत्त्वेन तत्सूत्रप्रवृत्त्या तद्वाच्यत्वस्य तद्दीर्घादिष्वपि ग्रहणेन समुदितज्ञानसम्भव इति भावः । एतेनाद्यवर्णार्थमपि नोपयोग इति सूचितम् । यत्तु ह्रस्वेकारादीनान्तद्वाच्यत्वेन युगपद्वृत्तिद्वयविरोध इति । तन्न, सति तात्पर्यग्राहके "गङ्गायां मीनघोषौ" इत्यादाविव तदङ्गीकारात् । तत्र समभिव्याहारस्यैवात्र [illegible]भ्यो मतुप् इत्यादिनिर्देशस्यैव सत्त्वात् ह्रस्वानामपि तद्वाच्यवाच्यत्वेन लक्ष्यतावच्छेदकाक्रान्तत्वाच्च । अत एव 'घटीभवति' इत्यादावोत्वम् । शक्यार्थोपस्थितिं विना लक्षणाया अप्रसरेण तत्रान्यत्र च शक्तिग्रहोपयोग इति न तदानर्थक्यमिति दिक् । नन्वेवमपि व्यक्तिपक्षे "अस्यच्वौ" इत्यादौ दोष एव, उक्तरीत्या सूत्राप्रवृत्तेः, अत आह—उपलक्षणमिति । मध्यमणिन्यायेनास्याग्रेऽप्यन्वयः । एतेन

सरला ।

त्वमिति प्रयोजनं निवेद्यते । एत्त्वं च साक्षात् अन्यत्वमन्यपन्यत्वान्यतरत्वम् । तथाच मकुने दीर्घा-

चणा, "दीर्घाज्जसि च" (पा०सू०६।१।१०५)इति ज्ञापकात् "त्यादिभ्य." (पा०

शब्दरत्नम्।

तद्वाच्यवाच्येति च, "अस्य च्वौ" (पा०सू०७।४।३२) इत्यादावपि स्वसदृशवाच्येषु लक्षणाऽदर्शनात्। अणुदित्सूत्रगृहीतलक्ष्यतावच्छेदकाश्रित लक्षणा विधीयमानातिरिक्तविषये एव, "अप्रत्यय" इत्युक्तेः। अत एव "त्यदादीनाम" (पा०सू०७।२।१०२) इत्यादौ न स्वसदृशवाच्येषु लक्षणा। "नाज्झलौ"(पा०सू०१।१।१०) "अणुदित्" (पा०सू०१।१।६९) इत्यत्र तु न लक्षणा, तद्बोधकाले लक्ष्यतावच्छेदकाग्रहादिति भावः। तत्रप्रमाणमाह दीर्घादिति।

भैरवी।

ति सामान्यतः उपादानेनावर्णविपर्ययेऽपि लक्षणयैव निर्वाहे तत्र शक्त्या बोधनस्यावश्यकत्वं ध्वनितम्। यत्तु युगपद्वृत्तिद्वयकल्पनाया विरोधेन सर्वेषां लक्षणयैव बोधनमुचितम्, किन्तु "दीर्घाज्जसि च" इति ज्ञापकादिवर्णद्वय इ इकारेऽस्तु लक्षणा, इत्वोकारादीनान्तु शक्त्यैव बोधनम्भविष्यतीति तत्र यणादेशसिद्धिः। "त्यादिभ्य" इत्यादिनिर्देशस्य दीर्घोकारादावपि लक्षणया बोध्यत्वसाधकत्वे त्वनेकज्ञापककल्पनापेक्षया जातिपर एव ज्ञापकमस्त्विति। तथा सति तात्पर्ये युगपद्वृत्तिद्वयस्य "गङ्गायां भीमघोषौ स्त" इत्यादिषु दर्शनेन तयोर्विरोधस्याभावात्। इति चेन्न। उपलक्षणमिति दोषः। आवश्यकत्वादिति। अन्यथोक्तरीत्याऽनुपपत्तिपरिहाराभावादिति शेषः। ननूक्तार्थयोर्लक्षणास्वीकारे "अस्य च्वौ" इत्यत्रैकारादिप्रत्ययविषयेऽपि स्यात् तया सम्भवादिति प्रवेत्यत आह—अणुदित्सूत्रेति। अत एव—विधीयमानातिरिक्तविषयेति स्वीकारादेव। ननु "नाज्झलौ" इत्यादावनुवादस्थेऽदोष एवेत्यत आह—नाज्झलाविति। अग्रहादिति। वाक्यापरिसमाप्तिन्यायेन "नाज्झलौ" इत्यादिघटकप्रत्याहारस्य स्वाश्रयतावच्छेदकधर्मावच्छिन्नबोधकत्वस्यैव सम्भवादिति भावः। ।

तत्र—लक्षणायाम्।

ननु "प्रथमयो" इति सूत्रेऽनुवृत्तं यदगिति पदं तत्राकारस्योच्चारणेन सम्भाव्यत्वात्तत्राणुदित्सूत्रस्य प्रवृत्त्या 'विश्वपा' इत्यादौ प्राप्तस्य पूर्वसवर्णदीर्घस्य व्यावृत्त्यर्थं "दीर्घाज्जसि

भावप्रकाशः।

मूले न्यूनता परिहृता, प्रकृताभिप्रायेण तयोरेव। क्रमेणोभयोरुपलक्ष्यद्वयमाह अस्येति। अत्रापि स्वसदृशत्वस्य प्रत्यक्षमात्रत्वेन तत्रोक्तरीत्या तद्वाच्यत्वरूपेण तद्वाच्यत्वतावच्छेदकत्वेनोपादानसम्भव इति भावः। "त्यदादीनाम." इत्यादौ दोषमुद्धरन्ति—अणुदिदिति। इत्युक्तेरिति। तथा च तदन्यस्यैव स्वादिपदार्थत्वेन बाधकत्वादुक्तसूत्राप्रवृत्तत्वाच्च न लक्षणानाच्छेदकग्रहस्तत्रेति भावः। लक्षणेति। तथा च इत्व एव तत्र विधेय इति भावः इदमुपलक्षणम् "इको यणचि" इत्यादौ यणादीनामपि। अनुवादत्वेनोक्तबाधकाभावादुक्तरीत्या वाक्यार्थभावेन तदेकलक्षणसूचकसूत्रस्य। अग्रहादिति। तीरत्वलक्षणामूलशक्यसम्बन्धग्रहं विना यथा तीरे न लक्षणा, तथाऽत्रापि वाक्यापरिसमाप्तिन्यायेन वाच्यवाचकभावस्य तादात्म्यस्य वा स्वशक्यसम्बन्धस्याज्ञानत्वात्तस्याप्यग्रहेण सा दुर्वचैव। अत एव "आदिरन्त्येन" इति सूत्रमत्रापि सफलमिति भावः। इदञ्च प्राक् प्रतिपादितम्। तत्र लक्षणायाम्। यत्तु श्रुत्या प्रतीतरेवोक्ता वर्णैकपदेन प्रतीतोकारादेर्दीर्घादिग्रहणाभावात्वं न स्यात्, अनुच्चारितत्वात् इत्याशङ्कां कृत्वा व्यक्तिपक्षेऽणुदित्सूत्रेण दीर्घकारादीनामपीवर्णवाच्यत्वग्रहादिति समाधाय, तदप्युक्तरीत्या आवर्णे एव शक्तिग्रहमित्याशङ्क्य, दीर्घादित्यादिज्ञापकादाव्याहारान्तरेणानुच्चारितोकारादिसवर्णेऽपीत्यादिपरशक्तिबोधकमणुदि

सरला।

दीनामुपस्थितिरिव पदनिष्ठशक्तिमन्योपस्थित्या इकारादयस्तन्निष्ठशक्तिमन्त्यैवेति दोष इति। स्वसवर्णग्रहणेऽपि तन्त्रादिना कथञ्चिदध्याहारावयवेन स्वसवर्णदीर्घाऽऽदीनां ग्रहणेन 'विश्वपौ' इत्यत्र कस्यचित् मौ इत्यवस्थायां "प्रथमयोः पूर्वसवर्णः" इत्यनेन पूर्वसवर्णदीर्घापत्तिरूपदोषसम्भवेऽपीत्यर्थः।

ग्रहणात्। अतो नास्ति यथासङ्ख्यम्। न च लक्ष्यार्थबाधात्पूर्वभाविनं शक्यार्थबोधमादाय यथासङ्ख्यमस्त्विति वाच्यम्। एवमपि तृतीयचतुर्थाभ्याम् ऋकारलृकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ लृवर्णानां रेफादेशस्य ऋवर्णानां लादेशस्य च प्रसङ्गा

---

शब्दरत्नम्।

भेदमादाय मसत्त्वसंख्या न विरुध्यते। यदि तु अणुदित्सूत्रेऽण्ग्रहणाद्यण्विषये गुणानां भेद कर्तैवोचितेति विभाव्यते, तदाऽपि चत्वारो यण इति यथासंख्यमसङ्गतमेव। तद् ध्वनय न्नाह—अतो नास्तीति। तत्खण्डने एवाग्रहो न तु ससत्त्वसंख्यायामिति भाव। श क्यार्थबोधमादायेति। "ख्यात्यात्परस्य" (पा०सू०८।२।४४) इत्यादिनिर्देशोहितताल्प र्यानुपपत्तिग्रहस्य तत्सत्त्व एव सम्भवेन स बाध आवश्यक। तत्र च यथासंख्यसहायेन वाक्यार्थे निष्पन्ने "ख्यात्यात्परस्य" इत्यादिनिर्देशाल्लक्षणया जायमाने पुनर्वाक्यार्थबोधे लक्षि

मैत्री।

नाह—यदि त्विति। चत्वार इति। निरनुनासिकानामेव यादीनां यण्शब्दबोध्यत्वात्। तत्खण्डन इति। यथासङ्ख्यखण्डन इत्यर्थ नतु शक्यार्थबोधमादायेत्यसङ्गतमुक्तरीत्या सर्वत्र लक्षणया बोधस्यैवस्येष्टत्वादत आह—ख्यात्यात्परस्य इत्यादीनि। 'ख्यात्यात्परस्य" इति निर्देशेनोहित कल्पितो यस्तात्पर्यानुपपत्तिग्रहस्तस्य शक्यार्थबोधसत्त्वे एव सम्भव इति शक्यार्थबोध आवश्यक, लक्षणायाः शक्यार्थोपस्थितिमूलकत्वादिति भाव। उक्तरीत्या "दीर्घाज्जसि" इत्यस्य चा रितार्थ्यादत्र 'ख्यात्यात्परस्य" इत्येवोक्तम्। तत्र चेति। शक्यार्थबोधानन्तरं जायमाने वाक्या र्थबोधे इत्यर्थ। शक्यार्थोपस्थितिमूलकवाक्यार्थबोधेऽपि "ख्यात्यात्परस्य" इत्यादिनिर्देशानुपप

भावप्रकाश।

शण्ग्रहणादिति। तर्हि शुद्धयादिग्रहणेनान्येषामपि ग्रहण यथास्यादित्येवमर्थम्। यदि च तत्रापि तत्प क्षे तदाश्रयणं तदीष्टसिद्धिरेवेत्यणग्रहणमेव कुर्यादिति भाव। यद्यप्युक्तन्यायेनाण्विषये तदनाश्रयण सिद्धिस्तथापि प्रकृतानुपयेनाह—यणिति। उचितेति। सूत्रमते इति शेष। भाष्यमते नाशिपक्षे तस्यैवा सत्त्वात्। एवञ्च सत्त्वोक्तिरभेदकत्वेनेत्याद्युचितव्याख्यानैवेति भाव। विभाव्यत इति। अनेन स्वानभि मतत्वं ध्वनितम्। योगविभागेनाप्रत्यय इति भाष्यमानेनेति वा गुणाभेदकत्वप्राप्तस्य निषेधेन तज्ज्ञापने सूत्रमतेऽपि फलाभावादिति बोध्यम्। तथापि मूलेष्टार्थाहानिरित्याह—तदापीति। भेदकत्वेऽपीत्यर्थ। चत्वार इति। शुद्धानामेव तेषामुच्चारितत्वात्। अतएव न कौस्तुभविरोधो मूलस्येति भाव। यथासङ्ख्यमिति। प्रक्रियाकृता तत्सूत्रं सङ्क्षिप्योक्तमिति भाव। तद् ध्वनयन्—तदेव ध्वनयन्नित्यर्थ। ननु फलान्तरमस्ति, येन तस्य सार्थक्यं भवेदिति भाव। अत उक्तरीत्या पक्षद्वयेऽपि वैयर्थ्यात्। तदाह— तत्खण्डने इति। प्राचाङ्गीकृतयथासङ्ख्यखण्डने इत्यर्थ। अन्यथा अतोनास्तीत्यादि वाक्यं निष्फलमेव स्यात्। एवेन गुणानामभेदकत्वे कथं ससत्त्वेऽनुनासिकयवलग्रहणं हेतुरस्ति खण्डनं दुरुत्तमशास्त्रमिति भाव। अकारलृकारस्थानस्य खण्डिति मूले—न च लक्ष्यार्थेति। ननु लक्षणयैव सर्वेषां बोधस्योक्तत्वेन शक्यार्थबोधस्यैवाभावः, अतस्तदाशयमाह—ख्यात्यात्परस्य इत्यादि। "दीर्घाज्जसि" इत्यस्योक्तरीत्या चारितार्थ्याद् त्याग लक्षणानङ्गीकारेऽनुपपन्नत्वादीत्यादिनिर्देशकल्पितदीर्घाद्यधिकरणकयण्सिद्धिग्रहस्य, तत्पूर्वकमेव लक्षणाप्रसरात्तद्बीजस्य शक्यार्थबोधसत्त्व एव सम्भवेनेत्यर्थ। अयम्भाव, शक्यार्थोपस्थितौ तद्विषयकान्वयबाधे जाते तस्मिन् वक्तृतात्पर्याविषयत्वेनाप्रामाण्यग्रहे तदन्यत्र वक्तृतात्पर्यग्रहे च सति लक्षणाग्रहात् लक्ष्यार्थबोध, तदन्वयबोधं विना तत्र तात्पर्याविषयत्वग्रहासम्भवात् समग्रविषयकज्ञानस्यैवा तद्बोधकत्वादिति। तत्र चेति। आवश्यकशक्यार्थस्मृताविपर्यं। निष्पत्तौ हेतुरयम्। वाक्यार्थ इति। वाक्यार्थचतुष्टये 'हस्युत्तरस्य' इत्यादिनिदर्शलक्ष्यसंस्कारके निष्पन्ने इत्यर्थ। निष्पन्नत्वमत्र्ये हेतु। पुनरिति। इग्वाच्यदीर्घादीनां यादय इत्यादिरूप इत्यर्थ। बोधे इति। विषयत्वे सप्तम्यर्थ। दीर्घा

त । तस्मादिह "स्थानेऽन्तरतम" (पा०सू०१।१।५०) सूत्रेणैवेष्टसिद्धिरित्यभिप्रेत्याह—स्थानत आन्तर्यादिति ।

शब्दरत्नम् ।

ह्रस्वदीर्घादीनां स्ववाचकान्वयिन्येवान्वय इति भाव । स्थानेऽन्तरतमसूत्रेणैवेति । व्यक्तिपक्षे व्यक्तीनामानन्त्येन संख्याज्ञानाभावाद्यथासंख्यासम्भवाल्लक्ष्यासिद्धेश्चेति भाव ।

परे तु व्यक्तिपक्षे झलादिप्रत्याहारसूत्रेषु सवर्णझकारादीनां ग्रहणं दुरुपपादम् । न हि

भैरवी ।

सिद्धस्त्वेवेत्यत आह—स्वादिष्विय इत्यादीति । स्ववाचकेति । दीर्घवाचकह्रस्वान्वयिनोरित्यर्थः । स्थानेन्तरतमसूत्रेणैवेति मूलस्थैवकारेण यथासंख्यसूत्रं व्यवच्छिन्नमित्याह—व्यक्तिपक्ष इति । एवं व्यक्तिपक्षे दोषमुद्भाव्य तस्मिन्पक्ष एव "स्थानेऽन्तरतम" इति सूत्रस्य प्रवृत्तिरिति न, किन्तु जातिपक्षेऽपीत्याह—लक्ष्यासिद्धेश्चेति । निरनुनासिकयकारवदितानां य्वादीनामित्यादि लक्ष्याणामसिद्धेरित्यर्थः । यदि यथासङ्ख्यपरिभाषाप्रवृत्तिस्तदाऽनुनासिकोऽपि यकारः क्वाचित्स्यात् भाव्यमानेन सवर्णानां ग्रहणं नेत्यतिरिक्ता तु परिभाषा गुणाभेदकत्वात्प्राप्तस्य सवर्णग्रहणस्य न बाधिका, किन्त्वणुदित्सूत्रप्राप्तसवर्णग्रहणस्यैवास्तीत्याशयेनाह—भाव इति । मूलकाराशय इत्यर्थः । नन्वेवं सति यथासङ्ख्यसूत्रे भाष्ये—'किमुदाहरणम्' "इको यणचि" 'दध्यत्र' 'मध्वत्र' इत्युक्तं, तद्विरोध इति चेन् ? न, तस्य भाष्यस्य प्राथमिकोपस्थितिकवर्णाभिप्रायकत्वात् ।

अथ मूलकाराशयमुपवर्ण्य भाष्यकारीयसिद्धान्तानुसारेणाह—परे त्विति । प्रत्याहारसूत्रेषु

भावप्रकाशः ।

दावव्यय, सतिसप्तमी वा । स्वेति । स्वस्य दीर्घादेर्वाचको यस्तत्वस्य इकारादिह्रस्वस्तस्योत्तरोत्पन्नस्यान्वयवति यकारादावित्यर्थः । विभक्त्यर्थद्वारेति शेषः । उपस्थित परित्यज्येति न्यायादिति भाव । एवञ्च मूले एवमपीति । अस्य भक्षितेऽपीति न्यायमूलकापि ना एकदेशे निर्वाहेऽपीत्यर्थ इति सूचितमिति बोध्यम् । उभयत्र भाष्योक्तिस्तु प्राचामनुरोधेनेति स्पष्टं सिद्धान्तविदाम् । एवकारसूचितहेतुमाह—व्यक्तीति । आनन्त्येनेति । देशकालोच्चारयितृभेदात् सङ्ख्यानुन्यत्वेनेत्यर्थः । अस्यार्थस्य ज्ञानाभियादेस्तु तज्जातीयानामित्याचार्यः । एवं यदुच्छिरित्यादेरपि । वर्णा यमोति यथासङ्ख्यमित्यादिग्रन्थाग्तु जातिपक्षाभिमाया एवेति भाव । ननु जात्या सकलव्यक्त्यनुगमेन नानन्त्य दुष्टम्, अत आह—लक्ष्येति । अनुनासिकवकारघटितस्वीनसित्यादिलक्ष्यासिद्धेरित्यर्थः । एवञ्चानुनासिकानुनासिकव्यवस्थार्थमावश्यिकया स्थानेन्तरेतिपरिभाषयैव निर्वाहे तत्प्रवृत्तिर्निष्फला । अत एव यथासङ्ख्यसूत्रस्थभाष्यसङ्गतिः । तत्सूत्रस्थोऽपि स्थानेन्तरेतिसूत्रभाष्य च द्वयो सिद्धान्तपक्षे समकक्षत्वबोधकमिति न तद्विरोध । एतेनैवकारो द्युक्तभाष्यविरुद्ध इति मन्दोक्तम् । यथासङ्ख्यानङ्गीकारे उक्तभाष्यविरोध, किञ्च अनुनासिकांशे तद्व्यापारेणान्तरतमपरिभाषाभङ्गस्तत्प्रयुक्तरीत्यान्यांशे प्राप्तामपि तां परत्वाद्बाधित्वा प्राप्ता तां को निवारयेदिति जगन्नाथोक्तमविरोधात्प्राथमिकबोधे एव परिभाषाद्वयस्याप्युपस्थितिरिति रत्नाकरोक्तं चापास्तम् । यत्तु "ह्रस्वस्य" इत्यादावप्यानन्त्येन तदसम्भवात्सूत्रं निर्विषयं स्यात् । किञ्च स्थानेन्तरेत्यस्य प्रवृत्तौ तमबग्रहणाच्चतुर्मुखादावनुनासिकस्येव स्थानप्रमाणोभयान्तरतमे ह्रस्वे चरितार्थस्य यणो दीर्घेऽप्रवृत्तिः स्यात्, इवादौ य्वादिनिर्देशाश्रवणे तु गौरवमिति मन्द । तन्न, उक्तोत्तरत्वात् । जातिपक्षे सूत्रचारितार्थ्याच्च सप्तम्यन्तपाठस्य भाष्ये खण्डितत्वाच्चेति दिक् ।

नन्वेवमप्यणुदित्सूत्रभाष्यविरोधोऽत्र पक्ष झलादिष्वनिर्वाहश्च । अत एव जातिसङ्ख्याभ्यमादाय स हूल्यादानुदेशो भाष्यकृतामभिमत । निरूढलक्षणाऽप्येतत्सति नाङ्गीकर्तव्येति जगन्नाथोक्तिरपि सङ्गच्छते । अत आह—परेत्वित्याद्याहुरित्यन्तेन । परे भाष्यानुयायिन । तु उक्तनैलक्षण्याय । झलादिप्रत्याहारेति बहुव्रीहि । "झलो झलि" इत्यादिसूत्रेष्वित्यर्थः । यद्वा झलादिप्रत्याहारफलकथभम् इत्यादिसूत्रेष्वित्यर्थः । सवर्णझकारेति पाठ । यावद्विसझकारादीना मत्यर्थ । एतेन प्रपञ्चवर्णिकाव्ययसम्बन्धिना वर्णानेकत्रग्रहणासम्भव इत्यपास्तम् । दुरुपपादमिति । एकव्यक्तेस्तत्र पाठात् । ततश्च अचाम्' इत्यादौ वर्तेनुवर्ण्य

## शब्दरत्नम् ।

तत्र लक्षणा वक्तुं शक्या, लक्ष्यतावच्छेदकाग्रहात् । एवं च तत्र प्रत्याहारसूत्रेषु जातिनिर्देशेनैव निर्वाहो नान्यथा । एवं च "अइउण्" (मा०सू०१) इत्यादावपि जातिनिर्देश एवोचित, अर्द्धजातीयस्यानौचित्यात् । अत एव "अणुदित्—"(पा०सू०१।१।६९)सूत्रभाष्ये प्रत्याहारेषु "अस्य च्वौ" (पा०सू०७।४।३२) इत्यादौ च दकारमनुपपत्तिमाशङ्क्य जात्याश्रयणमेव कृतम् । यथासंख्यसूत्रं च व्यक्तिसाम्य इव धर्मसाम्येऽपि प्रवर्तते । "स्थ

## भैरवी ।

प्रत्याहारघटितेषु 'झलो झलि" इत्यादिषु सूत्रेषु । मग्रहादिति । झलामणुभिन्नत्वादिति शेष तत्र—तेषु । प्रत्याहारसूत्रेषु—प्रत्याहारघटितेषु सूत्रेषु । इदमुपलक्षणम् ' अस्य च्वौ" इत्यादेः जातिनिर्देशेन एव तत्र ज्ञाते बोद्धेश्यत्वनिमित्तत्वतात्पर्यकत्वादेव । यद्यपि साक्षात्पाठो तदसम्भवस्तथापि व्यक्तिद्वारा बोध्य इत्युक्तमेव । निर्वाह—अवान्तामित्यादिलक्ष्यासानिर्वाह । एवञ्च—जातिपक्षाश्रयणत्वे च । उचित इति । प्रत्याहारनिर्देशस्थले तत्तत्प्रत्याहारेणोद्देश्यबोधनायेत्यादि । अत एव—जातिपक्षाश्रयणतात्पर्यकत्वादेव । दकारमिति । व्यक्तिपक्ष इत्यादि । तत्र हि–"प्रत्याहारनिर्देशे सवर्णग्रहणमनर्थकत्वात् । तत्रानुवृत्तिनिर्देशे सवर्णग्रहणमनण्त्वात्" इत्यनेनोक्तमित्यर्थ । एव कृतमिति एवकारेण लक्षणाव्यवच्छेद । लक्षणावादिमतेऽण्विषये व्यक्तिपक्षाश्रयणमणिभिन्नप्रत्याहारग्रहणस्थले जातिपक्षाश्रयणमिति यद्वैरूप्यं, स तस्मिन्मते नास्ति । एवञ्च यथोत्तरम्मुनीनाम्प्रामाण्यमिति लक्षणाश्रयणमप्रामाणिकमिति भाव । जातिपक्षाश्रयणस्याभिप्रेतत्वादेव "स्थानेऽन्तरतम" इति सूत्रभाष्ये–' किमुदाहरणम् ? इको यणचि 'दध्यत्र' 'मध्वत्र' । यथास"ङ्ख्येनाप्येतत्सिद्धम्' इत्युक्तम् । यत्तु यथासंख्यसूत्रे दध्यत्र मध्वत्रस्यस्य स्थानेऽन्तरतमसूत्रोदाहरणत्वप्रदर्शनमसम्भाव्य, तत् "इको यणचि" इत्यादौ सूत्रे तदुदाहरणे चोभयपक्षे फलतो वैलक्षण्याभावतात्पर्यकमित्याशयेनाह—यथासंख्यसूत्रमपि । यथेति । यदि व्यक्तिसाम्यस्य विवक्षा स्यात्तदा तत्रान्येन तत्फलबोधने

## भावप्रकाश ।

तत्रस्थानि तिथि "स सि" इति तले "झलो झलि"इति सलोपो न स्यात् । तस्य त्वमित्या इत्यादिरेकार इति भाव । अग्रहादिति । अणुदित्सूत्राप्रवृत्तेरिति भाव । एवञ्चेति । लक्षणाया दुर्वचत्वे चेत्यर्थ । तत्र झलमित्यादिषु । जातीति । जातितात्पर्यकनिर्देशेनेत्यर्थ । अन्वयमुखेन व्यतिरेकं दर्शयितुमेवम्प्रायपर्यन्तमाह–भाष्येति । जातिपक्षानाश्रयणे इत्यर्थ । एवञ्चेति । तत्पक्षाश्रयणावश्यकत्वे चेत्यर्थ । जातीति । व्याप्त्यनाद्यीत्यर्थं । एवमग्रेऽपि । व्यक्तिपक्षे इव सादृश्यजातिपक्षेणापि तत्रानिर्वाहादिति भाव । उचित इति । लक्षणाभावनलाघवादिति भाव । हेत्वन्तरमाह अर्घेति । अर्थांशे लक्षणा, हलंशे जातिरत्र इत्येवंरूपस्येत्यर्थ । सम्भवत्येकरूप्ये वैरूप्यस्यान्याय्यत्वादिति भाव । नन्वणुग्रहणप्रामाणिकत्वस्वीकारे न दोष, अत आह–अत एवेति । अर्धजरतीयानौचित्यादेवेत्यर्थ । दकारमिति । "प्रत्याहारे सवर्णग्रहणमनुदेशात्"""तत्रानुवृत्तिनिर्देशे सवर्णग्रहणमनण्त्वात्"इत्यादिना प्रागुक्तरूपमित्यर्थ । एतेन लक्षणाप्यवच्छेद । तथाच यथोत्तरमुनीनां प्रामाण्यात्तदप्रमाणमिति भाव । कृतमिति । "आकृतिग्रहणात्सिद्धं तदन्त इत्यस्मिन्प्रकरणे इत्यादिषु च" इत्यादिनेति भाव । ननु ममापि न तत्पक्षे तत्प्रतिपादने आग्रह, किन्तु यथासंख्यखण्डन इत्यत्र पक्षेऽपि तत्सिद्धिरेव, व्यक्तिसाम्ये एव तत्प्रवृत्त । अत आह—यथासङ्ख्येति । समूलाकृते यादानिवात्

## सरला ।

लक्ष्यतावच्छेदकाग्रहादिति । यथा कलशादीनामप्यदर्शनेऽपि लक्ष्यतावच्छेदकत्वस्य ग्राहकमणुदित्सूत्रं वर्तते तथा झलादौ तत्तद्ग्राहकस्य कस्यचिदभावेन लक्ष्यतावच्छेदकत्वस्य ज्ञानुमशक्यतया झलादीनां सर्वेषक्षारव्यक्तिषु लक्षणा नैव वक्तुं शक्येति भाव ।

धर्मसाम्येऽपीति । तूल कुसुम चादाय स्वतास्योर्यथासंख्येन प्रवृत्तिर्भवति । अ०१।१ तूलन्देन

अनचि च (पा०सू०८।४।४७)। द्वेवेति। "यरोऽनुनासिके" (पा०सू०८।४।४५) इति सूत्राद् वाग्रहणमनुवर्तते इति "नाज्झलौ" (पा०सू०१।१।१०) इति सूत्रे कैय-

---

शब्दरत्नम् ।

तासी लृटो " (पा०सू०३।१।३३) इत्यादौ यथा । नाप्यत्र पक्षे ऋकारादौ ऌकाराद्याप त्ति । ऌत्वादिजातेर्ऋकारादावभावात् । न च जातिपक्षे अणुदित्सूत्रेऽण्ग्रहणप्रत्याख्याने "उपसर्गादृति-" (पा०सू०६।१।९१) इत्यादौ ऋकारेण ऌकारग्रहणाय सावर्ण्यवचनस्था- ने ऌवर्णस्य ऋवदतिदेशाद् ऌकारे रेफापत्तिरिति वाच्यम्, क्लृप्तशिखार्थं तस्यातिदेशस्या

भैरवी ।

तत्र यथासङ्ख्यसम्बन्धो न स्यात् । न चैको यणचीत्यत्र स्थानसाम्यमपि नियामकमिति यदि फलाभेदाय कल्पयसि तदा ऌकारस्य वकारोऽपि स्यादिति वाच्यम्, "स्थानेऽन्तरतम" इत्यत्र तमग्रहणेनाप्यूनातिरिक्तस्थानकादेशस्य ग्रहणात् । यथासङ्ख्यसूत्रस्यैको यणची त्यत्र प्रवृत्तिस्वीकारपक्षे मूलोक्तदोषापत्तिं परिहरति—भाष्येति । अतिदेशादिति । समानना

भावप्रकाशः ।

मीति भाव । तत्र प्रामाण्याय दृष्टान्तमाह—स्यतेति । अन्यथा तत्र सामान्यग्रहणेऽपि भाष्यर्धकादिल्लृद्- साहचर्याद् लृडेव गृह्येतेति भाव । एतेन मूलोक्तप्रथमदोषटीकोक्तव्याख्यान-र्थप्रयुक्तदोषश्च उद्धृत । एतच्च प्राचीनग्रन्थसौष्ठवे मूलमेवायुक्तमिति भाव । एतदेव ध्वनयितु तदुक्तदोषान्तरमप्युद्धरति—नापीति । एतेनैवमपीति मूलोक्तदोषो व्यक्तिपक्ष इति ध्वनितम् । तच्चोपपादितं प्राक् । ऌकाराद्येतिपाठ । अभा वादिति । नचोभयोरुभयत्राप्यत्वे जातिष्वविशिष्टैव सत्रव्यक्तित्वमत्वादिति वाच्यम्, सावर्ण्यवशात्त स्यारोपेण तथाप्यवहारोपपत्ते । अत एव पृथक्ऌकारोपदेश सार्थक इति भाव । एव मूलाभिमतसर्वदोषो- द्धारेऽपि प्रकारान्तरेणाऽऽशङ्कते—नचेति । प्रत्याख्याने इति । "सवर्णेऽणूग्रहणमपरिभाष्यमाकृतिग्रहणा त्" इत्यादिनेति भावः । यद्येव वार्तिकस्याप्यमूलत्वादसत्त्वेन त्रिवदनुरस्त्विदयैव न दोष । नचैव 'होतृऌ कार' इत्यादो "अक सवर्णे" "ऋत्यक" इत्यनयोरप्यप्राप्तिरिति "ऋतोऽसवर्णे" इत्यस्याप्रवृत्तिश्च, "उपसर्गादृति" इत्यादौ दोषस्चैवेति वाच्यम्, 'ऋऌक्' सूत्रे भाष्ये तद्वाचकानन्यथोद्धृतत्वात् । नच तर्हि नचेत्यादिग्रन्थासङ्गतिरेवेति वाच्यम्, गम्लृ शक्लृ इत्यादिऌकारानुकरणे दोषान्यथासिद्धेरभावादिति । तत्र, तदुक्तस्य भाष्यसिद्धान्ताज्ञानात् । तथाहि, तत्र हि ऌकारोपदेशस्य श्लोकत्रयस्य वार्तिककृता खण्डितत्वेऽपि भाष्यकृताऽशक्तिजानुकरणार्थत्व व्यवस्थापितम् । तथा च 'कुमार्य्लृतक इत्याह' इत्यादौ यणा दिसिद्धि । नचैवमपि 'होतृ ऌकार' 'प्लुतऌकारीयति' इत्यादौ दोष इति वाच्यम्, व्यक्तिपक्षे सावर्ण्याणूग्रह णलक्षणाभिर्जातिपक्षे सावर्ण्याणूग्रहणाभ्यां सावर्ण्येन समानजातित्वातिदेशेनैव वा निर्वाहात् । नचैव तदुप देशो व्यर्थ, कैयटमते वार्तिकोक्तसावर्ण्यमनाश्रित्योपदेशकरणात् । मूलमते वार्तिक दृष्ट्वा तदप्रवृत्ते । तद नियमज्ञापनेन चारितार्थ्यञ्च । अत एव प्लुतसिद्धि । साङ्कर्याभावो लृदित्सु फलिताभावश्च । वस्तु- तस्तत्रानुपदेशेऽप्रामाण्यशङ्कया सवर्णसंज्ञापि तयोर्वक्तुमशक्येति वार्तिकासङ्गतिरेव स्यादिति तदुपदेश सा वर्ण्यद्वारा फलमपि तस्य स्वरत्रय एवेति कुत्रैव वार्तिककृतस्तदुक्तिः । एवञ्च ऋवदतिदेश एव फलितोऽत्र स एवोचित, लाघवात् । अन्यथा "लृति ऌ वा" "पुषादि" इत्यादावदोषाय वचनद्वयपृथगनुबन्धकरणादिसाम र्थ्याश्रयणे गौरव स्पष्टमेव । अतएव साङ्कर्यमपि नेति । तद्ध्वनयन्नाह—उपसर्गादिति । आदिना 'ऋत्यक" "इरणू रपर "इत्यादिसङ्ग्रह । एतेन स्वरसन्धिप्रकरणे ऋवातिदेश पाठ्य इति कौस्तुभोक्त निरस्तम् । तावता ऽप्यसिद्धावपि पक्षद्वये उरणित्यादावनिर्वाहात् । तद् ध्वनयन्नाह—वचनस्थाने इति । तुल्यास्यसूत्रे तत्प्रति निधित्वेनेत्यर्थ । शब्देन्दुशेखरविरोधस्तु न, लाघवानादरेण तत्प्रवृत्तेरिति भाव । ऌकारे इति । वैप-

सरला ।

ऌयेदयोर्व्यक्त्योर्ग्रहणेन लुटलृटोरैक्यस्य लुटलृकारस्य ग्रहणेन स्यतास्योर्यथासङ्ख्य प्रवृत्तिर्न स्या दिति यथासङ्ख्यसूत्रस्य व्यक्तिपक्षेऽपि धर्मसाम्यमादाय प्रवृत्तिरवश्यमभ्युपगन्तव्येति तदाशय । अति देशादिति । "ऋऌवर्णयोर्मिथ सावर्ण्यं वाच्यम्" इति वचने सावर्ण्यपदेन साजात्यस्य विवक्षितत्वात् ।

शब्दरत्नम् ।

नित्यत्वावश्यकत्वात् । तत्पक्षेऽण्ग्रहणप्रत्याख्यानेऽपि "अप्रत्यय." (पा०सू०१।१।६९) इत्यंशो वाक्यभेदेन विधीयमाने जातिग्रहणप्राप्तसवर्णग्रहणनिषेधकस्तपरसूत्रवदिति "त्यक्षा-

भैरवी ।

तित्वातिदेशादित्यर्थ । वस्तुतो ऋत्वजातिर्ऌकारे नास्ति पृथक्पाठस्याक्षरसमाम्नाये कृत-त्वात् । अनित्यत्वेति । ऋऌक्सूत्रे पृथक्पाठस्य धातुपाठे ऋकारऌकारयोः पृथक्करणस्य चात्र ज्ञापकत्वसम्भवादिति शेषः ।

ननूद्देश्यांश इव विधेयांशेऽपि जातिनिर्देश एव वाच्यस्तथा च "त्यदादीनाम." इत्यादौ दीर्घापत्तिरत आह—तत्पक्ष इति । जातिपक्ष इत्यर्थः । प्रत्याख्यान इति । "सवर्णेऽण्ग्रहणमपरि-भाष्यमाकृतिग्रहणात्" इत्यनेन भाष्यकृता प्रत्याख्यान इत्यर्थः । वाक्यभेदेन—योगविभा-गेन । "चो कु" इत्यादौ विधेयविषये उदित्करणसामर्थ्यात्सवर्णग्रहणस्यावश्यकतया तदेक वाक्यत्वस्यानावश्यकत्वेन योगविभाग आवश्यक इति भाव । मचोच्चारणार्थ एवोकार इति शङ्क्यम् ? उदूद्देश्येऽपि तथात्वापत्तेः । उदित्ग्रहणसामर्थ्यादिति चेत् ? विनिगमनाविरहेणो भाभ्यां सवर्णग्राहणं दुर्वारमेव । निषेधक इति । एतेनाधुना प्रसज्यप्रतिषेधार्थको नञिति बोधि

भावप्रकाशः ।

रीत्य तु नैवात्र पक्षे इति भावः । ननु तत्र तदतिदेशादीकारे तत्र रेफापत्तिवत् प्लुतनिषेधापत्तिः, "क्ऌप्ति क्ऌप्ता" इत्यत्र लत्वपत्वापत्तिश्च, लदित्सु ऋदित्कार्यापत्तिश्च, वचनद्वयं तु ऋकारे "ऌति ऌवा" इत्यस्या प्रवृत्त्या चरितार्थम् । एवं पृथगनुबन्धकरणमपि ऋदित्सु ऌदित्कार्याप्रवृत्त्येति चेत् ? न, अतिदेशानित्यत्वेन क्वापि दोषाभावात् । तथाहि व्यक्तिपक्षे समानजातित्वातिदेशपक्षे च मात्रसादृश्यादेः सावर्ण्यकग्रहणाद्दी कारपक्षे सादृश्याभावेऽपि प्लुतदत्वनिषेधयोरापत्तेश्च । मूलमते ऌकारोपदेशेन सावर्ण्यानित्यत्वज्ञापनेन वारणवत् । तत्रैव नव्यमते पृथगनुबन्धकरणेन क्वचिन्मिथोऽग्राहकत्वस्य ऋदित्ऌदित्कार्यासाङ्कर्यस्य च ज्ञापनेन वारणवच्चात्र पक्षे वक्ष्यमाणासिद्धिदोषस्य ग्रहणाग्रहणभेदेन प्रकारान्तरेण वारणेऽपि क्ऌप्तशि-खादौ पूर्वत्वेन एत्वस्यासिद्धत्वेऽपि एकदेशेतिन्यायेन वार्तिककृता स्वीकृतस्यापि प्लुत्यादिफलस्य सैवेत्यादिभाष्येण महायाससाध्यमल्पफलं यथा न युक्तमेवमतोहृस्वस्येति गुरुन्यासरूपसूत्रभेदेन ऌका रप्रत्याख्यानमरीत्याश्रयकेन व्यवस्थापनेन तदर्थं तदुपदेशेऽव्यवस्थित्या द्विमात्रत्वविधिवदपि प्रागुक्तरीत्या तावन्मात्रेणानिर्वाहात्सावर्ण्याद्यन्यतमस्य पक्षद्वयेऽप्यावश्यकत्वेन 'अनृत' इतिनिषेधापत्त्या कृतेऽपि तदुप देशे प्लुतासिद्धिरवेति तत्फलं सावर्ण्यादेरनित्यत्वं विना दुर्घटमिति । तेन तदपि भाष्यत इत्यतिदेशस्या नित्यत्वस्यावश्यकत्वम् एकदेशेतिन्यायस्यैव । अतएव तदप्रवृत्तिः । अन्यथा तदनित्यत्वेऽपि प्लुतनिषेधाप-त्तिस्तदवस्थैवेति दिक् । तदेवं हृदि निधायाह—क्ऌप्तेति । अत्र प्लुतसिध्यर्थमित्यर्थः । इदमुपलक्षणम्-ऌकारे तत्सिद्धेः । यस्त्वत्र पक्षेऽप्रत्यय इत्यपि न कार्यम् । 'अद्य समार्ष्टि' 'पशुना यजेत' इत्यादावविवक्षावि-वक्षाभ्याम् "अस्य च्वौ" "त्यदादीनाम." इत्यादाविष्टसिद्धेरिति कौस्तुभकृत् । तन्न, बहुशो वैप-रीत्यदर्शनेन तयोरत्राश्रयणस्य दुष्करत्वात् तच्छास्त्रे धर्मशास्त्रे च तयोर्व्यभिचरितत्वाच्च तपरसूत्रसार्थक्य-परत्वपूर्वग्रन्थविरोधाच्च । तद् ध्वनयन्नाह—तत्पक्षे इति । अंशत्व च यथाश्रुतग्रन्थरीत्या समुदायस्वरू पघटकत्वमात्रेण निषेधस्य निषेध्याकाङ्क्षया तद्विशेषणत्वेन वा बोध्यम् । वाक्यभेदेनेति । अन्यथा "चोः कुः" इत्यादौ विधेये उगित्वानर्थक्यापत्तिः । एवञ्च योगविभाग एवात्र पक्षे उचित इति तात्पर्यम् । एतेनानन्तरेतिन्यायेन तस्यैव निषेधो न तु टीकोक्तस्य । तत्र तदानर्थक्यं तु न, तस्योच्चारणार्थत्वादिति मन्दोक्तमपास्तम्, उक्तयुक्ते, ऐच्छिकोच्चारणार्थत्वेऽतिप्रसङ्गापत्तेश्च, उद्देश्येऽपि तत्वापत्त्या बहूपप्लवापत्तेः

विधीयमाने इति । अणीत्यर्थ. । निषेधक इति । एतेन प्रसज्यप्रतिषेधो ध्वनितः । स च युक्त, पर्यु

सरला ।

अन्यथा तत्पक्षे सवर्णग्राहकसंज्ञाभावेन वार्तिकस्य वैयर्थ्यमेव स्यादिति बोध्यम् । आवश्यकत्वादिति । धातुपाठे ऋकारऌकारयोः पृथगनुबन्धयो· करणेन तयोः सावर्ण्यस्य साजात्यस्य वाऽनित्यत्वज्ञापनात् । प्रत्याख्यानेऽपीति । "सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्" इति भाष्येणेति शेष. । जातिग्रह-

द्युकामः । वलि लोपो न । अति विधौ—यजेः क्तः, क इष्टः । "हशि च"

### शब्दरत्नम् ।

दिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात् । इदं चासिद्धवत्सूत्रे कैयटे स्पष्टम् । द्युकाम इति । यद्यपि वत्वं हल्त्वाद्यपेक्षया विशेषधर्मस्तथाप्ये

### भैरवी ।

त्पर्यसङ्कोच इति पक्षेऽपि फलितनिषेधमादायेत्यमभिधानम् । अतिदिश्यमानो यो धर्मस्तद्विरुद्धोयः स्वाश्रयधर्मस्तत्प्रयुक्तकार्याभाव इत्यर्थः । स्वाश्रयः-आदेशनिष्ठः । कार्येति कार्यातिदेशस्य प्राधान्याभिप्रायेण । शास्त्रातिदेशोऽपि कार्यातिदेशादभिन्न एव फलत इत्यभिप्रायेण-स्वभावेति । यथा सिद्धत्वासिद्धत्वयोर्विरोधेन जहीत्यत्र "असिद्धवदत्र" इत्यनेनासिद्धत्वातिदेशेऽपि स्वाश्रयो हेर्लुङ् न भवति । असिद्धवत्सूत्रं तु शाधीत्यत्र स्थानिप्रयुक्तस्य धिभावस्य झलन्तत्वस्य बुद्ध्या प्रवृत्तिसम्पादनेन चरितार्थम् । इदम्-स्वभावसिद्धपूर्वोक्तम् । न च 'ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यम्' इत्यत्रातिदिश्यमानो धर्मो ब्राह्मण्यं तत्प्रयुक्तकार्यविरुद्धस्याध्यापनप्रतिग्रहनिवृत्तिरूपस्य क्षत्रिये दर्शनेन भवदुक्तः स्वभावो व्यभिचरित इति वाच्यम्, तत्रापि न ब्राह्मण्यातिदेशः, किन्तु अभ्युत्थानसत्कारादिरूपस्य, तावद्वृन्यूनत्वतु द्विप्रयोज्याभ्युत्थानाभावप्रवृत्तिसम्पादनेनातिदेशस्य चारितार्थ्यात् ।

'सामान्यातिदेशे विशेषानतिदेशः' इति हि परिभाषा लोकप्रसिद्धा । यथा 'ब्राह्मणवदस्मिन्क्षत्रिये वर्तितव्यम्' इत्यनेनासनाद्यतिदेशो दृश्यते, ननु माठरकौण्डिन्यसम्बन्धिपरिवेषणादिधर्मस्य । एवञ्च वत्वस्य वलत्वस्य वा हल्त्वापेक्षया विशेषधर्मत्वेन तदतिदेशो न भविष्यति, किन्तु हल्त्वस्यैव । तथा च यथमतिदेशेन 'द्यु काम' इत्यत्र वलि वकारे लोपस्य प्राप्तिरित्याशयेन शङ्कते—यद्यपीति । हल्त्वादीत्यादिना वलत्वपरिग्रहः ।

### भावप्रकाशः ।

तिदेश इति मूलं चिन्त्यमिति, तयोर्भेदेन नियमाभिप्राया मूलोक्तिरिति च मन्दोक्तमपास्तम्, उक्तरीत्या सिद्धान्तविशेषाभावादाक्यद्वयसत्त्वाच्च । अत एव "स्थानिवदादेशो नाल्विधौ" इति नासङ्गि, निषेधस्यैव-व्याप्तेश्च । विरुद्धेति । इद च धर्मे कार्ये चान्वेति । स्वाश्रयेति । आदेशनिष्ठेत्यर्थः । कार्येत्यनेन प्राधान्यात्कार्यातिदेशोऽयमिति ध्वनितमित्यन्यत्र विस्तरः । स्वभावेति । अत एव 'जहि' इत्यादौ आदेशस्यासिद्धत्वे स्वाश्रयो हि लुक् न, सिद्धत्वासिद्धत्वयोर्विरोधात् । असिद्धवत्सूत्रं तु 'शाधि' इत्यादौ स्थानिप्रयुक्तधिभावकरणेन सफलमिति भावः । तदाह—इदञ्चेति । तत्प्रयुक्तकार्याभावेऽतिदेशस्य भावसिद्धत्व चेत्यर्थः । अत एव 'ब्राह्मणवत्' इत्यादौ ब्राह्मण्यविरुद्धाऽब्राह्मण्यप्रयुक्तब्राह्मण्यविरुद्धमध्यापनादेर्निवृत्तिर्न ॥ युद्धादेः । एतेन तत्र ब्राह्मण्यप्रयुक्तयाजनादिविरुद्धक्षत्रियत्वादिप्रयुक्तनदभावरूपकार्यदर्शनेन शास्त्रनियमे न मानमिति मन्दोक्तमपास्तम्, उक्तयुक्तेः, तयोरविरोधाच्च, विश्वामित्रे समावेशदर्शनात्, उक्तरीत्या तस्यापि निवृत्तेश्चेति दिक् । स्पष्टमिति । स्पष्टतरमित्यर्थः । अत एव कैयटोल्लेखः । "क्षियो दीर्घात्" इत्यत्र भाष्येऽपि स्पष्टत्वात् । ननु यन्निमित्तवैकल्यप्रयुक्तोपदेशापत्त्यानिर्देशप्रवृत्तिस्तस्य कार्यवच्छास्त्रीयस्यैव प्रत्यासत्त्या ग्रहणेन वत्वस्य "स्वं रूपम्" इत्यनेन तत्त्वेऽपि हल्त्वाद्यपेक्षया विशेषधर्मत्वेन "सामान्यातिदेशे" इति न्यायेनानतिदेशात्तस्य लोपाप्राप्तिरिति मूलमयुक्तम् । अत एव ब्राह्मणवदित्यनेन ब्राह्मण्यप्रयुक्तासनादीन्यतिदिश्यन्ते, न माठरत्वादिविशेषकार्याणीत्याशयेनाशङ्कते—यद्यपीति । आदिना वलत्वादिसङ्ग्रहः ।

### सरला ।

अतिदिश्यमानधर्मविरुद्धेति । अत्र विरुद्धत्वञ्च तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयमुद्रया ग्राह्यं नतु तदभावव्याप्यवत्तानिश्चयमुद्रया । प्रकृते च विरोधोऽभेदवत्ताबुद्धि प्रत्यनिदेशशास्त्रकृताऽभेदाभावरूपाद्यप्रकारकनिश्चयस्य प्रतिबन्धकत्वाद्, भेदाभावस्य भेदप्रतियोगितावच्छेदकस्वरूपत्वनियमात् । तदभावव्याप्यवत्तानिश्चयमुद्रया विरोधग्रहे तु 'अधुः' इत्यादौ "विभाषा घ्राधेट्" इति लुगर्थमतिदिश्यमानभे-

शब्दरत्नम् ।

तद्वाक्योपप्लुते यकारवदुकार इति वाक्ये उपात्तधर्मापेक्षया न तस्य तत्त्वम् । सूत्रवल्लक्षस्थान्यादेशभावमादायैवैतत्कृतवाक्योपप्लवादिति भावः ।

भैरवी ।

[illegible]
शापे [illegible]
"द्वि [illegible] ।
यस्येत्यर्थस्य प्राप्तौ यत्वस्य स्थानितावच्छेदकत्वेन तस्योपस्थितौ तद्धर्मकं यत्वमप्युपस्थितं भविष्यतीत्याशयात् । परिभाषाघटकसामान्यविशेषशब्देन यस्यकस्यचिद्ग्रहणे प्रयोक्तव्ये यस्याश्रिते तदन्यविधर्मापेक्षया विशेषधर्मत्वं सत्त्वस्यापि धर्मस्यास्तीति यस्याप्यतिदेशो न स्यात्, अतः सद्ग्राहकवाक्यादुपप्लुतलक्ष्यसंस्कारकवाक्यघटकशब्दोपात्तधर्मापेक्षया विशेषधर्म एव विशेषशब्देन ग्राह्यः । "मार्गसायां भूतवच्च" इत्यत्र भूतत्वापेक्षयाऽनद्यतनत्वविशिष्टभूतत्वं यथा । एवञ्च प्रकृते स्थानिवदादेश इति यदतिदेशसूचकं वाक्यं तत्र यस्यानिषन्तदुपात्तधर्मस्यैवातिदेशो न तु तद्व्यापकस्येत्यर्थो वाच्यः । ■ त्वनुपयुक्तः स्थानित्वादेशस्य निष्फलत्वात् । किन्तु तस्मादुपप्लुतं यकारवदुकार इत्याकारकं वाक्यन्तद्घटकशब्दोपात्तत्वापेक्षया विशेषधर्मत्वमेव यत्त्वस्य यत्त्वे नास्तीत्याशयेन समाधत्ते—तथापीति । एतादृशवाक्योपप्लवे मानमाह—सूत्रेति । अन्योन्यपरिभाषैकवाक्यतया सूत्रवल्लक्षेत्यर्थः ।

भावप्रकाशः ।

अत्र मान्यादयः, उक्त-वाक्योपस्थितसामान्यधर्मस्तदाक्षिप्तव्यापकधर्मश्च विध्याकाङ्क्षापूरणे सति तदन्यग्रहणे मानाभाव इति तर्कमूलकतया दृष्टान्ते तथासम्भवेऽप्यत्र स्थानित्वधर्मोपस्थित्या तन्निमित्तकार्याभावेनातिदेशसामर्थ्याद्धर्मयोर्ग्रहणावश्यकत्वे विनिगमकाभावात्सर्वेषां ग्रहणमिति तयोर्भेदेऽप्यमिति न मादधुः, तत्प्रावामनुरोधेन । स्थानिवदादेश इत्यस्य सद्ग्राहकवाक्यत्वेन लक्ष्यासंस्कारकत्वात्तद्धर्मस्योपस्थितत्वापि निष्फलत्वेन सूत्रैकवाक्यतया तत्संस्कारकवाक्यान्तरकल्पनावश्यकत्वात् । अत एव तदग्रे एव तथोक्तं तैः, तद् ध्वनयन् तथैव समाधत्ते—तथाप्येतदिति । उपप्लुते, कल्पिते आविर्भूते वा । वाक्ये इति । अन्यार्थे सप्तम्यर्थः । उपादानं ग्रहणम् । वाक्यजन्यधीविषयत्वापेक्षया यत्वस्य ■ विशेषधर्मत्वमिति समुदायार्थः । एवञ्च वाक्ये इत्वस्योपादाने इत्वना-वयो न तु यत्वमित्यत्र । तथाऽपि अन्यत्रोपात्तधर्मापेक्षया यत्वस्य तत्वेन तदभावस्य वक्तुमशक्यत्वात् । अत एव समस्तोद्द्योतपाठसङ्गतिः । नन्वेवमपि तथा वाक्योपप्लवे एव मानाभावः । धातुवदधिरित्यादिवदुवदुकार इत्यादीनां कल्पयितुं शक्यत्वात् । तथा च विशेषधर्मत्वेन इत्वादीनामिव यत्वस्यातिदेशो न स्यादत आह—सूत्रेति । आदेशविधिसूत्रेषु येन रूपेण लक्ष्यस्थान्यादेशभावस्तमादायेत्यर्थः । तथा च इत्वेन इन इव "अचोन्त्यस्य" इति सङ्कुल"दिवउत्" सूत्रे यत्वेनैव यस्य स्थानित्वमिति तथैव वाक्योपप्लव इति भावः । अधिकमन्यत्र द्रष्टव्यम् । वक्ष्यते चानुपदं किञ्चित् । इदञ्च सम्भवाभिप्रायम् । वस्तुतो विधिग्रहणसामर्थ्यात् "न ल्यपि" इति लिङ्गाच्चात्र सूत्रे विशेषातिदेशोऽपीति तत्त्वम् । ननु स्थानिवद्भावेऽपि 'क इष्टः' इत्यस्य

सरला ।

दृष्टाभावव्याप्यत्वादादन्तत्वस्य तत्प्रयुक्तः "आतः" इति जुस् न स्यादिति । सिद्धत्वादिति । अत एव 'जहि' इत्यादौ आदेशस्यासिद्धत्वे स्वाश्रयो, हेतुत्वेन, सिद्धत्वासिद्धत्वयोर्विरोधात् । असिद्धवत्सूत्रं तु 'शाधि' इत्यादौ स्थानिप्रयुक्तविधिमात्रसम्पादनेन चरितार्थम् । विशेषधर्म इति । "सम्भवति सामान्यातिदेशे विशेषानतिदेशः" इति न्यायेन विशेषधर्मातिदेशस्य निषिद्धतया इत्व-यत्वाद्यपेक्षया यत्वस्य विशेषधर्मत्वेन तदनिदेशासिद्धिरिति भावः । सूत्रवल्लक्षेति । अयं भावः—स्थानिवदादेशः इत्यस्य सद्ग्राहकवाक्यतया अन्यादेशेऽन्यस्थानिवृत्तिधर्मातिदेशवारणस्य 'पूष्ण' इत्यादौ जरसादेशादर्शनेनावश्यकर्तव्यतया तदादेशः तत्स्थानिवद्भवतीत्यतिदेशवाक्यकल्पनाया आवश्यकत्वेन 'उपस्थितधर्मस्तद्व्यापकधर्मश्च विध्याकाङ्क्षा-

(पा० सू० ६।१।११४) इत्युत्व न । अल् चेह स्थान्यवयव एव गृह्यते।

शब्दरत्नम् ।

क इष्ट इति । यद्यपी रूपश्रुत्वे गुणेऽयादेशे च पाक्षिकलोपेन सिध्यति, तथाऽपि ...े कयिष्ट इति स्याद कयिष्ट इति चेष्यते इति भाव । स्थान्यवयव एवेति । उप

भैरवी ।

स्थानिवद्भावाङ्गीकारेऽपि लक्ष्यस्य सिद्धिरित्याशयेन शङ्कते–यद्यपीति । पक्षे–लोपाभाव पक्षे । यत्तु "हलि सर्वेषाम्" इति नित्यलोपस्य वैकल्पिकलोपापवादतया क इत्येव स्यादिति, तन्न, 'हलि" इति सूत्रे वकारस्याप्यनुवृत्तिरिति स्वीकारेऽपि 'वृक्षव् करोति' इत्यत्र नित्यलोपस्य चरितार्थतयाऽपवादत्वासम्भवात्। नित्यलोपविधायकेऽशूग्रहणानुवृत्त्याऽशूः परत्वेव प्रवृत्तिरिति स्वीकारेऽपि 'वृक्षव्' इत्यत्र क्विन्निमित्तकवलोपस्य प्राप्त्या वृक्षवादेरनभिधानाच्च । न च "लोपोव्यो" इति वलोपे "अच परस्मिन्" इति टिलोपस्य स्थानिवत्त्वाय इति वाच्यम्, "न पदान्ता' परेऽग्न सन्ति, ननु चापमस्ति कर्त हर्त" इति भाष्याद्वृक्षवादेरनभिधानेन नित्यलोपविधायके वग्रहणानुवृत्तेर्निष्फलत्वात् । अत एव "भोभगो" इति सूत्रस्थम् "अशूग्रहणमनर्थकमन्यत्राभावात" इति भाष्यं सङ्गच्छते । मूले–स्थान्यवयव एवेति। अत्र एवकारो भिन्नक्रम स्थानिपदोत्तरं द्रष्टव्य । अत एवादेशावयवाश्रयणेऽपि न निषेध इत्येवद्दर्शयति–तेनेति ।

भावप्रकाश ।

सिद्धिरिति नैतत्तल्लक्ष्यमित्याशयेन शङ्कते—यद्यपीति। उक्ते स्थानिवद्भावेनेत्यादि । यत्तु "हलि सर्वेषाम्" इति नित्यलोपे तत्सिद्धावपि रूपान्तरसिद्धिरिति रत्नाकरदण्डिप्रभृतय । तन्न, नित्यलोपासिद्धतया पाक्षिकलोपस्यैव न्याय्यत्वात् । 'वृक्षव् करोति' इत्यादौ विकल्पप्राप्त्या नित्यलोपस्य प्राप्त्याऽनपवादत्वाच्च तद्रूपे हलीति व्याख्यानेऽपवादत्वसम्भावनायामपि वक्ष्यमाणरीत्या वृक्षवादेरनभिधानेन तत्र तस्या नुवृत्तेर्निष्फलत्वस्य सिद्धान्तितत्वेनात्र तत्प्राप्तेरेवाभावाच्च । स्वयमपि तत्रानुवृत्तेरेवोक्तत्वेन तद्विरोधापत्तेश्च । अत एव "भोभगो" इत्यत्राशूग्रहणखण्डनपरभाष्यसङ्गतिरित्यन्यत्र विस्तर । तद् ध्वनयन्नाह—पाक्षिकेति । "लोप. शाकल्यस्य" इत्यनेनेत्यर्थ । चस्त्वर्थे । स्थान्यवयव एवेतीति । एवो भिन्नक्रम, स्थानिन एवावयव इत्यर्थ । अत एव तद्व्याख्याने आदेशावयव इत्येवोक्तम् । अन्यथा तेन "भोभगो" इत्यत्राशूग्रहण सफल भवति, विसर्गस्थानिरेफवृत्तित्वस्य, स च स्थानिरूप इत्युक्त स्यात् । अथ तद्व्यापोत्तरमेवोक्त्या तद्व्यावृत्तिरपीष्टेति । तदुक्तमिति चेत्तदपि चानुमुचितमिति । तथा च न

सरला ।

पूरणे तदतिरिक्तविशेषग्रहणे मानाभाव ' इति न्यायमूलकस्य 'सामान्यातिदेशे' इति न्यायस्य सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मस्यैवातिदेशो नतु तदव्यापकधर्मस्य इत्यर्थेन प्रकृत हल्त्वस्य वल्त्वस्य वा सादृश्यप्रतियोगितावच्छेदकत्वाभावाद् वल्त्वस्यैव तत्त्वेन तदव्यापकतया वल्त्वातिदेशस्य सुगम्यादत्रमिति। स्थान्यवयव एवेतीति । तथा च स्थानिसम्बन्ध्यल्वृत्तिधर्मनिमित्तके कार्ये स्थानिवत्त्वं न भवतीति तदर्द । तेन यन्मूलस्य आदेशावयवयकाररूपाल्वृत्तित्व नतु स्थानिसम्बन्ध्यल् यकारस्तद्वृत्तित्वमिति 'रामाय' इत्यत्र न निषेधप्रवृत्तिरिति । नचैवमपि 'रामाय' इत्यत्र दोषस्तदवस्थ एव, स्थानी ङकारस्तत्सम्बन्धी योऽल् व्यपदेशिवद्भावेन स एव, तद्वृत्तियों धर्म सुप्त्वं तन्निमित्तकत्वाद् दीर्घ कर्तव्ये स्थानिवत्त्वनिषेधप्रवृत्तेरिति वाच्यम्, अल्वृत्तिधर्मेऽल्त्वव्याप्यत्वस्य विशेषणेनादोषात् । सुप्त्वस्याऽल्वृत्तित्वेऽपि श्यामादावपि सत्त्वेनाल्त्वव्याप्यत्वाभावात् । नचैवमपि 'प्रगठन' इत्यादौ वलादित्वस्यातिदेशापत्ति , वत्त्वे स्थानिसम्बन्ध्यल्वृत्तित्वस्य अल्त्वव्याप्यत्वस्य च सत्त्वेऽपि इट्ये वलादित्वनिमित्तकत्वेन वल्त्वनिमित्तकत्वाभावेन निषेधाप्राप्ते , इति वाच्यम् , स्थानिसम्बन्धी योऽल तद्वृत्तियोंऽल्त्वव्याप्यो धर्मस्तद्घटितधर्मनिमित्तके कार्ये कर्तव्ये स्थानिवन्नेति तदर्थस्वीकारेणादोषात् । नचैवमपि 'प्रमृवित्र' इत्यादावनिडनापत्ति , स्थानी वस्

शब्दरत्नम् ।

भावः । अग्रहीदित्यादौ "ग्रहोऽलिटि" ( पा० सू० ७।२।३७ ) इत्यनेनेट एव दीर्घविधा-

भैरवी ।

स्यास्यतीति तदभावसूचनायेत्यमभिहितम् । तेन 'रामाय' इत्यस्य सिद्धिः । अन्यथाऽप्रत्ययान्ततया समुदायस्य प्रातिपदिकत्वापत्तौ सुप्त्वादिदेशाल्लोपापत्तिरपि वारिता । भाष्ये आश्रीयमाणपदोपादानेन स्थानिबोधकशब्दजन्यप्राथमिकोपस्थितिविषयता यत्राल्त्वावच्छिन्ना तत्र निषेध इति ध्वनितमित्याशयेनाह—अग्रहीदित्यादाविति । नचैवं सति "क इष्टः" इत्यत्र "वचिस्वपि" इतिसम्प्रसारणम्, तत्र वाक्यार्थः संज्ञीति पक्षे वच्यादीनां यण इक् संप्रसारणाभिन्न इत्यर्थो भविष्यति । एवञ्च स्थानिबोधकः शब्दो यण् इति, तज्जन्योपस्थितिविषयता यण्त्वावच्छिन्ना न तु अल्त्वावच्छिन्नेति कथमल्विधावित्यस्य तदुदाहरणमिति वाच्यम्; अल्त्वावच्छिन्नेत्यस्याल्पर्याप्तधर्मावच्छिन्नेत्यर्थात् । तथाच यण्शब्दजन्योपस्थितिविषयता यद्यद्रूपावच्छिन्नस्य यण्संज्ञा तत्तद्रूपावच्छिन्नेति यत्वरूपस्तादृशो धर्मः स चाल्पर्याप्त एवेति तदुदाहरणं युक्तमेव । एवमेव प्रत्याहारनिर्देशे सर्वत्र बोध्यम् । "दिव औत्" इत्यादौ धातोरन्त्यपरिभाषैकवाक्यतयाऽल्पर्याप्ताल्त्वावच्छिन्नैव सेति तत्रापि निषेधस्य प्रवृत्तिः ।

यत्तु यन्निमित्तत्वेऽल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते तस्य निमित्तस्य स्थान्यल्साधारणधर्मत्वे निषेध इत्यर्थ आश्रयणीयस्तथा च सुप्त्वस्य रामायादौ समुदायेऽपि सत्त्वान्नाल्साधारण्यमिति न तत्र निषेध इति, तन्न, 'तन्वन्ति' इत्यत्रोकारवृत्त्यार्द्धधातुकत्वस्य तदादिसमुदायेऽपि सत्त्वेन नाल्साधारण्यमिति तत्यातिदेशेनेट् स्यात् । न च "अपरविधौ" इति करणेन "अचः परस्मिन्" इतिसूत्रेण स्थानिवद्भावेनेट् तत्र भाष्यकृतैव वारित इति वाच्यम्,

भावप्रकाशः ।

स्यमस्तु, किमेवमुक्त्येति तत्खण्डनं चायास्तम्, प्राधान्यात्कार्यातिदेश इत्युक्तेः सुप्त्वाङ्गत्वयोः सुलभत्वमित्यनेन विरुद्धत्वाच्च । तदा दीर्घस्यैवातिदेशात् । कार्यशब्देन निमित्तस्यैव ग्रहेण्युक्तरीत्याङ्गत्वस्य दुर्लभत्वाच्चेति दिक् । तदाह—प्रत्ययत्वमिति । अत्रेति शेषः । इदञ्च सुप्त्वादेरप्युपलक्षणम् । न चैवं विनिगमकाभावे वैपरीत्यापत्त्या यत्तुमतप्रवेश इति वाच्यम्, सुप्त्वास्यादिरन्त्येनेत्यनेन विशिष्टनिष्ठत्वाल्लाभेऽपि प्रत्ययत्वमेकारवृत्तीतिभ्रमनिवृत्तये तादेशारेकादेशविसर्गवृत्तिप्रत्ययत्वस्य स्थान्यवृत्तित्वेनानतिदेशात् "इदुपधा" इतिसूत्रे मूले वक्ष्यमाणम् 'अग्निः करोति' इति अप्रत्ययस्येत्यस्य प्रत्युदाहरणमयुक्तमिति गूढाशयेन ध्वनयितुं च तथोक्तेः । अत एव ततो वैलक्षण्यसूचकैवोक्तिः "भोमगो" इत्यत्र "इदुपधस्य" इत्यत्र चैतत् प्रपञ्चयिष्यते । प्रत्ययत्वादेरत्र विशिष्टवृत्तित्वं दृष्टान्तेन साधयन् "भोमगो" इत्यत्रत्य मूलग्रन्थासङ्गतिं ध्वनयंश्च सूत्रोपात्तेति विशेषणावश्यकतामाह—अग्रहीदिति । एतेनैकारस्थानिवृत्तिः

सरला ।

तद्वृत्तिधर्मं आर्धधातुकत्वं तन्निमित्तके इडागमे कर्तव्ये स्थानिवत्त्वनिषेधेन वकारे आर्धधातुकत्वस्यातिदेष्टुमशक्यत्वान्न दोषः । नचैवं 'रामाय' इत्यादौ स्थानिभूतो योऽल् एकारः तद्वृत्ति यत् सुप्त्वं तन्निमित्तकत्वेन दीर्घे कर्तव्येऽनल्विधाविति निषेधः स्यादिति वाच्यम्, स्थानिशब्दस्य सम्बन्धिशब्दत्वेनाक्षेपादादेशलाभे सिद्धे आदेशपदोपादानं स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वलाभार्थमित्यदोषात् । तथा च अल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मनिमित्तके कार्ये कर्तव्ये न स्थानिवदित्यर्थः पर्यवस्यति । 'ध्येयः' इत्यादौ स्थानितावच्छेदकं ध्येत्वं तच्च नाल्त्वव्याप्यमिति रामायेत्यादौ न दोषः । एतदेवाभिप्रेत्यानुपदमेव वक्ष्यति ग्रन्थकृत्—"अग्रहीदित्यादौ ग्रहोऽलिटि" इत्यादिना । तस्य स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वविशेषणदाने तात्पर्यम् । नन्वेवमपि वाक्यसंस्कारपक्षे 'राम ए अत्र' इत्यत्र अल्त्वव्याप्यो धर्म एत्वं तदवच्छिन्नस्थानितासमानाधिकरणो धर्मः सुप्त्वं तन्निमित्तको विधिर्यादेश इति पुनरप्यनल्विधाविति निषेध इति चेत्? न, अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मनिमित्तके स्था

शब्दरत्नम् ।

नाभाल्त्वेन तस्य स्थानितेति तद्वृत्तीट्त्वाश्रयस्य सिचो लोपस्य सिद्धिरिति बोध्यम् ।

भैरवी ।

तस्य भाष्यस्यैकदेशयुक्तित्वात् । तस्यैकदेशयुक्तित्वसाधकन्यायन्यासमिति तदुदाहरणप्रदर्शनमेव, तस्योदाहरणस्यासिद्धवत्सूत्रेण सिद्धेः । नच "कृन्मेजन्त"सूत्रभाष्ये 'आधये' 'चिकीर्षवे' इत्यत्रैकारौकारवृत्तिह्रस्वस्याल्पर्याप्ततया निषेधयोग्यताया सत्त्वेन कथमव्ययसंज्ञाप्राप्तिरुक्तेति वाच्यम्, तत्र स्थानिबोधकस्य घिशब्दस्य प्रथमतः समुदायोपस्थापकतया स्थानिबोधकशब्दजन्यप्राथमिकोपस्थितिविषयता नाल्पर्याप्तधर्मावच्छिन्नेत्यदोषात् । नच तथापि "कुम्भकारेभ्यः" इत्यत्र "बहुवचने झल्येत्" इत्येत्वे कृते स्थानिवद्भावेन कृतमाश्रित्याव्ययत्वप्राप्तिशङ्का कृता, सा कथं संगच्छताम् ? स्थानिबोधकादत इति शब्दाशस्य एव प्रथममुपस्थितिसत्त्वादिति वाच्यम् । तत्रापि प्रथमतोऽत्त्वेनोपस्थितिं स्वरूपेण, अत्त्वं तु समुदायपर्याप्तमिति न निषेधविषयतेत्यदोषात् । इत्थमेवान्यत्रापि बोध्यम् । अस्याङ्कल्पनायां "चिणिष्टं

भावप्रकाशः ।

फलाभावात् "भवश्च"इत्यस्यानुपस्थितेः । अन्यथा सिचो लोपो न स्यात् । एवञ्च इद्दीर्घ इति वाक्यकल्पनेन मैवम् इति वाक्यकल्पना । स्थानितावच्छेदकं च शास्त्रोपात्तरूपमेवेति न दोष इति भावः । तदा-

सरला ।

निबन्धेत्यर्थेन त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयत्वस्य यादेशेऽभावेनादोषात् । नन्वेवं इलूइ पाणिनिसूत्रविरोधः, "क्याच्छन्दसि" इति वार्तिकविरोधः, इल्क्यादिसूत्रीयदीर्घप्रमाणप्रत्याख्यानपरभाष्यविरोधश्च । तथाहि–मतिरष्टौ निष्कौशाम्बिरित्यादौ "गोस्त्रियोः" इति सूत्रे "अचः" इति परिभाषोपस्थित्या अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिणो च आरोपः इस्वः आदेशवान् कौलवानित्याकारकस्त्वप्रकारीभूतस्वकौलनिमित्तत्वाद् इल्क्यादिलोपस्य तत्र कर्तव्ये स्थानिवत्त्वनिषेधस्य सिद्धत्वाद्दीर्घग्रहणस्य "क्याच्छन्दसि" इति वार्तिकस्य कीर्द इत्यादि प्रवृत्तिस्य चोपयोगाभावादिति चेत् ? मैवम्, अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्ना योद्देश्यता तादृशोद्देश्यताके कार्ये कर्तव्ये स्थानिवन्नेत्यर्थेन इल्यादिलोपे भावस्थयोरुद्देश्यतायाः साक्षादवच्छेदकत्वाभावेनादोषात् । अत्र सूत्रे द्वितीयार्थस्वीकारे प्रमाणं तु "भोभगो" सूत्रस्थं भाष्यमेव । तत्र हि "भाष्ये किम् ? 'छन्दःसु' 'पयःसु' । किं पुनः कारणं सुन्नरश्चोदाहियते न पुनस्त्र 'वृक्षस्त्वम्' 'प्लक्षस्त्वम्' इति । अस्त्यत्र विशेषः । विसर्जनीये कृते न भविष्यति । इहापि तर्हि विसर्जनीये कृते न भविष्यति छन्दःसु पयःस्विति । स्थानिवद्भावात्प्राप्नोति । ननु चेहापि स्थानिवद्भावात्प्राप्नोति वृक्षस्त्व प्लक्षस्त्वेति । अनल्विधौ स्थानिवद्भावो भविष्यति"इत्युक्तम् । द्वितीयार्थस्वीकारे 'छन्दः सु' इत्यादौ यथा यत्वस्थानित्वया पूर्वं विसर्गप्रवृत्तौ तस्य स्थानिवत्त्वेन रुत्वबुद्ध्या यत्वप्रवृत्त्यापत्तिस्तया 'वृक्षस्त्वं' इत्यादावपि विसर्गप्रवृत्तौ तस्य स्थानिवत्त्वेन रुत्वबुद्ध्या यत्वापत्तेः सत्त्वेन भाष्योक्तविशेषकथनासङ्गत्यापत्तिः । द्वितीयार्थस्वीकारे तु 'वृक्षस्त्व' इत्यादौ विसर्गं कृते विसर्गस्य "खरवसानयोः" इति सूत्रविहितस्य रेफत्वावच्छिन्नोद्देश्यताकत्वेनाल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणतया रुत्वस्य तन्निमित्ताके विधौ यत्वे कर्तव्ये 'अनल्विधौ' इत्यस्य प्रवृत्तिः, 'छन्दः सु' इत्यादौ तु "रोः सुपि" इत्यनेन विसर्गस्य विहितत्वात् तस्य च रुत्वावच्छिन्नस्थानितावत्त्वेनाल्त्वव्याप्यधर्मावच्छिन्नत्वाभावात् न "अनल्विधौ" इत्यस्य प्रवृत्तिरिति विशेषकथनसङ्गतिः । विस्तरस्तु शब्देन्दुशेखरदीपकेऽस्मद्गुरुकृते द्रष्टव्यः । आदेशिन्यलीति । अत्र आदेशिनि इति विशेषणविभक्तेरभेदार्थो परकत्वं सतम्यर्थो वेति बोध्यम् । तथाच प्रथमपक्षे स्थानिरूपेऽल्नि, द्वितीये स्थानिघटके तदवयवेऽलि इत्यर्थो लभ्यते । तन्त्रेण निर्देशः । एवञ्चास्माद्भाष्याद्व्यर्थद्वयं लभ्यते । प्रत्ययत्वमिति । उपलक्षणमेतत्, सुप्त्वमपि स्थानिवत्त्वेन भवत्येवेति "सुपि च" इति 'रामाय' इत्यत्र दीर्घः सिध्यतीति भावः । सिचोलोपस्य सिद्धिरिति ।

देतत्सकलमभिप्रेत्याह-न तु स्थान्यलाश्रय इति । आश्रयणं चेह यथाकथञ्चिन्न तु प्राधान्येनैवेत्याग्रहः । तेन प्रफल्येत्यत्र वलादिलक्षण इण् न । तन्निषेधादिति । स्थानिवत्त्वनिषेधादित्यर्थः ॥

अचः ( पा०सू०१।१।५७ ) । अल्विध्यर्थमिति । तेन वव्रश्चेत्यत्र वस्य सम्प्रसारण न । उरदत्वस्य स्थानिवत्त्वेन सम्प्रसारणतया "न सम्प्रसारण-" ( पा० सू० ६।१।३७ ) इति निषेधात् । न चोरदत्वं परनिमित्तं नेति वाच्यम् । अङ्गाक्षिप्ते प्र

---

शब्दरत्नम् ।

यथा कथ चिदिति । व्याख्यानादिति भाव ।

भैरवी ।

ष्टेपोऽनल्माश्रयते इत्यत्र" इति भाष्यमेव मानम्, "कृन्मेजन्त" सूत्रस्थं भाष्यञ्च साधकमिति दिक् ।

अत्रानल्विधाविन्यत्र प्रसज्यप्रतिषेध एव । न चासमर्थसमासापत्ति, बहुषु स्थलेषु ■स्य दर्शनात् । पर्युदासे हि स्थान्यल्भिन्नाश्रयके विधौ ■ इत्यर्थे 'व्यूढोरस्केन' इत्यत्र ण त्वापत्तेर्दुर्वारत्वात् । स्थानिवद्स्य स्थानिस्थान्यवयवान्यतरपरतया स्थानिस्थान्यवयवाश्रितविधिभिन्नविधाविति व्याख्यानेन 'व्यूढोरस्केन'इत्यस्य निर्वाहेऽपि 'बभूविव' इत्यस्यानिर्वाह इत्यसमर्थसमासाश्रयणेन प्रसज्यप्रतिषेध एवाश्रित । न चान्यतराल्वृत्तिधर्मस्य वलत्वस्याश्रयणादेवमपि बभूविवेत्यस्यासिद्धिरिति वाच्यम्, यद्धर्मवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तस्य धर्मस्यान्यतराल्निष्ठस्यातिदेशे कर्त्तव्ये निषेधस्य प्रवृत्त्यङ्गीकारात् । यदि तु "ह्वेञ्" इत्यादौ ञकारोच्चारणेन ञकारोपलक्षिते स्थानित्वस्य बोधनेनाग्रहीदित्यत्रेव सर्वत्र सूत्रोपात्तसमुदाये स्थानित्वमिति ह्वेञ्शब्दनिष्ठं सुप्त्वे प्रत्ययत्वमाल्धर्मं इति यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्त्यावतिदेशो मृग्यते सोऽत्रस्थान्यलिनष्ठधर्मावच्छिन्ननिमित्तकविधिभिन्नविधौ स्थानिवद्दित्यर्थं आश्रीयते तदाऽस्तु पर्युदास । एवं सति लाघवमपि भवति । पर्युदासेऽप्यार्थिकनिषेधमादाय निषेधपरत्वेन व्याख्यातृभन्या नेया । पर्युदासपरतया व्याख्यानञ्च "विशिष्ट ष्टेपोऽनल्माश्रयते इत्यत्र" इति वदता भाष्यकृता ध्वनितम् । सद्ग्राहकवाक्याद्धस्वसाधक वाक्यम् 'इग्दीर्घे' इति 'ह्वेच य' इति रीत्या कल्पनीय स्थानितावच्छेदकशास्त्रोपात्तमेव रूपम् ।

व्याख्यानादिति । अनलिति शब्दसंस्कारार्थं प्रथमोपादेया तत्तल्लक्ष्योपपत्त्यर्थञ्च विधिशब्दाध्याहारेण समासचतुष्टयफलानामुपपत्तिश्च कर्त्तव्येतिरीत्येष्टसिद्धौ विधिशब्दोपादानरूपाधिकायत्नादित्यर्थ । परममूले-"निषेधा न शङ्क्यो ऽनल्विधाविति तन्निषेधात्" इति ग्रन्थस्य तच्छब्देन निषेधपरामर्शोऽसङ्गतिरत आह मूले-स्थानिवत्त्वेति ॥

( मूले- ) तेन-अल्विध्यर्थमस्य सूत्रस्यारम्भेण । "उरत्" इति सूत्रे अरित्यनेनाल एव स्थानित्वबोधनादिति तात्पर्यम्, "अच परस्मिन्" इति सूत्राप्रवृत्तिशङ्कां वारयति-न

भावप्रकाश ।

इ—नाल्त्वेनेति । व्याख्यानादिति । अनलिति स्वतोऽत्या विधिपदाध्याहारेणा यथायोग्यत्वाद्विशेष्यत्वाविवक्षया तत्तद्विषयकलक्षणभेदात्तत्तद्विभक्त्यध्याहारेण समासचतुष्टयलाभफलानां सिद्ध्या विधिग्रहण सामर्थ्यादित्यर्थः ।

सरला ।

उपपादितमेतद् 'अनल्विधौ' इत्यस्य द्वितीयार्थनिरूपणावसरे । व्याख्यानादिति । "प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति, यां यां विभक्तिमाश्रयितु शक्यते सा सा विभक्तिराश्रयणीया" इत्यादिभाष्यपर्यालोचनया "अनल्" इत्येवसिद्धे विधिशब्दोपादानरूपादधिकयत्नादित्यर्थः ।

त्यये परे तद्विधानात् 'प्रागभ्यासविकारेभ्योऽङ्गाधिकार' इति पक्षं दूषयित्वा 'आ-सप्तमसमाप्तेः' इति पक्षस्यैव आकरे सिद्धान्तितत्वात्। किं च पूर्वसूत्रेण स्थानिप्र-युक्तमतिदिश्यते नत्वादेशप्रयुक्तं वार्यते, 'नायकः' 'पावकः' इत्यादौ "एचोऽयवा-यावः" ( पा० सू० ६।१।७८ ) इत्यादीनामप्रवृत्तिप्रसङ्गात्। अनेन तु वार्यते, श-ब्दाधिकारमाश्रित्य भावाभावयोरुभयोरप्यतिदेशोऽयमिति स्वीकारात्। "न पदान्त"

---

शब्दरत्नम्।

दूषयित्वेति। "अङ्गस्य" (पा०सू० ६।४।१) इति सूत्रे भाष्ये इति शेष.। एत-द्दसिद्धैव दूषयित्वेत्यर्थः। विस्तरस्त्वन्यत्र द्रष्टव्यः। अनेन तु वार्यत इति। स्था-निनि सति यद्भवति तदादेशेऽपि भवति, तत्र सति यन्न भवति तदादेशेऽपि न भवतीत्य-र्थाद्। अजादेशोऽच्कार्यं लभते, न लभते चेति वाच्योऽर्थः। तत्रोपपत्तिमाह—शब्देति।

भैरवी।

चोदयमिति। दूषयित्वेति। सामान्यत उपादानेन प्रकृतसूत्र इति भ्रमोऽपि स्यादिति तन्निवारणाय—अङ्गस्येतीति। अत्र दूषणे हेतोरनुक्तेः प्रसिद्धस्य हेतोरनुपलम्भाचाह—एतदि-ति। 'ववश्च' इत्याद्यसिद्ध्येत्यर्थः। यदा 'न सम्प्रसारणे" इति निषेधारम्भादन्त्यस्य यणः प्रथमतः सम्प्रसारणं, पूर्वस्य तु तन्निमित्त प्रतिषेध इति स्वीक्रियते, तदा ववश्चेत्याद्यसिद्धि-रूपो दोषः। "प्रागभ्यासविकारेभ्योऽङ्गाधिकार" इति पक्षे यदा तु "न सम्प्रसारणे" इति सूत्रस्थसम्प्रसारणशब्दस्य सम्प्रसारणभाविनि लक्षणाऽऽश्रीयते सम्प्रसारणप्रवृत्तिप्राक्काल एव प्रतिषेधो निषेधसामर्थ्याच्च कृते परस्य सम्प्रसारणे पूर्वस्य सम्प्रसारणाप्रवृत्तिरित्याश्रीयते तदा नेदं प्रयोजनमत्र परस्मिन्निति सूत्रारम्भस्य इत्याशयेनाह—मूले किञ्चेति। न केवलम-सिद्ध्यर्थमिदं सूत्रमित्येव, किन्त्वपरोऽपि विशेष इति भाव.। अत एवाह—विस्तरस्त्विति। कैयटादिग्रन्थ इत्यर्थः।

ननु मूले तु वार्यते इत्येवोक्तं हेतुस्तु नोक्त इति न्यूनतेति तल्लाभायाह—स्थानिनीत्यादि। उक्तार्थस्य वक्ष्यमाणज्ञापकेन लाभे सति यथा लक्ष्यसिद्धिसम्पादकवचननिष्पत्तिस्तथाह—अजादेश इति। प्रयोगीयाच एवादेश इत्यर्थ.। न त्वत्रापि सूत्रे पूर्वसूत्रवत्सौत्रस्यान्यादेशमा-त्रस्य ग्रहणं, तेन णिलोपस्यानेन स्थानिवद्भावसिद्धिः। अवधारणफलन्तु भक्तमाचष्टे भारत-

भावप्रकाशः।

प्रकृतसूत्रासङ्गमाह—अङ्गस्येतीति। ननु दोषे हेत्वनुक्ते, प्रसिद्धहेत्वनुपलम्भाच्च न निराका-ङ्क्षत्वमत आह—एतदिति। "सन्वल्लघुनि" इत्यत्रोक्तस्य "अत्रान्यतरोद्वा सिद्धम्" इति परिहारस्यासङ्ग-तिरूपदोष 'एव' व्यावर्त्यः। तस्य तत्रैव दूषितत्वात्। इदमपि यदा निषेधसामर्थ्यादादौ परस्य सम्प्रसारणे पूर्वस्य प्राप्तिः प्रतिषिध्यते तदा, यदा तु सम्प्रसारणभाविनि पूर्वस्य सम्प्रसारण नेत्यर्थः। निषेधसामर्थ्या-दकृते तस्मिन्पूर्वस्य सम्प्रसारण नेत्याश्रीयते तदा नेदं फलमस्य। अत एव किञ्चेत्यादिना फलान्तरं वक्ष्यति मूलकृता। स्पष्ट चेद भाष्यकैयटयोः। तत्तु पूर्वमतैकवाक्यतयाऽऽख्यावश्यकम्, तदाह—विस्तरस्त्वि-ति। ननु यथेष्ट वाक्यशेषाध्याहारेण स्थानिसम्बन्धिभावाभावोभयातिदेशाङ्गीकारेऽपि तस्यादेशप्रयुक्त वारणे हेतुत्वासम्भवान्मूलमयुक्तम्। अत. शेषपूरणेन ग्रन्थसङ्गतिमाह—स्थानिनीति। ननूक्तार्थस्य ग्राहकवाक्योयत्वेन कथमसंस्कारकत्वाच्छब्दमर्यादया तथाप्रतीत्यभावेनावाच्यत्वाच्च कथ तेन वारण मत आह—अजादेश इति। प्रयोगीयाच एवादेश इत्यर्थः। पूर्वसूत्रवत् सौत्रस्यान्यादेशभावस्यात्र-ग्रहणे मानाभावात्। तेन णिलोपादेरनेन स्थानिवत्त्वम् 'अचीकमत' 'पाठ्यते' 'याच्यते' इत्यादौ 'अल्लना-

सरला

इत्यर्थादिति। स्यादेतत्। देवयतेः क्विपि 'द्यू' इत्यादौ स्थानिनि वकारे सति अभवदौऽप्यादे-

( पा० सू० १।१।५८ ) इति सूत्रे यलोपदीर्घादिग्रहणं चेह लिङ्गम् । अत एव 'गण-

शब्दरत्नम् ।

पूर्वसूत्रे स्थानिवत्पदस्य सद्भावार्थं लभ्यत इत्येतन्मात्रार्थत्वस्योभयार्थत्वात्तदाश्रयणमिति भाव । यलोपदीर्घादीति । यलोपदीर्घादावित्यर्थ । यलोपादयो दीर्घादयश्चेति यावत् । तेन स्वरादीनामपि सङ्ग्रह । यलोपादीत्यत्र सिद्धे पृथगुक्तिर्वैचित्र्याय । न हि

भैरवी ।

सोऽप्यादिसिद्धि । ननु सर्वत्र शब्दस्यैवाधिकारो दृष्ट इति शब्दाधिकार इत्यनर्थकम् , वस्तु तस्तु अर्थपरित्यागेन शब्दमात्रस्यात्र सूत्रे सम्बन्धे च किम्मानमत आह—पूर्वसूत्रेति । इत्येतन्मात्रेति । तेन भावस्यादिसिद्धि । उभयार्थत्वेति । भावाभावोभयार्थकत्वेत्यर्थः । स्वलक्षणार्थपरित्यागेन शब्दमात्रस्य सम्बन्धो यत्र तत्र शब्दाधिकार इति व्यवहार , यत्र तु स्वलक्षणार्थस्य सशब्दस्यान्यत्र सम्बन्धस्तत्रार्थाधिकार इति । यद्यपि दीर्घशब्दस्याप्युपादानं तथापि सूत्रे प्रागुपादानादिह यलोपदीर्घादावित्युक्तम् । द्वन्द्वान्ते श्रूयमाणमिति न्यायेनाह—यलोपादय इति । वैचित्र्यायेति । आदिपदस्योपादानेन लभ्योऽप्यर्थं क्वचित्स्वरूपप्रतिपत्तेरधिकशब्दोपादानेन बोध्यते, तथापि नाधिकोपादानप्रयुक्तं दुष्टत्वमित्येवंवैचित्र्यज्ञापनायेत्यर्थ । लिङ्गत्वमुपपादयति—नहीत्यादिना । ननु यलोपादीत्युक्तौ न्यूनता, यथा यलोपादिग्रहणस्य ज्ञापकता तथा द्विर्वचनग्रहणस्यापि ज्ञापकत्वसम्भवादिति चेत् ? न, "वाक्—वाक्" इति भाष्यीयोदाहरणद्वयोपपत्त्यर्थम् "अनचि" इतिसूत्रेऽनचीत्यत्र प्रसज्यप्रतिषेधस्य स्वीकृतत्वात्तथा स्थानिनि सति भवतो निषेधस्यादेशेऽतिदेशप्रसक्त्याऽभावातिदेशमन्तरेणापि तस्य चारितार्थ्यसम्भवात् । अभावातिदेशस्य फलमाह सूत्रे—अत एवेति । अभावातिदेशादेवेत्यर्थ । ननु गणयतीत्यादौ "अचो ञ्णिति" इति वाधादू 'अतो लोप" इत्यस्यप्राप्ति-

भावप्रकाश ।

घटं गणयति' इत्यादौ च टिलोपादेरनवकाश सिध्यति । स यदर्थं लभते ■ लभते च तदत्र तस्य इह ननु तद्विरुद्धमित्यर्थ । अच्कार्यं लभते स्वरूपाय नेति तु फलितोऽर्थ । नन्वधिकार शब्दस्यैवास्तीति तथोक्तिरयुक्ता ।'स्वार्थपरित्यागेन शब्दमात्रानुवृत्तौ किं बीजम् । एवं चोक्तार्थानुपपत्तिरत आह—पूर्वेति । एतन्मात्रेति । अन्यथा हि नयवाद्यसिद्धिप्रसङ्ग इति भाव । उभयेति । अन्यथा हि यलोपादिग्रहणानर्थक्यापत्तिरिति भाव । तदाश्रयणमिति । निरर्थकशब्दाधिकाराश्रयणमित्यर्थं । सार्थकानुवृत्तौ त्वर्थाधिकारव्यवहार । अनर्थं तथोक्ति । तथाचोभयातिदेशाङ्गीकारादुक्तार्थसिद्धिरिति भाव । यलोपेति । सूत्रे प्रागुक्तया प्रागुपस्थित्याऽभ्यर्हितत्वेन सौत्रक्रमेण वा पूर्वनिपात इति भाव । द्वन्द्वे परस्य ■ द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकं सम्बन्धादाह—यलोपादय इति । द्वन्द्वत्यागेन तथा व्याख्यानस्याद्यादिशब्दद्वारा फलमाह—तेनेति । नन्वेवं दीर्घादीति व्यर्थमेवेत्यत आह—यलोपादीति । वैचित्र्यायेति । सूत्रभाष्यमतभेदसूचनायेत्यर्थ । यद्वा, भाष्यमते वर्ज्यकोटौ दीर्घोऽप्युपलक्ष्यत्वेन प्राह्य इति सूचनायेत्यर्थ । लिङ्गत्वमुपपादयति—नहीति । ननु वृद्धेर्लोपो बलीयानिति सिद्धान्तादादौ 'अचो ञ्णिति

सरला ।

शब्दस्य लोपेऽप्यभावापत्ति । नच आदेशे स्थानिवृत्तिधर्मसंभावनायां यद् भवति तद् भवति, यन्न भवति तन्नास्त्यर्थेन न दोष । अत एव प्रकृतसूत्रस्थ 'परस्मिन्निति किं युवजानि । नैतदस्ति प्रयोजनं न्यादेशे घटकं नकारमादाय लोपो भविष्यति" इति भाष्यं सङ्गच्छते इति वाच्यम् , 'पशो गमयति' इत्यादौ वाक्यसंस्कारपक्षे "पतत्वदो" इति सुलोपापत्त गमादेशे हलन्त्वधर्मसम्भावनायामपि आदिभूतस्य गकारस्य हल्त्वेन ग्रहणसम्भवात् , इति चेत् ? नैवम् , स्थानी न निवृत्त , आदेशो न जात इति सम्भावनायां यद् भवति तद् भवति, यन्न भवति तन्नेत्यर्थेनादोषात् ।

यति' इत्यादौ न वृद्धिः । स्थानिनि सत्यभवन्त्यास्तस्या आदेशेऽप्यभावातिदेशात् । उक्तञ्च "अभावमतिदिश्यतां वा सत्त्वासत्त्वापि नेह भारोऽस्ति" इति । स्यादेतत् । पूर्वत्वस्य सावधित्वेन सन्निहितस्यैव अवधित्वमुचितम् । सन्निहितं चेह त्रयम् स्थानी, आदेशो, निमित्तं च । तत्र न तावत् स्थानी अवधिस्तस्यादेशेनापहारात् । नाप्यादेशनिमित्ते, 'वैयाकरण'इत्यत्र ऐकारस्यायादेशापत्तेरित्याशङ्क्याह–अचः पूर्वत्वेन

शब्दरत्नम् ।

यल्लोपादिविषये भावातिदेशप्रसक्तिरिति भाव. । न वृद्धिरिति । "अत उपधाया," (पा० सू० ७।२।११६ ) इति वृद्धिर्नेत्यर्थः । "क्विलुगुपधात्व—" ( वा० ) इति निषेधस्तूपधात्वनिमित्तकप्रत्ययविधावेव नान्यत्रेति भाष्ये स्पष्टम् । आयादेशापत्तेरिति । यणः स्थानिवत्त्वेनाच्त्वादिति भाव. । पूर्वत्वं चात्र व्यवहिताव्यवहितसाधारणम् , स्वरे निषे-

भैरवी ।

धायकशास्त्रस्य बलवत्त्वादकारस्य लोप एव भविष्यतीति न वृद्धिरित्यसङ्गतमत आह—अत उपेति ।

ननु तस्य प्रवृत्तिरभावातिदेशेऽपि दुर्वारा, "क्विलुक्" इति वार्तिकेन स्थानिवत्त्वनिषेधादत आह—क्विलुगिति । प्रत्ययेति । यथा 'पारिखीय' इत्यत्र परिखाशब्दाच्चातुरर्थिकेऽणि तदन्ताद्वृद्धाच्छस्य बाधको "जनपदतदवध्योः" इति वुञ् प्राप्तस्तम्बाधित्वा "वृद्धादकेकान्तखोपधात्" इति छो भवति । एवकारस्य क्विलुगिति वार्तिके चङ्परनिर्ह्रासग्रहणाज्ज्ञापकाल्लब्धस्य व्यावर्त्यमाह—नान्यत्रेति । तेन कथयतीत्यादेः सिद्धिः । ननु 'वैयाकरणः' इत्यत्र निमित्तापेक्षया पूर्वत्वाश्रयणपक्षेऽप्यायादेशापत्तिरुक्ता, सा न सङ्गच्छते, निमित्तादेकारस्याव्यवहितपूर्वत्वाभावादत आह—पूर्वत्वञ्चात्रेति । स्वरे निषेधादिति । तस्य हि 'चिकीर्षक.'

भावप्रकाशः ।

ति" इत्यस्याद्यावप्राप्तिः । स्वविधावस्थानिवत्त्वादनन्तरमपि नेत्यत आह—अत इति । लघूपधवृद्धिद्वारा लोपहेतुकत्वं तस्या बोध्यम् । नन्वेवमपि "क्विलुगुपधात्व" इति निषेधात्तस्य दुर्लभमेवात आह—क्विलुगिति । "वृद्धादकेकान्तखोपधात्" इत्यस्य 'पारिखीयः' इति लक्ष्ये इत्यर्थः । एतव्द्यावर्त्यमाह—नान्यत्रेति । उपधासंज्ञायां तद्धेतुककार्यान्तरे चेत्यर्थः । अत एव चङ्परनिर्ह्रासग्रहणं तत्र चरितार्थमिति भावः । नान्यत्रादितिपाठः 'नान्यत्रादिति भावः' इत्यपपाठः । नन्वादेशापेक्षयाऽव्यवहितपूर्वत्वसत्त्वेऽपि न निमित्तापेक्षयाऽसत्त्वात्कथं तत्पक्षेऽप्येतद्दोषोक्तिरत आह—पूर्वत्वं चेति । अत्र पूर्वविप्रतिषेधः । स्वरे

सरला ।

परेतु आदेशे स्थानिवृत्तिधर्मतत्सम्भावनायां यद् भवति तद् भवति, यत्र भवति तत्र भवतीत्येवार्थः । अत एव "परस्मिन्निति किं युवजानिः" इत्येतत्कल्पलाभपरं भाष्यं सङ्गच्छते । नच 'दधो गमयति' इत्यादौ सुलोपापत्तिरिति वाच्यम्, इष्टत्वात् । अत [illegible] 'श्व यूनः पश्य' इत्यादौ "न सम्प्रसारणे" इति सूत्रस्य वै "सम्प्रसारणादसम्प्रसारणे" इति कल्पे च न फलभेद इत्याहुः । न वृद्धिरिति । अकारे सति अकाराकारयोरभावाभावेनाभवन्त्या वृद्धेरकारलोपेऽपि अभावातिदेशेन "अत उपधाया." इति वृद्धिर्न भवति । एवञ्च 'गणयति' इति फलमभावातिदेशस्य । भावातिदेशफलं तु 'निगाल्यते' इति । तत्र णिचि सति लत्वं भवति तल्लत्वं णिलोपेऽपीति । भाष्ये स्पष्टमिति । "क्वि–लुग्–उपधात्व–चङ्परनिर्ह्रास–कुत्वेषूपसंख्यानम्" इति नपदान्तसूत्रे स्थानिवद्भावनिषेधकं वार्तिकं पठितम् । तत्र उपधात्वपदेन उपधात्वनिमित्तकसर्वकार्याणां ग्रहणे चङ्परे णौ उपधाह्रस्वस्यापि उपधात्वनिमित्तकत्वेन तत्र स्थानिवद्भावस्य तेनैव निषेधसिद्धेश्चङ्परनिर्ह्रासग्रहणस्य वैयर्थ्येन उपधात्वपदेन उपधात्वनिमित्तक प्रत्ययविधेरेव ग्रहणेन वृद्धेः प्रत्ययविधित्वाभावेन न निषेधप्रवृत्तिरिति स्पष्टमित्यर्थः । तदुक्तं भाष्ये–"विशेषत एव तद्वक्तव्य, क ? प्रत्ययविधौ । इह मा भूत्—पटयति लघयति" इति ।

दृष्टस्येति । पूर्वत्वमुपलक्षणं न तु विशेषणमिति भावः । एतेन "अचः पूर्वत्वविज्ञानादैचो सिद्धम्" इति वार्तिकं व्याख्यातम् ॥

'न पदान्त' ( पा० सू० १।१।५८ ) । पदस्य चरमावयव इति । वृक्ष वेवीति वृक्षवी, वार्तीति वृक्षवा, तमाचष्टे वृक्षव्, विच्। इह "लोपो व्यो —"

---

शब्दरत्नम् ।

धात् । अतो यन्निमित्ताकारापेक्षयाऽप्यैकारस्य पूर्वत्वमस्तीति तत्पक्षे ऽप्ययं दोष इति भावः । आदेशेनापहारात् कथं स्थानिनोऽवधित्वमित्यत आह—उपलक्षणमिति ।

अन्तशब्दस्य चरमावयववाचित्वं विधिशब्दो भावसाधनः कर्मषष्ठ्यासमासेन पदचरमावयवे कर्तव्ये इत्यर्थं व्याख्याने फलमाह—वृक्षमिति । विजिति । क्विपि वट् स्यामैत्वौ ।

इत्याद्युदाहरणम् । तत्र रेफवकाराभ्यां व्यवधानेन स्थानिवद्भावाप्राप्तेः न निषेधोऽव्यवहितपूर्वस्याश्रयणे व्यर्थः स्यात् । मत —व्यवहितस्यापि पूर्वशब्देन ग्रहणात् । अपिशब्दात् स्थानादेशापेक्षया पूर्वत्वस्य ग्रहणपक्षे दोषः सूचितः । अचान्तरङ्गपरिभाषया पक्षागमस्यासिद्धत्वादुभयपक्षे 'वैयाकरण' इत्यत्रायादेशापत्तिः, "किरतौ लवने" इति ज्ञापकादतिदेशविषयेऽपि तस्याः प्रवृत्तिस्वीकारादिति वाच्यम्, ज्ञापकमूलकवचनकल्पनापेक्षया स्थान्यपेक्षया पूर्वत्वाश्रयणे लाघवात् ॥

मूले—'ऐचोः सिद्धम्' इत्यर्थेचो इत्यस्य श्रवणमिति शेषः । परमूले-"न पदान्त" इति सूत्रस्थविधिशब्दस्य भावसाधनत्वाभिप्रायेण व्याख्यानं कृतं, ननु तस्य कर्मसाधनत्वम् । तस्य पदं मूले आह—वृक्ष वेतीत्यादिना । एतदेवोपपादयति—अन्तशब्दस्येति । यत्तु

भावप्रकाशः ।

इति । अन्यथा तत्र रेफवकाराभ्यां व्यवायेन तदप्राप्त्या तत्सुद्धिनिषेधे व्यर्थः स्यादिति भावः । अत, शब्दस्यपूर्वत्वग्रहणात् । अपिश्च स्थानादेशापक्षयो समुच्चयः । यत्तु अन्तरङ्गपरिभाषया ऐचोरसिद्धत्वान्मूलटीके चिन्त्ये 'नाजानन्तर्ये' इति तस्यानित्यत्वा नास्त्येव वा । एवं च त्रयाणामपि पक्षाणामदुष्टत्वम्, निमित्तापेक्षया पूर्वत्वपक्षे लवनमित्यादावयायभावापत्तिस्तु "किरतौ लवने" इत्यादिज्ञापकात्रेति न्यासकृदनुयायिमन्द, तत्र, आतिदेशिके कार्येऽन्तरङ्गत्वस्य दुरुपपादत्वात् तदेवर्थापत्तेश्च, ज्ञापकाश्रयणे गौरवाच्च, मन्दसम्मतभाष्यवार्तिकविरोधाच्च । अत एव तथा भाष्यशाब्देकिखण्डनपरकौस्तुभसंगतिरिति दिक् । एतच्च सूत्रे श्रुतत्वात्तस्यैवावधित्वमित्याह—स्थानिन इति ।

प्रतीकं धृत्वा तथोक्तौ सङ्गतिमाह—अन्तेति । यत्तु विधिशब्दः कर्मसाधनः, पूर्वेण शेषषष्ठ्या समासे द्विर्वचनाद्यसङ्ग्रहेऽपि कर्मधारये न दोष इति रत्नाकरः । तन्न, तस्य पूर्वनिपातासत्त्वे । कर्मसाधनस्य बहिरङ्गत्वाच्च । एतेन विधिशब्दः कर्मसाधनः स्थानषष्ठ्या च समास इत्यपास्तम्, द्विर्वचनादिषु विधिशब्दान्वयापत्तेश्च, तत्र कर्मधारये वैरूप्यापत्तेश्च, एकेन विधिशब्देन युगपत्समासद्वयानुपपत्तेश्च, यथो यन्ह इति' इत्याद्यसिद्ध्यापत्तेश्च । इयमेवारुचिर्मूले तुनेतद्व्याख्याने बोधिता । एतेन तथा व्याख्यानं स्वीकुर्वन् मन्दः "अभ्यर्थेवा चलनस्य" इति न्यायेन प्रत्युक्तः । तदाह—विधीति । इत्येवमिति । इत्येवं फलि

सरला ।

तत्पक्षेऽपीति । निमित्तग्रहणपक्षेऽपीत्यर्थः । उपलक्षणमिताति । अविद्यमानं सद् व्यावर्तकमुपलक्षणम् । यथा 'काकवन्तो देवदत्तस्य गृहा' इत्यत्र देवदत्तगृहे सर्वदा काकस्यासत्त्वेऽपि कदाचित्काकस्य सत्त्वादर्शनेन काक उपलक्षणम् । विशेषणं च विद्यमानं सद् व्यावर्तकम् । यथा 'रूपवान् घटः' इत्यत्र रूपम् । मूले व्याख्यातमिति । पूर्वत्वस्योपलक्षणतया स्थानिभूताजनिरूपितस्यैव पूर्वत्वस्य ग्रहणेन 'वैयाकरण' 'सौवश्वि' इत्यत्र स्थानिभूताजनिरूपितपूर्वत्वाभावेन ऐकारौकारयोः श्रवणं सिद्धमित्यर्थक वार्तिकं सङ्गतमित्यर्थः ।

भावसाधन इति । विपूर्वक 'धा' धातो 'उपसर्गे घोः किः' इति सूत्रेण किः प्रत्ययः । स च भावे

( पा० सू० ६।१।६६ ) इति वलोपो न, स्थानिवत्त्वात् । न च "न पदान्त–" ( पा० सू० १।१।५८ ) इति निषेध , इह विधेयस्य लोपस्य पदान्तावयवत्वात् । पदान्तस्य स्थाने विधौ नेति व्याख्याने तु नेद सिध्येत् । "सुबन्ताण्णिच्" इति हरदत्तादिमतेऽन्तर्वर्तिसुपा पदत्वात् । न च "इष्ठवत्" इत्यतिदिष्टेन णिचि भत्वेन पदत्वबाध ,

---

शब्दरत्नम् ।

दिति भाव । स्थानिवत्त्वादिति णिलोपस्य टिलोपस्य वा स्थानिवत्त्वादित्यर्थ नन्वस्य पदत्वाभावात्कुतोऽसिद्धिरत आह—सुबन्त दिति। अन्तर्वर्तिसुब्निमित्तकपदत्वस्यैकद

भैरवी ।

कैयटेन "वृक्ष वृश्चति" इति क्विपि तत भाष्याने णिचि विवक्षितस्तथाख्याख्यानफलनिरूपणावसरे, स तु प्रकारो न युक्त, उपधावृद्धेर्दुर्वारत्वात् । अतोऽयमेव साधनप्रकार आदृत । कठ् स्यादिति । तस्य वलोपापवादत्वादिति भाव । अस्य—वृक्षव्‌शब्दस्य । पदत्वाभावादिति । प्रातिपदिकाण्णिज्रुक्तस्य स्वीकारादिति भाव । मूले—हरदत्तादिमत इति । "तत्करोति तदाचष्टे" इति वचनस्य 'द्वितीयान्तात्' इति तेन व्याख्यातत्वादिति भाव । नच "प्रातिपदिकाद्धात्वर्थे" इत्यत्र प्रातिपदिकादित्यस्य दर्शनेन सुबन्तादित्यसङ्गतमिति वाच्यम्, "तेनातिक्रामति" इत्यत्र तेनेत्यस्य तृतीयान्तादिति व्याख्यानदर्शनेन तत्साहचर्यात्प्रातिपदिकादित्यस्य प्रातिपदिकप्रकृतिकात् सुबन्तादित्यर्थ इति सद्भावात् । अन्तर्वर्तिसुपा पदत्वमाकारायन्ते न तु वाक्य इत्याशङ्कायामाह—अन्तर्वर्तीति । एकदेशेति । तस्य न्यायस्य लौकिकत्वादिति भाव । मूले—न चेडवदिति । इदमपि परत्वात्सुप्तिङन्तमित्यस्य

भावप्रकाश ।

तव्याख्यान इत्यर्थ । शब्द तु पदचरमावयवकर्मकविधाविति वाच्यम् । यत्त कैयटेन 'वृक्षवन्तमाचष्टे' इति णिचि टिलोपे विचि रूपमिति मते मतुब्लुक्टिलोपापवादत्वान्न दूष्य 'वृक्ष वृश्चति' इति क्विपि तमाचष्ट इति णिचि टिलोपे विजि युक्तम् । प्रकारोऽप्येवम् । तत्र, "अत उपधाया" इति वृद्धेर्दुर्वारत्वात् । अतो मूले नेडीत्यादि । तद्धितेति । वलोपापवादत्वादिति भाव । देवो साकाङ्क्षत्वादाह—णिलोपस्येति । तथाच वलस्थानाभाव इति भाव । वृद्धिवारणायाह—णिलोपस्येवेति । अस्य—वृक्षव्‌शब्दस्य । पदत्वाभावादिति । प्रातिपदिकात् णिज्रुक्तत्वे । नचैव मूलेऽपदत्वादित्येव सिद्धत्वमवोक्तिम्यर्थेति वाच्यम्, अन्तशब्दस्य समीपवाचकत्वमिति सुबन्ताण्णिजिति मतेऽपि सिद्धिरिति च ध्वनयितु तथोक्ते । एतेन णिचि वचसमारोप्यापदत्वस्यैवाभावेन तदनवयवत्वादिति मूलोक्तिश्चिन्त्येति रत्नाकरोक्तमपास्तम्, तदोषे खण्डयिष्यमाणत्वाच्चेति भाव । कुतोऽसिद्धिरिति । तथाच वृक्षवतेरमत्वय 'वृक्षव् करोति' इत्यादिषु क्रमाभ्यविरोध इति भाव । निमित्तभूतमुत्तरहेतुकत्वसत्त्वाद्धेतुकनिषेधेन णिज्रुलस्य प्रवाहितवेलायां वलोप भविष्य पक्षाभावादिदेशबाधो वक्तुमशक्य इति ध्वनयन्नाह—अन्तर्वर्तीति । एकदेशेति । तथाच लौकिकन्यायविषयोऽय नतु शास्त्रीयस्थानिवद्भावादे । पदनान्तवर्तिसुब्निमित्तपदसंज्ञाया बाह्यणिच्हेतुकादि

सरला ।

कर्मणि च तेन विधानाद् द्वयोरप्यर्थयो सम्भवति । तथा च भावे यदा स विधीयते तदा कर्मणोऽनुक्ततया पदान्तस्येति कर्मणि षष्ठ्या विधिशब्देन समास , ततश्च पदचरमावयवकर्मके विधाने इत्यर्थे यस्य विधान तस्य तत्र पदचरमावयवत्वमावश्यकमिति लोपस्याभावरूपतया तस्यावयवत्वासम्भवेन लोपविधाने नास्य प्रवृत्ति । कर्मणि यदा कि प्रत्ययस्तदा कर्मण उक्ततया सम्बन्धमात्रे शेषषष्ठ्या पदान्तशब्दस्य विधिशब्देन समास इति पदचरमावयवसम्बन्धिविधाने इत्यर्थे षष्ठ्या अनिर्धारितसम्बन्धविशेषतया "षष्ठी स्थाने योगा" इत्यस्य प्रवृत्तौ पदचरमावयवस्थानिके विधाने इत्यर्थे यस्य विधान तस्य तत्र पदचरमावयवस्थानिकत्वमात्रस्यापेक्षितत्वेन पदचरमावयवत्वस्य तदनवयवत्वस्य वा सत्त्वेऽपि तत्प्रवृत्त्या लोपेऽपि कर्तव्ये 'पदान्तविधौ' इत्यस्य निषेधस्य प्रवृत्तिरिति 'वृक्षव्' इत्यत्र दोषापत्तेरत्र सूत्रे भाष्यसाधन पर एकान्य इति

सोर्लुप्तत्वात्, न च प्रत्ययलक्षणम्, वर्णाश्रयत्वादिति भाव । द्विर्वचनादौ चेति । यलोपादय आदिशब्दग्राह्या । 'वरे' इति तु वरे योऽजादेश स न स्थानिवदिति व्याख्येयम् । सहविवक्षाऽभावेऽपि निपातनाद् द्वन्द्व सप्तम्यलुक् च ।

---

शब्दरत्नम् ।

शविकृतन्यायेन वान्तेऽपि सत्त्वमिति भाव । प्रत्ययलक्षणमिति । स्थानिव त्त्वेन प्रत्ययनिमित्त कार्यमित्यर्थ । वर्णाश्रयत्वादिति । "णाविष्ठवद्–" इत्यनेन "यचि भम्" इति शास्त्रस्यैवातिदेशस्तच्च वर्णाश्रयम्, एवञ्च स्थानिवत्त्वस्याप्रसक्ति । कार्यातिदेशेऽपि यन्निमित्तत्वेनस्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तसत्त्वमति-

भैरवी ।

बाधकमिति भाव । ननु प्रत्ययलक्षणमित्या शङ्का कृता सा न सङ्गच्छते, तस्य सू त्रस्य नियमार्थत्वसिद्धान्तादत आह—स्थानिवत्त्वेनेति । एवञ्च स्थानिवत्सूत्रस्यैव प्रसक्तिर द्धेयमिति भाव ।

अल्विधित्वात्तस्याप्राप्तिमुपपादयति—णाविष्ठदित्यादिना । वर्णाश्रयमिति । यचादीत्यस्य स्वादीत्येतद्विशेषणत्वेऽपि प्रत्ययस्यनेनाप्राधान्येनालाश्रयणेऽपि निषेधस्य प्रवृत्ते स्वीकारा दिति भाव । ननु स्थानिवत्सूत्रेण प्राधान्यात्कार्यातिदेश एव क्रियते इति कथमतिदेशाप्रवृ त्तिरत आह—कार्यातिदेशेऽपीति । भञ्जीकारादिति । अत एव 'सर्वस्मिन्' इत्यत्र दीर्घो न अति दिष्टकार्यस्यापि यचादिनिमित्तकत्वात् । ननु वर्णाश्रयेऽपि प्रत्ययनिमित्तकार्यार्थम्प्र

भावप्रकाश ।

लोपस्यासिद्धत्वात् 'अच पर" इति स्थानिवद्भावादरदत्तमताङ्गीकारेऽपि प्राचोक्तव्याख्याने न दोष इति मन्दोक्तमपास्तम्, असिद्धमिति यत्र भयासस्याऽन्तरङ्गादिपदेन शास्त्रस्यैव ग्रहणेनात्राप्राप्ते । त न्यायस्य लौकिकत्वात् । अतएव तद्भ्यपदत्वस्याशास्त्रीयत्वेनान्यपक्षोऽप्ययुक्त । वक्ष्यमाणरीत्या 'न पदान्त' इति निषेधाच्च । तदाह—वान्तेपीति । अपिना ईकारान्तादिसमुच्चय । यत्तु पदान्तस्य स्थाने इत्यादि वर्णाश्रयत्वादित्यसमनूद्य 'अतृणे?' इत्यादिसिद्धये निषेधस्य वर्णप्राधान्ये एव प्रवृत्तराकरोक्तत्वात् कौस्तुभे "अच पर' इति सूत्रे 'पटयति' इत्यत्र पदत्ववारणाय तादृशमतेन पदत्वव्यवस्याभ्युपगमाच्चेति दूषित वान् रत्नाकरस्तदसदिति ध्वनयितुमाह—स्थानेति । शेषपूरणमेतत् । उपस्थितत्वात् प्रत्ययेत्यस्य तदर्थ । उभयत्र बहुव्रीहिरिति भाव । नन्वेवं व्याख्याने उत्तरासङ्गात "अल्पप्रत्ययग्रहणात् तल्लक्षण यथा स्यात् वर्णलक्षण माभूत्—'गोहितम्' इत्यादिभाष्येण वर्णाश्रये तस्याभावोक्तेर्न स्थानिवत्त्वस्येत्यत आह—णाविति । अयञ्च टेरित्यत्रोक्त "णाविष्ठवत्प्रातिपदिकस्य" इति वार्तिकैकदेशानुवाद । एतेन "प्रातिपदिकात्" इत्यादिगणसूत्राणामप्रामाण्यम्, 'हेतुमति च" इत्यत्र 'तत्करोति' इति वार्तिकोक्ते, एवञ्च प्रातिपदिकादेव णिजुत्पत्तिलाभ इति सिद्धान्तो ध्वनित । यद्यपि मतस्था भाष्ये न दृश्यते तथापि "उदा हरणमेतन्न परिगणनम्" इति भाष्यात्तस्या अपि ग्रहणम्, तेन 'स्रजयति' इत्यादौ कुत्वाभाव 'स्रक्' इत्यादौ तत्त्व च सिध्यति, तदाह—यचि भमिति । वर्णाश्रयमिति । वर्ण अल् आश्रयो हेतुर्यत्र तदि त्यर्थं । वर्णाश्रयत्वादिति मूलस्याप्ययमेवार्थ । एवञ्चाल्विधित्वादिति फलितम्, तदाह—एवञ्चेति । अल्विधित्वे चेत्यर्थ । एवञ्च नेदं तद्विशेषपरम्, किंतु स्थानिवत्सूत्राप्रवृत्तिबोधकं 'सुध्युपास्य' इत्यत्रा नेनेत्यादि कौमुदीग्रन्थवदिति । प्रागुक्तरत्नाकरोक्तियुक्त्या 'पटयति' इत्यत्र णिच्सत्त्वेन प्रत्ययलक्षण प्राप्त्या द्वितीयहेतोरसम्बद्धत्वाच्चेति भाव । नन्वेवमपि प्राधान्यात्कार्यातिदेशपक्षेऽतिदेशसूत्रस्यात्रत्वेनेद दुर्वचमत आह—कार्यातिदेशेऽपीति । अल्रूपस्य तन्निमित्तरूपस्य वा कार्यस्यातिदेशेऽपीत्यर्थ । अनि

सरला ।

तदाशय. । यन्निमित्तेति । यस्य निमित्तस्याभावप्रयोज्या उपदेशस्य प्रधानशास्त्रस्याप्रवृत्तिस्तन्निमि-

### शब्दरत्नम् ।

देशस्यापीत्यङ्गीकाराद्वर्णाश्रयत्वाक्षतिः । प्रत्ययलक्षणसूत्रं तु भाष्यकृता प्रत्ययस्य यत्रासाधारणं रूपमाश्रीयते तत्रैव प्रत्ययलक्षणमिति नियमार्थत्वेन स्थापितं न त्वप्राधान्येना-

### भैरवी ।

त्ययलक्षणसूत्रमस्त्वित्यत आह—प्रत्ययेति । स्थापितमिति । नच 'अतृणेट्' इत्यत्र कथमिमागमस्तस्य हलादौ पिति सार्वधातुके प्रवृत्तिस्वीकारादिति वाच्यम्, हलीत्यस्य तत्र

### भावप्रकाशः ।

देशस्यापीत्यपिरुपदेशसमुच्चायकः । यथाश्रुतमूलस्य भङ्गया व्याख्याने बीजमाह—प्रत्ययेति । प्रत्ययहेतुकार्यशेषकसूत्रमित्यर्थः । साधारणमिति । तन्मात्रवृत्तीत्यर्थः । एवञ्च 'सुदृषत्प्रासादः' इत्यादौ दीर्घत्वमिवारण्यमसमतिदेष्टुमशक्यम्, "वृषण्वस्वश्वयोः" इत्यनेनान्यत्रापि विधानात् । एतेन वार्तिकमते यथाश्रुतविषयतया तत्र्यातिदेश, तथापि भाष्याभिप्रायेणेत्ययुक्तमिति भाष्योक्तिः प्राचामनुरोधेनेति ध्वनितम् । नियमशास्त्राणां विधिमुखेनैव प्रवृत्त्या यथा श्रुतमूलस्यापि भङ्गया व्याख्यानमयुक्तमित्यपास्तं च, तत्रापि चकारीत्या तत्प्राप्त्या वर्णाश्रयत्वादिरुक्तत्वसङ्गतेः । अत्रानेन शास्त्राणामपि नियमार्थत्वादिसूत्रतोऽपि विरयाच, यथाश्रुतमूलसङ्गतेरुक्तत्वाच्चेति दिक् । लक्षणमिति नियमेति । एतेन नियमशास्त्राणां विधिरूपेणैव प्रवृत्तिः सूचिता । अन्यथा यत्र तदभावस्तत्रतदभाव इति नियमेति ब्रूयात् । नन्विति । सुदृषदित्यादौ दीर्घापत्तेः । तथाच वार्तिकमतमेवायुक्तम् । अतृणेट् इत्यादिसिद्धिस्तु "नाभ्यस्तस्य" इत्यतोऽपि नेत्यनुवर्त्य वाक्यभेदेन व्याख्यानेनेति स्पष्टं भाष्यादौ । तथाच मूलकृतोऽपि स्थानिवत्सूत्र-

### सरला ।

यादृशानि यानि यानि तत्र निमित्तानि तन्निमित्तत्वमतिदेशशास्त्रस्यापीत्यर्थः । वर्णाश्रयत्वाक्षतिरिति । ननु 'दृषन्' इत्यत्र निष्ठापि स्यादित्वाजादित्वोभयाभावप्रयुक्ता "यचि भम्" इति शास्त्रस्याप्रवृत्तिरिति तदलिङ्कानिमित्तकत्वेनाजादित्वनिमित्तकत्वाभावेन कथं वर्णाश्रयत्वमतिदेशस्येति चेत्? न, यन्निमित्तकत्वेत्यत्र निमित्तपदेन साहश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मस्य ग्रहणेनादोषात् ।

तथाहि, णिः इत्यनकृति इत्यतिदेशीयसादृश्यप्रतियोगितावच्छेदकीभूतो य इकत्वरूपो धर्मस्तद्व्यापकीभूतो धर्मः स्वादित्वरूपः न त्वजादित्वरूपो 'भूयिष्ठ.' इत्यादौ व्यभिचारादिति यन्निमित्तपदेन स्वादित्वस्यैव ग्रहणेनाजादित्वस्य तदनिमित्तत्वादतिदेशस्य तदपेक्षणेन वर्णाश्रयत्वमक्षतमिति न दोषः । न चैवमपि "यचि भम्" इत्यत्र यचीति द्वन्द्वनिर्देशेन भसंज्ञायां यकारादित्वाजादित्वान्यतरत्वेन निमित्तत्वादन्यतरत्वे सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकत्वमस्त्येवेति पुनरपि तद्दोषतादवस्थ्यमेवेति वाच्यम्, यचीत्यत्र 'य्' इति लुप्तसप्तम्यन्तं पृथक् पदमिति स्वीकारेणादोषात् ।

अत एव "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति टच् समासान्तो न प्रसज्यते । अथवा यन्निमित्तकत्वेत्यत्र निमित्तपदेन सादृश्यानुयोगितावच्छेदकधर्मव्यापकीभूताभावप्रतियोगिधर्मस्यैव ग्रहणमिति न कोऽपि दोषः । णिः इकवद्भवतीत्यत्र सादृश्यानुयोगितावच्छेदकं णित्वं तद्व्यापकीभूताभावप्रतियोगि स्वादित्वमेव न त्वजादित्वमादित्वं तदन्यवद्, णौ अजादित्वस्य सत्त्वादिति दिक् । स्थापितमिति । स्थानिवत्सूत्रेणैव सिद्धे "प्रत्ययलोपे प्रत्ययलक्षणम्" इति सूत्रं नियमार्थमिति भाष्यकृतः । तथाच प्रत्ययलोपे प्रत्ययलक्षणमेव न तु स्थानिवद्भावः । तेन स्थानिवत्सूत्रस्यादेशपदार्थे प्रत्ययलोपातिरिक्तत्वेन संकोच इति 'सुदृषत् प्रासादः' इत्यादौ स्थानिवद्भावेनासन्तत्वमादाय न "अत्वसन्तस्य" इति दीर्घः । नच 'भिनत्ति' 'अतृणेट्' इत्यादौ "शास इदङ्हलोः" "तृणह इम्" इत्यादि न स्यात् । प्रत्ययलोपसूत्रस्य स्थानिवत्त्वनियामकत्वसिद्ध्यर्थं नियम्यस्थानिवत्सूत्रमात्रविषयकत्वामस्यकतया तत्र सूत्रे अनल्विधौ इत्यस्यानुवृत्तेः सत्त्वेन हलादित्वस्य अल्व्याप्यधर्मघटितत्वात्प्रत्ययलक्षणाप्रवृत्तेरिति वाच्यम्, "शास इदङ्हलोः" इति सूत्रे हलीति न क्रियते, "शास इत्" "अङि" इति च योगौ विभज्यते अजादौ नेदन्यथेति नियमेन, "तृणह इम्" इत्यत्र हलीतिपदमननुवर्त्य "नाभ्यस्तस्य" इति सूत्रात् 'न' इति 'अचि' इति चानुवर्त्य

शब्दरत्नम् ।

सिद्धमित्यर्थकेन "पूर्वत्रासिद्धमद्विर्वचने" इत्यनेन धातुधकारस्य जश्त्वे दस्यैति वक्तुमुचितमिति वाच्यम्, फले विशेषाभावेन तदनादरणात् । न ह्यत्र जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषोऽस्ति, तदनन्तरं जश्त्वप्रवृत्तेः सत्त्वात् । यत्र पूर्वत्रासिद्धप्रवृत्तौ तन्निषेधे वा फले विशेषस्तत्रैवास्याः परिभाषात्वेन प्रवृत्तेरित्यन्यत्र विस्तरः । यद्वा यस्य तस्यानिरूप्येत्यर्थ इति दिक् ॥

भैरवी ।

अस्याः—'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यस्याः । यत्तु "द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम्,

भाष्यप्रकाशः ।

येन वक्ष्यमाणार्थाङ्गीकारेण विधिसामान्ये "न मु ने" इतिवत् द्विर्वचनान्यत्र द्वित्वे कृतेऽपि प्रत्याख्याता द्विर्वचनकार्यान्यकार्ये च पूर्वत्रेदमसिद्धमित्यर्थस्योक्तभाष्यीयकस्यचक्षेनाङ्गीकारात् । भवप्रोक्तनाप्रयोगसिद्धये नञोक्तार्थतात्पर्यकत्वप्रवृत्तिरावश्यिका । भवश्यशब्दस्याग्रे तुम् मनोषादेराकृतिगणत्वादावश्यक इति निपातनाद्वा । ततोऽर्शआदेराकृतिगणत्वादच् टाप् इत्यम् । स्पष्टं चेदं मनुष्यसूत्रे कैयटे । एवञ्चाविशेषात्सर्वद्वित्वं तत्र गृह्यते । तथा तथार्थाङ्गीकारादेवोऽडिडदित्यस्य सिद्धिः । अन्यथाऽभ्यासे जुत्वापत्तिः, वार्तिकं तु वदवक्षुत्यानुवादः । अत्रापि सर्वं द्वित्वमिति ग्रन्थसङ्गतिरेवेति दिक् । तदेतद् ध्वनयन्नाशङ्कते—नचेति । इत्यर्थकेनेति । इति विध्यर्थतान्वयकेनेत्यर्थः । द्वित्वे पूर्वत्र परमसिद्धं नेत्यर्थस्तु न, असमर्थसमासापत्तेः, निषेधविधौ गौरवाच्च । स्पष्टञ्चेदं परिभाषेन्दुशेखरे । शब्देन्दुशेखरस्त्वार्थिकार्थपरतया नेयः । अनेन वाक्यसंस्कारपक्षे 'कृष्ण ऋध्दिः' इत्यत्र धत्वासिद्ध्या गुणेन भावि ऋनाशेन द्वित्वाप्राप्त्या च गुणे द्वित्वे कार्येऽसिद्धत्वं नेत्यर्थंपरत्वकपूर्वत्रासिद्धमित्यनेन परत्वाद्वक्ष्यमाणरीत्या "आगन्तूनामन्ते निवेशः" इतिन्यायेन द्वित्वशास्त्रविधेयस्याग्रे धत्वोत्पत्त्या झषानन्तर्यविधानेनाकृतेऽप्यनेन धत्वाप्राप्त्या जश्त्वाप्रवृत्तेश्च द्वित्वे सति धस्येत्युक्तिर्व्यर्थैवेति भाष्योक्तिः प्राचामनुरोधेनेति ध्वनितम्, भाष्यविरोधापत्तेः । अकृतेऽस्याऽसत्त्वाच्चेति भावः । पूर्वत्रासिद्धीयमिति । सपादसप्ताध्यायीत्वाद्भ्यः तदधिकारमध्यपातित्वमस्या लिङ्गम् । यत्र तस्य तथा द्विर्वचने इत्युपदिष्टे इत्यर्थः । तत्र "पूर्वत्रासिद्धम्" इत्यधिकारपाठम् । "समानाधिकरण्ये" इतिन्यायेनाद्विर्वचने इति पूर्वत्रेत्यत्रान्वेति । तेन परस्य द्वित्वस्याप्यसिद्धत्वं भवतीतिभावः । इत्यनेन—वार्तिकेन । यत्तु जश्त्वोत्तरं द्वित्वे तस्य सकृत्प्रवृत्तिः, अन्यथा त्वावृत्तिरिति लाघवगौरवविशेषात्परिभाषासङ्कोचे मानाभावात्तन्न्यायेन द्वितीयधे जश्त्वाप्रवृत्तेश्च चिन्त्यमिदमिति मन्दः । तन्न, "नञोकस्यानेकस्य वा" इति भाष्यविरोधापत्तेः, भागुकरीत्या द्वित्वोत्तरं जश्त्वेऽपि द्वित्वाप्राप्त्याऽनावृत्तेश्च, परिभाषात्वस्यैव सङ्कोचे मानत्वाच्च, तथा लक्ष्यभेदस्य सत्त्वाच्च । तदिदं ध्वनयितुमनादरे हेतुमाह—यत्रेति । पर्जन्यवल्लक्षणप्रवृत्तिरित्यस्यासङ्काराया—परेति । यद्यपि वार्तिकस्मृत्युक्तमिदं, तथापि परिभाषावृत्तिकृद्भिरस्य तत्त्वमुक्तमिति तदुक्तपरिभाषेति न दोषः । नियामकत्वमेव हि तत्त्वम् । नियमश्च फलविशेषार्थेवेति तदभावस्थले न प्रवृत्तिः । अत एव "व्रीहीनवहन्ति" इत्यादौ दृष्टफलविशेषान्नियमजन्यादृष्टं कल्पयन्ति वाक्यविदः । तदाह—अन्यत्रेति । एतेन "झलां जश्" इति ज्योऽप्रतिहतप्रसरत्वादुक्तन्यायेन जश्त्वः सिद्धत्वाच्च मूलं चिन्त्यमिति खण्डनकारोक्तिः, यत्तु ऋधेर्धस्येति भाव इति दाक्षिणाः । तन्न, जश्त्वे कृते दस्यैत्यौचित्यात् । असिद्धत्वं तूक्तपरिभाषया नेति रत्नाकरोक्तिश्चापास्ता, तदुक्तं च ।

सरला ।

पूर्वत्रासिद्धमद्विर्वचने इति । द्वित्वमिन्न पूर्वत्रकर्तव्ये परमसिद्धमिति तदर्थः । एव च द्वित्वविधायक "अनचि च" शास्त्रदृष्ट्या "झलां जश् झशि" इत्यस्य असिद्धत्वाभावेन परत्वात् "झलां जश्" इत्यस्य प्रवृत्तिरिति भावः । यत्तु द्वित्वे कर्तव्ये णेपादिकं शास्त्रं नासिद्धमिति व्याख्यानं, तन्न, सुध्यामित्यस्यासिद्धत्वापत्तेः । दिव्ध्यामित्यत्र द्वित्वे कर्तव्ये "दिव औत्" इति शास्त्रदृष्ट्या "अनचि च" इतिशास्त्रस्यासिद्धत्वनिषेधेन परत्वाद्वकारस्य द्वित्वे पश्चादन्यस्य वस्येऽपि वकारानिवृत्तेः । विस्तर इति । अ

लोपे चेति। "झयो होऽन्यतरस्याम्" ( पा०सू०८।४।६२ ) इति सूत्राद्विकल्पानुवृत्तेः। एतच्च "नाज्झलौ" ( पा०सू०१।१।१० ) इति सूत्रे भाष्यकैयटयोः स्पष्टम्। प्राचस्तु विकल्पानुवृत्तेरनुक्तेर्न्यूनता। यदपि व्याख्यातृभिः "शरोऽचि" ( पा०सू०८।४।४९ ) इति ज्ञापकमभिप्रेत्य तत्संवादार्थं भाष्यमुपन्यस्तम्—"अनुवर्तते विभाषा शरोऽचि यद्वारयत्ययं द्वित्वम्" इति, तन्न, तदुत्तरभाष्ये एव उक्तज्ञापकस्य दूषितत्वात्। लोपस्य हि नित्यत्वे "अचो रहाभ्याम्–" ( पा०सू०८।४।४६ ) इति द्वित्वं लोपापवादः स्यात्। तथा च "शरोऽचि" इत्यस्य सार्थक्यं स्पष्टमेव। तस्माद्विकल्पानुवृत्तौ ज्ञापकान्तरमनुसर्तव्यम्, भाष्यकारादिव्याख्यानमेव

शब्दरत्नम्।

नाज्झलाविति सूत्रे इति। "हयवरट्" सूत्रशेषे चेत्यपि बोध्यम्। अनुक्तेरिति। "हलो यमाम्" ( पा०सू०८।४।६४ ) इत्यत्र "झरो झरि" ( पा०सू०८।४।६५ ) इत्यत्र चेति भावः। ज्ञापकमिति। उभयत्रापि विकल्पानुवृत्तावित्ति भावः। लोपस्य हीति। लोपमात्रस्येत्यर्थः। लोपापवाद इति। आरम्भसामर्थ्यादिति भावः। ज्ञापकान्तर

भैरवी।

संप्यन्तेत्यादौ त्रिपकारकस्वार्थम्" इति भाष्यवार्तिकप्रामाण्येन वर्णद्वित्वेऽस्याः प्रवृत्तिर्न। अतएव 'णत्वं द्वित्वं चतुर्णाम्' इति परममूलसङ्गतिरिति, तन्न, 'वाक्' 'वाक्क्' इति भाष्यीयप्रयोगासङ्गतेः। अत्र चस्य कुत्वे जश्त्वे द्वित्वचर्त्वयोः प्राप्तौ चर्त्वस्यासिद्धत्वेन द्वित्वे परस्य गस्य चर्त्वे तस्यासिद्धत्वेन खर्परत्वाभावेन पूर्वगकारस्य चर्त्वाप्राप्तौ गस्यैव श्रवणापत्तेः। सत्यावमाने चर्त्वस्य जश्त्वापवादतया कस्यैव द्वित्वमिति वाच्यम्, अपवादप्रवृत्तिबाधकद्विस्त्वविषयतासत्त्वेन चर्त्वाप्रवृत्तेः। रामावित्यादौ वृद्ध्यपवादपूर्वसवर्णदीर्घविषयतायाः सत्त्वे निषेधात्प्राग्वृद्धेरप्रवृत्तिवत्। 'पूर्वत्रासिद्धीयमद्वित्वे' इति परिभाषाया उपस्थितौ लिङ्गन्तु [illegible]दधिकारभवशास्त्रत्वम्। यत्र तदधिकारभवशास्त्रत्वं तत्र 'अद्वित्वे' इत्युपतिष्ठत इति तस्यार्थः। एवं तदधिकारीयशास्त्रे 'अद्वित्वे' इत्यस्योपस्थिता 'सम्भवति सामानाधिकरण्ये' इति न्यायेन द्वित्वभिन्ने पूर्वत्र कर्तव्ये इदमसिद्धमित्यर्थो भवति। एतेनैतत्परिभाषामाश्रित्य "झलां जश्" इति जश्त्वस्य प्राक् प्राप्त्या द्वित्वमिति परममूलग्रन्थस्यैति मूलासङ्गतमिति खण्डनकारोक्तिः परास्ता॥

हयवरट्सूत्रस्थभाष्यस्योभयविषयकतया प्रवृत्तेरुभयत्र विकल्पानुवृत्तिः सप्रमाणेति प्रदर्शनायाह—हयवरडिति। मूले—ज्ञापकमभिप्रेत्येति। ज्ञापकमुपन्यस्येत्यर्थः। तत्र ज्ञापकतायाम्—संवादार्थं सम्मत्यर्थम्। लोपमात्रस्येति। अत्र मात्रपदं कार्त्स्न्ये। लोपापवाद इतीति। अत्रापवादशब्दो बाधकपरः। अपवाद इवापवाद इत्यर्थः। अपवादो यथोत्सर्गस्य प्राप्तिम्प्रतिबध्नाति तथेदमपि लोपयोः प्राप्तिं वारयेत्। नत्वपवादत्वमेव सम्भवति, यत्रोत्सर्गे प्रवृत्तेऽप्यपवादत्वेनाभिमतस्य प्राप्तिस्तत्रापवादत्वव्यवहारस्य मुख्यत्वात्। द्वित्वस्य लोपमात्रबाधकत्वे साध

भावप्रकाशः।

व्याख्यातृग्रन्थसङ्गत्यर्थं 'तन्न तदुत्तर' इत्यादि दोषसङ्गत्यर्थं चाह—हयवरडिति। तथाच तद्भाष्यस्योभयविषयकतया मूलेऽप्युभयत्र विकल्पः प्रतिपाद्यते। यद्यपि तत्रोक्त एव तथापि दृढीकरणाय रमार्यते। अत एवाग्रेऽपि यथाश्रुतमूल तत्तट्टीकं धृत्वोभयपरतया व्याख्यानम्। यथाश्रुते एव योजने तदनु

सरला।

नियमे नियमकारिणी परिभाषा। अत्र पूर्वत्रासिद्धेत्यस्य प्रवृत्तावप्रवृत्तौ वा अनियमोऽनारतीति तत्र तस्याः

वा शरणम् । द्वित्वलोपयोरिति । यत्तु द्वित्वविधानसामर्थ्याद् द्वावेव शिष्येते इति, तन्न, लोपस्य वैकल्पिकत्वेन द्वित्वस्य पक्षे चरितार्थत्वात् । त्रिधमिति । "यणो म-य" लक्षणान्तरेण पुनर्द्वित्वे तु चतुर्धमपि बोध्यम् ॥

---

शब्दरत्नम् ।

मिति । "अणुदित्" ( पा०सू०१।१।६९ ) सूत्रस्थमणग्रहणं हलः परस्य यरो लोपो वैकल्पिक इति सामान्यापेक्षमाश्रयणीयमिति भावः । तस्य "हलो यमाम्—" ( पा०सू० ८।४।६४ ) इति विशेषापेक्षत्वे आह—व्याख्यानमेव चेति । यदि तु "हलो यमाम्—" इत्यत्र विकल्पं सिद्धं कृत्वा द्वित्वस्य तद्विषये चारितार्थ्येन "झरो झरि" इत्यत्र तदनुवृत्तौ "झरोऽचि" ( पा०सू०८।४।४९ ) इति ज्ञापकमुपन्यस्यते तदा सम्यगेव, परन्तु प्राचां भाष्यसंमतिलेखः प्रामादिकः । तद्भाष्यस्योभयविषयकतया प्रवृत्तेः ।

भैरवी ।

क्रमाह—भाष्येति । अण्ग्रहणमिति । एतद्धि 'संय्यन्ता' इत्यादावनुनासिकयकारादेर्द्वित्वार्थं, यदि लोपो नित्यः स्यात्तदा कृतेऽपि द्वित्वे तस्य लोपेन निवृत्तौ यकारादिद्वयस्यैव श्रवणमिति तज्ज्ञापकेन सिद्धावस्वरूपस्य परणकारसाध्यप्रत्याहारान्तराश्रयणस्य व्यर्थत्वमिति भाव । तस्य—उक्तसूत्रस्थाण्ग्रहणस्य । सिद्धमिति । अण्ग्रहणादित्यादिः । तद्विषये—'हलोयमाम्" इति लोपविषये 'हर्य्यनुभव' इत्यादौ । "झरोऽचि" इति ज्ञापकमिति । एतद्धि 'चतुर्ष्' इत्यादौ द्वित्वस्य निषेधाय । यदि तु "झरो झरि" इतिलोपो नित्यस्तदा जातेऽपि तस्य द्वित्वे लोपेन निवृत्तावितस्य सिद्धया निषेधो व्यर्थः स्यादिति भाव. । प्राचाम्—प्रकाशकृताम् । तद्भाष्यस्य—"अनुवर्तते" इति भाष्यस्य । उभयविषयकत्येति । तेन ज्ञापकेन "झरो झरि" इत्यत्रानुवृत्तौ सत्यस्यत्वेन "हलो यमाम्" इत्यत्रापि तत्सम्बन्ध इत्युभयविषयकता तस्येति भाव ॥

भावप्रकाशः ।

पपत्तिः स्पष्टैवेति भावः । मात्रशब्दः कार्त्स्न्ये । ग्रहणमिति । यदि 'सय्यन्ता' इत्यादावनुनासिकपर-सवर्णस्य यर्त्वेन ग्रहणात् "अनचि" इति द्वित्वे त्रियकारश्रुत्यर्थम् । "हलो यमाम्" इत्यस्य नित्यत्वे तु व्य-र्थमेव तत् । "नह्येकेनैकम्" इति न्यायेन भेदकपक्षस्यापीदमेव ज्ञापकमुक्तरीत्या । विशेषापेक्षत्वे "हलः"इ-त्यस्यैव तत्र स्यादत आह—सामान्येति । इदञ्च सूत्ररीत्या । अतस्तद्दोषवैवाश्रयमाह—तस्येति । ज्ञापकस्येत्यर्थः । तावतैव चारितार्थ्येन सामान्यापेक्षत्वे मानाभावादिति भावः । एवोक्त्या भाष्यमते तत्समस्या-पानेनास्यावश्यकतां ध्वनयति मूलकृत् । एतेनैतो व्यर्थ इति मन्दोक्तमपास्तम् ।

यत्तु खण्डनकृत् । 'देवदत्त'इत्यादावेकोत्यादिपूर्वस्वरूपमन्वे दर्शनादत्र व्याख्याता तथाकृतत्वात्तः न दोषः । किञ्च ज्ञापकमुपन्यस्येत्यनुक्तोपालम्भ. । 'श्रयोह." इत्यत्रस्तदनुवृत्त्या विकल्पेन य ल व इति का शिकादौ स्थितम् । तथाच भाष्यम् "अनुवर्तते" इत्यादि । "नाज्झलौ" इत्यत्र कैयटोऽपि लोपो वैत्या [illegible] तद्ग्रन्थात् । एवञ्च वैकल्पिकत्वे एव भाष्यकैयटसंवादो, न ज्ञापकत्वे, तदाकर्यं पर तद्विशिष्टमित्यन्य देवदिति । तन्न, इति काशिकादौ स्थितमित्युक्त्या तस्य स्वानिष्टत्वध्वननेन न्यूनत्वाभावस्यात् । अभिप्रेत्येति मूले पाठसत्त्वेनोपन्यस्येत्यनुक्तोपालम्भ इत्यस्यैव तथात्वाच्च । तद्भाष्यस्योभयविषयतया प्रवृत्तेश्च । तदेवद् ध्वनयन्नन्यथा त संयोज्य खण्डयति—यदि त्वित्यादि । सिद्धमिति । अण्ग्रहणादिति भाव । ज्ञापकमिति । इत्यभिप्रेत्य तत्र तदर्थं तत्परभाष्यमुपन्यस्त वैरित्युच्यत इत्यर्थः । सम्यगेवेति । मूले उक्तदोषाभावात् । एवञ्च मूलमप्युक्तमेवेति भावः । यथाकथञ्चिन्मूलाशयप्रदर्शनेन तदपि यात्वयमाह—परन्त्विति । प्राचाम् । प्रकाशकृताम् । तद्भाष्येति । अनुवर्तत इत्यादिभाष्यस्येत्यर्थः । "झरोझरि"

सरला

प्रवृत्तेरित्यादि विस्तर इत्यर्थः । अण्ग्रहणमिति । तद्धि सय्यन्तेत्यत्र "वा पदान्तस्य" इति परसवर्णे-ऽनुनासिकयकारस्य "अनचि च" इति द्वित्वार्थं यर्ग्रहणेन ग्रहणाय । लोपस्य नित्यत्वे हि तत्र द्वित्वे-

पत्येधत्यूठ्सु ( पा०सू०६।१।८९ )॥ अत्र एचीत्यनुवर्त्तते । तच्च एतेरेव विशेषणं नत्वेधतेः, अव्यभिचारात् । नाप्यूठः, असम्भवादिति प्राञ्चः । अत्र कैयटः-

---

शब्दरत्नम् ।

असम्भवादिति । न च 'आ अवतीति ओर्जसस्य और्जनौः' इत्यादावरेः ऊठ्या द्गुणे पराद्विवरेणोट्त्वात्सम्भवोऽस्ति । न च "वृद्धिरेचि" ( पा०सू०६।१।८८ ) इति सिद्धिः "ओमाङोश्च" ( पा०सू०६।१।९५ ) । इत्यनेन बाधात्, अनेन ■ सामर्थ्यात्तु बाध्यत इति वाच्यम्, तस्यानभिधानादित्याशयात् । किं च "ओमाङोः—" (पा०सू० ६।१।९५ ) इत्येतद्बाधकल्पनापेक्षया सामर्थ्येन लक्ष्यानुरोधेन च 'एचि' इत्यस्यासम्बन्ध

भैरवी ।

रत्नाकरोक्तिं खण्डयितुं तन्मतमनुवदन्नाह—नचेति । औरिति । "गोता णित्" इति सिद्धस्य रूपस्यायं लेख । प्रातिपदिकस्वरूपन्तु 'ओ' इति । गुणे इति । तत्र एच्परत्वाभावेन वृद्धेरप्राप्तेः । बाध्यते—"ओमाङोश्च" इति पररूपेण बाध्यत इति भावः । अनभिधानादिति । "एचि वृद्धिः" इतिसूत्रस्थकैयटोक्तिरत्र मानम् । अनभिधाने भाष्यसम्मत्यभावादाह—किञ्चेति । सामर्थ्येन-एचात्परस्य ऊठ्शेऽपि सम्बन्धेनैजाद्यावूठि वृद्धिरिति वाक्यार्थसामर्थ्येन । लक्ष्यानुरोधेनेति । ऊठ्शेऽप्येचोत्परस्य सम्बन्धेनैजाद्यावेवोठि वृद्धिस्तौ रारे येन नाप्राप्तिन्यायेन "ओमाङोश्च" इत्येतद्बाधेनाथव स्यान्न तु 'विश्वौह' इत्यादाविति शाब्दलक्ष्यसिद्ध्यनुरोधे

भावप्रकाशः ।

त्यत्रानुवृत्तौ मध्यपरत्वया "इष्टो यमाम्" इत्यत्रापि तत्वसिद्धिः । अत एव खण्डनपरात्मिनभाष्यसङ्गतिरनघाच न शाब्दखण्डने मूलतात्पर्यं किन्तु भाष्यसम्मतिलेशखण्डने । अत एव तदभिप्रेत्य स्वबन्धेनोक्तिस्य मुख्यं खण्डन तत्रेत्यादिनोपन्यस्तं मूलकृता । एवञ्च पक्षत्रयेऽपि व्याख्यातग्रन्थासङ्गतिरेवेति भावः ।

रत्नाकरोक्तिं खण्डयितुमनुवदति । नचेति । औरिति । पूर्वपक्षे "गोतो णित्" इति सिद्धरूपोल्लेख । प्रातिपदिकन्तु ओ इति; तदाह—अवेरिति । गुणे इति । एचीति विशेषणाद् वृद्धेरप्राप्तेरिति भावः । परादित्वेनोठ्त्वादिति । व्यपदेशिवद्भावनिमित्तेनेत्यर्थः । इत्थञ्चोठ्त्वं समुदायवृत्तोति भाव. । बाधादिति । पूर्वसूत्रापवादत्वेनाङ्गत्वादिति भाव. । सामर्थ्यादिति । एचीति विशेषणेनान्यत्र चरितार्थ्यादिति भावः । अनभिधानादिति । इद दुर्वचमिति शेषः । वृद्धिसूत्रस्थकैयटोक्तेरिति भावः । नन्वत्र मानाभाव. । न च वृद्धिसूत्रस्थभाष्य मानमिति वाच्यम् , तस्यान्याशयकत्वात् । अत एव तदाशयः कैयटेनाश्रित एव । स्पष्ट चेदमुद्योते । एव चासम्भवोऽसम्भवी । अत एवाशयान्तरयुक्तमत आह—किञ्चेति । एतेनागतिकगत्यनभिधानाश्रयणानौचित्यम् । तद्धावोऽपि चिन्त्यः, भाष्यादिकं तूत्तरपदार्थे चेति निषेधाभिप्रायम् । किञ्चेत्यादिग्रन्थस्तु असम्भवादिति व्याख्येयग्रन्थविरुद्धः । तस्माद्वृद्धिरित्यत्रोक्तप्रकारेण निर्वाह इति मन्दोक्तमपास्तम् । उक्तरीत्या तदनाश्रयेणोद्द्योतस्यापि युक्तत्वात्, उत्तरपदार्थे चेत्यस्यार्थज्ञानाच्च, व्याख्येयग्रन्थोपमर्दार्थमेव किञ्चेत्यादि प्रवृत्तेश्च । अत एव प्रक्षेपवैयर्थ्यांचेति दिक् । उक्तरीत्या सामर्थ्याभावादाह—लक्ष्येति । यथेचोठ् विश्वौह तदा येन नेति न्यायेनान्वेवोमाङोरिति बाधित्वा

सरला

पि लोपेन निवृत्तौ पकारद्वयस्यैव श्रवणमिति तदर्थमपग्रहणेनैव सिद्धेः ।

अनभिधानादिति । अत्रसूत्रे पत्येधत्यादिति योग विभज्य एचीत्यस्य तत्रैव विशेषणपरभाष्यमत्र मानम् । वस्तुतस्तु विश्वौह इत्यादौ तदर्थम् भगवता एचीति पत्येधत्योरेव विशेषणमित्युक्ततया चैन स्यानभिधाने न सन्मानमिति बोध्यम् ।

एधतेरपि विशेषणम् । मा भवान्प्रेदिधदित्यत्र व्यभिचारात् । यद्यपीदं कैयटपुस्तकेषु प्रायेण न दृश्यते, तथाऽपि क्वचिद् दृश्यत एव । न च "णौ चङि-" ( पा०सू०७।४।१ ) इति ह्रस्वे कृते नायमेधतिरिति वाच्यम् । एकदेशविकृतस्यानन्यत्वात् । न चैवमपि "अजादेर्द्वितीयस्य" ( पा०सू०६।१।२ ) इति धिशब्दस्थाने धिधिशब्दादेशे सति वत्ससोरिव प्रकृतिप्रत्ययविभागसम्मोह इति वाच्यम् । द्विःप्रयोगो द्विर्वचनं षाष्ठमिति षाष्ठभाष्ये सिद्धान्तितत्वात् । अन्यथैहैव णिलोपो न स्यात् । जिघांसतीत्यादौ

---

शब्दरत्नम् ।

कल्पनैवोचिता । ह्रस्वे कृते इति । वृद्धेः पूर्वमित्यादिः । वार्णपरिभाषयेति भावः । अनन्यत्वादिति । न च "अचः परस्मिन्" ( पा०सू०१।१।५७ ) इति स्थानिवत्त्वेनै-जादित्वं सुलभम्, पूर्वपरविधित्वात् । पूर्वस्यैव विधौ हि सः । मध्ये ऽपवादन्यायेनाऽऽद्-गुणं बाधित्वा वृद्धिरेव स्यात्, 'उपैधते' इत्यादौ तु परत्वात्पररूपमेव स्यादिति भावः । संमोह इति । एधतेरादेशाभावेन न स्थानिवत्त्वेन तत्त्वम् । न स्यादिति । न च "णेर-निटि" ( पा०सू०६।४।५१ ) इत्यस्य ण्यन्तस्याङ्गस्य लोप इत्यर्थः, स चालोऽन्त्यपरिभा-षेत्त्वो । नेत्यर्थः । भवत्यन्येति । 'ऊढेनो' इत्यादिः । वार्णेति । वाक्यसंस्कारपक्षे इदम् । मूले—एकदेशवि-कृतस्येति । एकदेशेन विकृतस्येत्यर्थः । अनन्यत्वादिति । स्थानिवद्भावेनेत्यादिः । तत्त्वत्र "एकदे-शविकृतमनन्यवत्" इति परिभाषायाः सद्भावः, अर्द्धाधिकविकारसत्त्वात् । एजादित्वन्तु न स्थानिवद्भावेन, अल्विधित्वादिति भावः । एधेत्यस्यैधत्यंशे सम्बन्धेऽपि स्थानिवद्भावेन 'मा-भवान्प्रेदिधत्' इत्यत्र वृद्धिवारणासम्भव इत्याशङ्कां वारयति—नचेत्यादिना । पररूपमेवेति । तथा चेष्टानिष्टव्यवस्थाया असिद्धिरिति भावः । ननु दृष्टान्ते प्रकृतिप्रत्ययसमुदायस्यादेशो दार्ष्टा-न्तिके तु न तथेति वैषम्यम् । किञ्च स्थानिवद्भावेनैधतित्वमपि वक्तुं शक्यमत आह—एधतेरि-ति । तत्त्वम्-एधतित्वम् । दृष्टान्ते प्रकृतिप्रत्ययसमुदायस्यादेशः, इह तु प्रकृत्यवयवधकारप्रत्य-

भावप्रकाशः ।

स्यादिति 'विश्वौहः' इत्यादि न स्यादिति "वाह ऊठ्" सूत्रभाष्याभिमतेष्टानिष्टलक्षणानुरोधेनेत्यर्थः । भव-त्यन्यानि । ऊढश्च इति भावः । अत्र एवेणीकारादाविति प्रकृतसूत्रस्थवार्त्तिकादिसङ्गतिस्तदाह— वोचि-तेति । वार्णेति । वाक्यसंस्कारपक्ष इति भावः । एधेति विशेषणेऽव्यवारणमित्याह— नचेति । अत्र मते तदभावे फलितमाह—मध्ये इति । भाष्यविशेषविरोधाङ्गीकार इति भावः । पररूपमेवेति । तथाचे-ष्टानिष्टव्यवस्था न स्याद्वार्त्तिकादिविरोधश्च स्यादिति भावः । ननु दृष्टान्ते प्रकृतिप्रत्ययसमूहादेशोऽत्र न तथेति तद्वैषम्यम् । किञ्च एकदेशेति लौकिकन्यायस्यार्धन्यूनाविकारेणाप्रासावपि स्थानिवत्त्वेनेष्टसिद्धिरत आह—एधतेरिति । तत्त्वम्, एधतित्वम् । तथाच सम्मोहमात्रेऽयं दृष्टान्त इति भावः । स्याद्धलन्ते-ति । तदधिकारस्थत्वादिति भावः । ननु प्रत्ययग्रहणपरिभाषया धोतिस्थानिन एवाण्यन्तस्यानङ्गतया च वचनदोषत्वम् । एकाच इत्युक्तेः केवलणिचाऽजादेर्द्वितीयस्येत्युक्तेः प्रकृतिप्रत्ययसमूहस्यादेशादोलंघ्या-

सरला ।

१—पूर्वस्यैव विधाविति । तेन मातुरित्यादौ "ऋत उत्" इति गुणस्य सवर्णदीर्घे न स्थानि-वत्त्वमिति शेखरे निरूपितम् । मूले—एजाद्योरितीति । एधत्यंशे एधेति विशेषणस्य फलं प्रेदिधत् इति कैयटोक्तम् । इणीकारादौ प्रतिषेध इतिवार्त्तिकस्य भाष्यकृता एचोत्यनुवर्त्य अपेत इत्यादौ वृद्धिवारणेन प्रत्याख्याततया वार्त्तिकसत्त्वे प्रेदिधत् इत्यत्र वृद्धेः प्राप्त्या एधेत्यस्य सम्बन्धेन तत्प्रत्याख्याने वृद्धेरप्रा-प्त्या फलभेदेनानभिधानादेवेति एधत्यंशे सम्भवमात्रेणोपरञ्जकतया विशेषणमिति । वस्तुतस्तु यथोत्तरं मुनीनां प्रामाण्यमितिपरिभाषया इणीकारादौ इतिवार्त्तिके इणीति पदे रप्युपलक्षणम् । वार्त्तिकानुसारेण

सनः सकारेण विशिष्टस्य द्वित्वे कृते कुत्वं च न स्यात् । न चान्तरङ्गत्वात् प्रथमं "चङि" (पा०सू०६।१।११) इति द्वित्वे कृते ह्रस्वो न भवत्येवेति वाच्यम् । ओणे-ऋदित्करणेन बहिरङ्गस्यापि "णौ चङि" ( पा०सू०७।४।१ ) इति ह्रस्वस्य प्रथमं प्रवृत्तिरिति ज्ञापितत्वात् ।

---

शब्दरत्नम् ।

यथाऽन्त्यस्य, एवं च प्रकृते न दोषः । 'सर्वे सर्वपदादेशा" इति न्यायेनेधीत्यस्यैवाधिष्ठि-त्यादेशस्येव स्थानिनो ण्यन्ततया आदेशेऽपि स्थानिवद्भावेन ण्यन्तत्वस्य सुलभत्वादि-ति वाच्यम् । अलोऽन्त्यपरिभाषया निर्दिश्यमानपरिभाषया च "णेरनिटि" ( पा०सू० ६।४।५१) इत्यस्य ण्यन्तस्याङ्गस्यान्त्यो यो निर्दिश्यमानो णिस्तस्य लोप इत्यर्थेन दोषा-त् । अन्ते णेरसत्त्वात् । सूत्रं तु आद्यादित्याद्यौ चरितार्थमिति भावः । कुत्वं च न स्या-दिति । इत्यत्रचवहकाराभावात् । सन्सम्बन्धिसकारवैशिष्ट्याभावे तु स्थानिवत्त्वेन कुत्वं स्यादपीति भावः । अन्तरङ्गत्वादिति । चङ्परणिनिमित्तह्रस्वापेक्षया चङ्मात्रनिमि-त्तत्वेनाल्पपदार्थापेक्षत्वादित्यर्थः । भाष्ये तु नित्यत्वमात्रमेव द्वित्वस्योक्तम् । ज्ञापितत्वा-

भैरवी ।

यद्घटितसमुदायस्यादेश इति वैषम्यं यद्यप्यस्ति तथापि सम्मोहे दृष्टान्तोऽयम् । सर्वे सर्वपदादे-शा इतीति । पधीत्यस्य समुदायस्यार्थवत्त्वेनास्ति 'सर्वे' इति न्यायसञ्चार । श्रौतस्तु धीत्य-स्यैव, "अजादेर्द्वितीयस्य" इत्युक्तेः । परिभाषया चेति । द्वयोः परिभाषयोर्बाध्यबाधकभावाभा वादेकवाक्यतयेत्थं व्याख्यातम् । "पादस्य लोपः" इत्यादौ यथा । दोषादिति । णिलोपस्य प्रा-प्त्यभावरूपदोषात् । असत्त्वादिति । सम्मोहेन णिवृद्धेरसत्त्वादित्यर्थः । सूत्रन्तु आद्याविति । अ-त्र णिति प्रत्यये परतो वृद्धेर्विधानेन णिवृद्धरविघातात्भवति णिवृद्धिरिति भावः । मूले—सनः सकारेणेति । "सन्यङोः" इत्यस्य षष्ठ्यन्ततया सकारविशिष्टस्य 'नदभार्यावद्वयशब्दानि भवन्ति' इति न्यायेनैकाच्पदेन ग्रहणादिति भावः । स्यादपीति । अपिर्मूलोक्ताभावस्य समुच्चायकः । तथा च मूलोक्तम्नुपपन्नदूषणमिति ध्वनितम् । शङ्काभिप्रेतमन्तरङ्गत्वमुपपादयति—चङ्परेति । भाष्ये इति । एतेन नित्यत्वेनैव निर्वाहेऽन्तरङ्गपर्यन्तानुसरणं व्यर्थमिति भावः । मूलोक्तम्बो-

भावप्रकाशः ।

धात आह—सर्वे इति । एव चार्थवत्त्वेति सिद्धान्तोऽप्यबाधितो भवतीति भावः । ण्यन्तस्येति । अङ्गत्वस्येत्यपि बोध्यम् । "पूर्वोऽभ्यासः" इत्यादिवैयर्थ्यापत्त्या प्रक्रियादशायामुक्तन्यायानाश्रयणमिति तु न, अत्र पक्षे तेषामप्यर्थान्तरकल्पनात् । श्रौते एव स्थान्यादेशभावे तत्प्रवृत्तिर्नानुमानिके इत्यपि न, तत्रा देशपदानुपपत्तेः तद्ध्वनयन्नाह—अलोन्त्येति । तत्राविरोधेन द्वयोर्बाध्यबाधकभावाभावादुपस्थितेः । तासस्त्योरित्यादौ तु न दोषः,सस्येत्यतः सोनिवास इत्यनुवृत्ते एवञ्च निर्दिश्यमानस्येति विषयेऽलोन्त्यस्येति प्रवृत्तावपि तद्विषये "सम: सुटि" इत्यादौ न तत्प्रवृत्तिः, तस्य वैयर्थ्यापत्तेः । एवञ्च तदन्तविधिर्यदागमा इत्युभयविषयस्तद्विषय स्पष्टं चेदं परिभाषेन्दुशेखर इति भावः । 'सनः' इत्यादि कृते हायन्तोक्तिस्वारस्य-माह—सनिति । निजौ चत्वार एकाच इति भाष्योक्तेरिति भावः । स्यादपीति । अपिर्मूलोक्ताभावसमु-च्चायकः । तथाच पाक्षिकोऽयं दोष इति प्रागुक्तमेव मुख्य दूषणम् नत्विदमिति मूले निश्चः पाठः सूचितोऽ-नेन । अत एव प्रतीकं तथा धृतमिति भावः । नाल्पेति । अल्पपदार्थनिमित्तकत्वादित्यर्थः । भाष्ये-रिवति । तुना एवेन च सूचितम्—तावतैव निर्वाहे तदनुरोधमुत्सृज्यान्तरङ्गत्वपर्यन्तधावन प्रकाशानु

सरला ।

पधायशे पधीत्युपरञ्जकमिति कल्पनापेक्षया भाष्यानुसारेण वार्तिके उपलक्षणतया व्याख्यानस्यैव ज्याय-

। — इति न ।

अत्र माधव -मा भवान् प्रेदिधदित्यत्र नातिप्रसङ्ग । ण्यन्तस्य शब्दान्तरत्वा द्वेधतिग्रहणेनाग्रहणात् । अत एव हि "न भाभूपूकमिगमि-" ( पा०सू०८।४।३४ ) इत्यत्र "ण्यन्ताना च भादानामुपसख्यानम्" इत्युक्तम् । तत्रैव शब्दान्तरत्वादप्रा प्राप्त्युपसंख्यानमिति कैयटन्यासकारहरदत्तादिभि सर्वैरवोक्तम् । किं च ण्याधकस्या पि ग्रहणे "उपसर्गात्सुनोति-"( पा०सू० ८।३।६५ ) इत्यत्राभिषावयतात्युदाहृत्य ण्यन्तेनाभियोगात्सुनोति प्रत्यनुपसर्गत्वात्कथ षत्वमित्याशङ्क्याभे प्रकृ यथविशेषक त्वेन समाधान भाष्यकाराद्युक्तमसङ्गत स्यात् । न च "हेरचडि" ( पा०सू०७।३। ५६ ) इति लिङ्गात् "प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्" इति भ्रमितव्यम् । ज्ञाप कस्य कुत्वमात्रविषयकत्वात् । तथा च वार्तिकम्-"हेग्रहि प्रतिषेधानर्थक्यमङ्गान्य त्वात् । ज्ञापक तु चङ्यन्यत्र ण्यन्तेऽपि कुत्वभावस्य"इति । तस्माद्युक्तिविरोधा द्भाष्यवार्तिकवृत्तिन्यासादिग्रन्थैः पूर्वापरग्रन्थेन च विरोधादुपेक्ष्योऽय कैयट इति ।

अत्रेद वक्तव्यम् । अस्तु विशिष्टस्य शब्दान्तरत्वं तावता ऽपि प्रकृतिभागस्य धूपत्व केनापगतमित्यवधार्यताम् । न ह्युपैधत इ यादौ तिङन्तस्यैधूपता नास्तीति प्रकृ त्यंशे सा हीयते । तथा च "उपसर्गात्सुनोति-" इति सूत्र वार्तिक 'सिद्ध त्ववय वानन्यत्वात्" इति । यत्त्वभिषावयतीत्यत्रत्यभाष्यविरोधाद्भावन, तद्विपरीतम् । यत प्रकृत सुनोतिरूपानपायात् कैयटमते सिद्धा यथाकल्पव्यवस्था । त्वन्मते तु रूपा न्तरत्वेन ण्यधिकस्याग्रहणादसङ्गतैव प्रागुक्तव्यवस्था स्यात् । को ह्येधयतिसावयत्यो

शब्दरत्नम् ।

दिति । इद च " णौ चङि " ( पा० सू० ७।४।१ ) इति सूत्रे भाष्ये स्पष्टम् ।

असङ्गत स्यादिति । सुनोतिग्रहणेन सावयतेरपि ग्रहणेन शङ्काया एवाभावादिति भाव । अवयवान यत्वादिति । ण्य तावयवस्य सुनोते सुनोतिभिन्नत्वाभावादिति तदर्थ । सुनोतिरूपानपायादिति । सुनोतित्वानपायादित्यथ । असङ्गतैवेति । ण्यन्तेनाभियोगादिति शङ्का प्रकृत्यथविशेषकत्वेन समाधानरूपा च व्यवस्थाऽसङ्गतैव स्यात् । त्वदुक्तरीत्या ण्यधिके षत्वाप्रासरित्यथ । तदेवाह—को हीति ।

भैरवी ।

कथा सप्रमाणत्वसूचनायाह-एवमिति । इदम्-बहिरङ्गस्यापि पूर्वप्रवृत्तिरित्येतत् ।

शङ्काया एवेति । शङ्काया अभाव समाधानमप्यसङ्गतमित्येवकारेण ध्वनितम् । सुनोति रूपत्यत्र 'रूपशब्दोऽध र इति 'स्व रूपम' इत्यत्र यद्यपि प्रतिपादित तथापि षष्ठ्यथा न्वयायाह—सुनोतित्वेति । त्वदुक्तरीत्या—ण्य तस्य शब्दान्तरत्वमित्युक्तरीत्या । मूले—असङ्गत एवेति । अत्र एवकारेण प्रकृतिभागस्य शब्दान्तरत्वे उपैधयते' 'प्रादिधिषत इत्यादौ वृद्ध्य

भावप्रकाश

नुपेन मूलकृतो न्यथ तत्र तदुक्तिबीज तु प्रथमोपस्थितत्वमिति । मूलोक्त स्वोक्तश्च समूलत्व ध्वनयति—इदमिति ।

शङ्काया एवेति । तथाचोभयमसङ्गतमिति भाव । अवयवा यत्वाभावादि वचनिरासायाह—ण्यन्तेति । षष्ठ्यर्था वयमाह—सुनोतीति । रूपशब्दो धर्मपर इति भाव । शङ्केति । तदु पेत्यथ । त्वदुक्तेति । ण्यन्तस्य शब्दान्तरत्वरूपोक्त रित्येत्यथ । एवञ्च तत्र कथमप्यप्रवृत्त्योभयासङ्गतिरिति भाव । मूले असङ्गत एव त । अतएव 'उपैधयते प्रैदिधिषते इत्यादौ वृद्धि, प्रकृतिभागस्यैधरूप त्वात् । किञ्चैधयतसवेऽन्वीरयथ

विशेषः—यदेधतेर्ण्यधिकस्याग्रहणं सुनोतेस्तु ग्रहणमिति । यदपि ण्यन्तभादीनामुपसंख्यानमुपन्यस्तं तदपि नास्माकं प्रतिकूलम्, विशिष्टस्य शब्दान्तरत्वेन प्रकृत्यंशस्य तु णिचा व्यवधानेनोपसंख्यानस्यावश्यकत्वात् । अत एव न तत्रत्यन्यासादिभिः स्वोक्त्या वा विरोधः । प्रत्युत तत्रैव विरोधः, पाठे भाष्यवार्तिकयोः "एत्येधत्योः—" ( पा० सू० ६।१।८९ ) इति योगं विभज्य "एचि" इति विशेषितत्वात् । तस्मादिह वृत्तिग्रन्थो माधवग्रन्थश्चासङ्गत एवेत्यभिप्रेत्य व्याचष्टे—एजाद्योरिति ॥

अक्षौहिणीति । ऊहोऽस्त्यस्य ऊहिनी अक्षाणामूहिनीति विग्रहः । परिमाणविशेषविशिष्टा सेना अक्षौहिणी । "पूर्वपदात्सञ्ज्ञायाम्" ( पा० सू० ८।४।३ ) इति णत्वम् । यत्तु प्राचा विगृहीतमक्षाणामूहः समूहः साऽस्त्यस्या इति । तदपि ऊहिनीशब्देन षष्ठीतत्पुरुष इत्येतत्परतयैव कथंचिन्नेयम् । ऊहशब्देन समासे तत्र इनौ-

---

शब्दरत्नम् ।

विग्रह इति । समस्यमानपदस्वरूपबोधक इत्यर्थः । तत इनाविति । "अतो [illegible]
[illegible] ।

भावः स्यादिति ध्वनितम् । वस्तुतस्तु "इणोकारादौ प्रतिषेधः" इति वार्तिकविरोधात्प्रेदिधत्रित्यस्यानभिधानमावश्यकमिति तदुपादानेन सर्वोऽपि विचारोऽत्र निष्फल एव । एत्येधत्यादयरे एचीति भाष्यकारीयव्याख्यानन्तूपरञ्जकतया एधत्यंशेऽप्येचीत्यस्य सम्बन्ध इत्यभिप्रायेणेत्याहुः । अपरे तु वार्तिकस्थमिण्ग्रहणमुपलक्षणम् । अत एव भाष्यकृताऽऽत्येधत्योरिति योगं विभज्य एत्योरेचीति विशेषणं कृतमिति वदन्ति ॥

नन्वन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते इति न्यायविरोधादिति विग्रह इत्यसङ्गतमत आह—समस्यमानेति । 'वाप्यामश्वो वाप्यश्वः' इत्यादौ यथा । स्पष्टार्थमाह अत इनीति । नन्व-सिद्धपरिभाषया जातस्य तत्कालप्राप्तिकस्य चासिद्धत्वप्रतिपादनेनान्तरङ्गेणेत्ययुक्तमत आह—

भावप्रकाशः ।

त्यावश्यकस्य प्रत्ययलक्षणसूत्रभाष्यसम्मतत्वेनादोषात्त्वेन वृत्तिमाधवग्रन्थखण्डकैः 'उपेधयते' इत्यत्र दोषो नोद्भावितः, अस्फुटित्वादिति जगन्नाथोक्त,—प्रकृतिभागस्यैवमूपत्वेऽप्यनर्थकत्वेनानतिप्रसङ्गान्मूलं चिन्त्यम् भाष्याशयस्तु तन्मध्यपतितन्यायेन धात्ववधिकस्यार्थवत्तया 'एधति' ग्रहणेन ग्रहणादतिप्रसङ्ग इति रत्नाकरोक्तं चापास्तम्, तदुक्तेः तस्यानित्यत्वाच्च, एत्यादीनामुपलक्षणत्वाच्च, विशेषणतया ग्रहणाच्च, भाष्यादियोजकत्वद्वयोऽपि मूलस्य याज्ञयितु शक्यत्वाच्च । वर्णस्य विशेष्यत्वेन ग्रहणे तदप्रवृत्तेश्च । वस्तुतस्तु इणोकारादाविति वार्तिके एधत्यनुपादानात्तद्वता तदुपादानाकरणाच्च 'प्रेदिधत्'इत्यादेरनभिधानम् । एत्येधत्योरेचीति विशेषणमिति भाष्य तु एधत्यंशे सम्भवमात्रेणोपरञ्जकतया विशेषणरोचकार्वेमात्रपरम् । परममूलमपि तत्रैव । क्लिष्टिनैयटस्तु बहुपुस्तकेष्वनुपलम्भादप्रामाणिकः । एतच्छोकरीत्या माधवग्रन्थासङ्गतावपि वृत्तिग्रन्थः सम्यगेव । एतदरुचिबोधकमेव मूले इत्यभिप्रेत्येति टीकायामुक्तिरेयुक्तमितिबोध्यम् ।

यत्तु 'अक्षाणामूहिनी' इति विग्रह उक्तो नव्यैः । तन्न, 'संज्ञायामिति णत्वम्'इति स्वोक्तिविरोधादिति रत्नाकरस्तत्खण्डयति—समस्यमानपदेति । ननु वृत्त्यर्थावबोधकत्वेन तदर्थं तत्तत्प्रतीतेः । व्युत्पादनं स्वसनाऽप्यवयवार्थेन रथन्तरादिवत् । अत एव 'वाप्यामश्वो वाप्यश्वः' "संज्ञायाम्" इति समास इत्यादि "ईदूतौ च"इतिसूत्रस्थभाष्यकैयटादिग्रन्थसङ्गतिरिति भावः । प्रकाशकृता दूषित प्रसादग्रन्थं योजयन्नुभयमनुवदति मूले—यत्तु प्राचेत्यादि । नन्वन्तरङ्गपरिभाषया जातस्य तत्कालप्राप्तस्य चासिद्धत्वेऽप्यत्रानयास्त्वादन्तरङ्गेणेत्ययुक्तोऽनुवादः । न च तत्कालप्राप्तेनेति तदर्थो न तु परिभाषाया विषयः । अत एवाकृतेस्यस्यासङ्गार इति वाच्यम् । तथा व्यवहारस्यात्र सर्वत्र परिभाषामूलकत्वस्यैव "अचः पर"इति सूत्रभाष्ये

तु वृद्धिर्न स्यात्, अन्तरङ्गेण गुणेन बाधात् । अपवादभूताया अपि वृद्धेरूहिनी-शब्देन विग्रहे चरितार्थत्वात् । यथोक्तं प्राक्—"इण्-ङि-शीनामाद्गुणः सवर्णदीर्घत्वात्" इति ॥

स्वादीरेरिणोः । ईरेरिण्योरिति क्वचित्कोऽपपाठः । स्वैरीति णिन्यन्तस्याभि-

---

शब्दरत्नम् ।

इनिठनौ" ( पा०सू०५।२।११५ ) इति विहित इत्यर्थः । अन्तरङ्गेणेति । प्रथमप्रवृत्ति-कैनेत्यर्थः । समर्थग्रहणेन कृतसन्धिकार्यादेव तद्धितोत्पत्त्या तद्विषयेऽकृतव्यूहपरिभाषाया अप्रवृत्तेस्तस्या असत्त्वाच्चेति भावः । चरितार्थत्वादिति । तद्घटकोहिनीशब्दस्य कल्पिता नात्यर्थवत्त्वाभावेन तत्रैतत्सूत्राप्रवृत्तेश्चेत्यपि बोध्यम् ॥

भरवी ।

प्रथमेति । समासे संहिताया नित्यत्वेन इन्प्रत्ययोत्पत्तिपर्यन्तं विलम्बासम्भवादिति भावः । नन्वकृतव्यूहपरिभाषया प्रथमतो गुणो न भविष्यतीत्यत आह—समर्थग्रहणेनेति । इदमकृत-व्यूहपरिभाषायाः सत्त्ववादिमतेन । वस्तुतः सा नास्तीत्याशयेनाह—तस्या इति । तद्घटकेति । प्राचोपपादितो यः समुदायस्तद्घटकेत्यर्थः । कल्पितार्थेनापीति । समासे समुदायस्यैवार्थव-त्त्वम्, अवयवस्य कल्पितं तत्त्वम्, तच्चात्र नास्तीत्यर्थः । इन्प्रत्ययस्य समासादुत्पत्ते-रिति भावः । एतत्सूत्रेति । नच "अक्षादूहिन्याम्" इति वार्तिकं न तु सूत्रमित्येतत्सूत्रमित्य-सङ्गतमिति वाच्यम्, तद्धितप्रकरणारम्भे शब्दरत्ने एवोपपादयिष्यमाणत्वात् ॥

भावप्रकाशः ।

अनित्यत्वात्, बाधादित्यादिग्रन्थासङ्गतेश्चात आह—प्रथमेति । पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वेन लोकन्यायसिद्धेनेत्यर्थः । इदञ्च युगपत्प्राप्तौ पूर्वप्रवृत्तिमात्रनियामकमेव । बहिरङ्गासिद्धत्वमपि पूर्वं तदप्रवृत्तिरूपं यथा 'पट्व्या' इत्यादौ पदस्य विभज्यान्वाख्याने । क्रमेणान्वाख्याने [illegible] पूर्वप्रवृत्तिकत्वमेवान्तर-ङ्गत्वं बहिरङ्गासिद्धत्वमपि निमित्ताभावादप्राप्तिरूपम् । एवमत्रापि । बाधादित्यस्याप्ययमेवार्थः । तत्रान्तर-ङ्गत्वं तु भाविनोऽबहिरङ्गनिरूपितमक्षतम् । "नाजानन्तर्ये" इति तु न, उक्तोत्तरत्वादिति भावः । नन्वेव-मपि "अकृत" इति दुर्वारा, निमित्तविनाशसम्भावनाऽपि हि तत्प्रवृत्तिनिमित्तम् । अत एव 'केन:' इति निर्देशेन तस्या अनित्यत्वं तत्तुल्यकनिर्देशसामर्थ्यं न भवन् "अचः पर" इति सूत्रस्थकौस्तुभो गोमत्यिया दिश्योपपद्यते । अन्तरङ्गानपेक्षत्याधस्या एव प्रपञ्चः । तज्ज्ञापक वाक्या एवेत्यत आह—समर्थेति । इदं च मूलरीत्या । तद्विषये, तद्धितविषये । सिद्धान्तरीत्या आह—तस्या इति । ननु "यणभजनिष्य" इति न्यायेन वृद्धिरेव स्यादत आह—मूले—अपवादेति । चरितार्थत्वाद्वितीति । तथाचापवादो यद्यन्य नेति न्यायस्य विषयो, [illegible] तत्त्व । अत एव यथोक्तमित्यादिना दृष्टान्तोक्तिः । एवञ्च विधानसामर्थ्याद् गुणबाधकत्वं नेति भावः । ननु युगपदन्वाख्याने विनिगमनाविरहेण वैपरीत्यं कुतो नेत्यत आह—त-दिति । यद्वा सामर्थ्योत्तत्र प्रकृतिमभ्युपेत्य मूलोक्तं दूषणम् । वस्तुतः सैव नेत्याह—तद्धिति । सम स्तप्रकृतिकेऽन्तर्घटकेत्यर्थः । इनो विशिष्टप्रकृतिकत्वेन तन्मात्राप्रकृतिकत्वात् । अपिर्वास्तवार्थाभावसमु-च्चायकः । तत्रैवदिति । प्राचोक्तप्रक्रियाके तत्र लक्ष्ये "अक्षादूहि" इति वार्तिकाप्रवृत्तेरित्यर्थः । तथाच तत्र प्रक्रियायां तत्र वृद्धिर्नैव स्यादिति भावः । 'उपजनिष्यमाण इति न्यायसञ्चारे आह—तदघटकेति' इति

सरला ।

मूले—उक्तं प्रागिति । अयञ्च इन्द्रम्, ग्रामे इह, सर्वं इत्थम्, अत्रान्तरङ्गेण गुणेन सवर्णदीर्घो बाध्यत इति । एतत्सूत्रेति । कत्त्वकथादिसूत्रस्थे विधाल्लक्षणकल्पसूत्रान्तादक्त्यादेरिकक् स्मृतः इति वार्तिके 'वार्तिकसूत्रिकः' इति भाष्योदाहरणात् 'सूत्राच्चकोपधात्" इतिसूत्रभाष्ये "संख्याप्रकृतेरिति वक्तव्यम्" इत्यस्य 'माहावार्तिकः' इति प्रत्युदाहरणात् 'स्वरितो वाऽनुदात्तेऽपदादौ" इतिसूत्रभाष्ये

यां वृद्धचभावप्रसङ्गात् । स्वैरिणीत्यत्र तु ङीपः प्राग्भागमादाय वृद्धिर्बोध्या । यत्तु व्याचख्युः—लिङ्गविशिष्टपरिभाषयेति, तन्निष्फलम् ॥

प्रादूहोढोढ्येषैष्येषु । अत्रोहशब्दः कैश्चित्प्रक्षिप्तो भाष्यादौ तु न दृश्यत इति प्राञ्चः । इदानीन्तनपुस्तकेषु तु भाष्यवार्तिकयोरूढशब्दो दृश्यत एव । नानर्थकस्येति । उपस्थितस्यार्थस्य शब्दं प्रति विशेषणत्वसम्भवे त्यागायोगादिति भावः । सीरदेवस्त्वाह-"भ्रस्ज-" ( पा० सू० ८।२।३६ ) इतिसूत्रे राजेः पृथग् भ्राजिग्रहणमिह ज्ञापकमिति । नन्वेतदयुक्तम् , फणादिना राजिना साहचर्यात् तथाभूतस्यैव पत्वार्थतया भ्राजिग्रहणस्योपक्षीणत्वादिति चेत् ? 'विभ्राट्' 'विभ्राक्' इति रूपद्वय हि साध्यं, तच्च भ्रस्जादिसूत्रे 'राज्' इति पठित्वाऽपि सुसाधम् । एकस्य भ्राजतेर्ऋकारस्य प्रागपि दातु शक्यत्वात्-अभ्राज इति, "भ्राजभास-" ( पा० सू० ७।४।३ ) इति विकल्पस्य वाचनिकतया ऋकारस्य आत्मनेपदमात्रफलकतया

शब्दरत्नम् ।

ज्ञापकमितीति । भ्राजौ राजेरपि सत्वेन राजिग्रहणेनैव सिद्धेस्तद् व्यर्थं सज्ज्ञापकमिति भावः । तथाभूतस्यैवेति । फणादेरेवेत्यर्थः । राज् इति पठित्वेति । न चैवमनुबन्धनिर्देशाभावाद्राराष्टीत्यादौ यङ्लुकि षत्वं न स्यादिति वाच्यम् , यङ्लुकश्छान्द

भैरवी ।

भ्राजौ राजेरपीति । अत्र अपिशब्दो भ्राजावित्यस्यानन्तरं द्रष्टव्यः । परोक्तं दूषणमुद्धर्तुमाह—नन्वेवमिति । छान्दसत्वादिति । पुनन "श्तिपाशपा" इति परिभाषासत्त्वे छन्दसि सर्ववि-

भावप्रकाशः ।

व्याख्यानमयुक्तम् । अपवादवैयर्थ्यो एव तत्प्रवृत्तेः । यथा वधकीत्यादौ । कथादिभिरेव नेति तत्प्रवृत्तिरेवेत्यपि न, तत्र व मानाभावात् ।

मूले-निष्फलमिति । इत्येषोऽस्ति स्वैरिणः स्वैरेणान स्वैरवहविचारादौ वृद्धिरिष्टैव । अतएव 'दमयोदय ' कम्बलवसनार्ण'इत्यादि च सङ्गच्छते । एतेनोक्तयागेभ्यः वृद्धये उत्तरपदपारिरेणोरित्यर्थं समासग्रहणाभावेऽपि बहुव्रतसमासे एव वृद्धेरिष्टत्वात्स्वीकार्यं, समर्थपरिभाषोपस्थानेनानन्विवार्थकत्वादुक्तारेऽपि 'स्वैरवनै'इत्यादिदोषानुद्धारादिति प्रकाशाशयेन मूलं चिन्त्यमिति जगन्नाथरत्नाकरोक्तमपास्तम्, तत्र तस्या इष्टत्वात् । सिद्धान्तदीपिका तथा तस्याप्युद्धाराच्च । साक्षात्स्वरूपेण पुन-प्रत्येन बोद्धव्यत्वाभावात्प्रवृत्तेश्च । उत्तरपदत्वे मानाभावाच्चेति दिक् । एतेन समर्थपरिभाषोत्तरपदाक्षेपाभावेन विधिर्थकत्वात्परिभाषा निष्फलेति मूलादि चिन्त्यम् । अन्यथा 'प्रोढवती इत्यादावनिर्वाहः । अङ्कस्यार्थामगतिश्चेति "प्रादूहोढ." इत्यत्र वहुक्तमप्यपास्तम्, उक्तयुक्तेः, प्रकाशानुयायित्वाच्च मूलादेः, प्रक्रियादशायां जहत्स्वार्थानङ्गीकारस्योक्तत्वाच्च । गौणमुख्यन्यायेनार्थवत्परिभाषामूलकेन सज्ञामूलैरादिशब्दे तु वृद्धिर्नेति भावः ।

मूले-प्राञ्च -प्रकाशादयः । भ्राजौ राजेरपीति । अपिः पूर्वान्वयी । यद्वा, यथाश्रुत एव भ्राजिसमुच्चायकः । व्यपदेशिवद्भावस्तूभयत्रापि तुल्यः । राजरपीत्यापपाठः, धातुनिर्देशे इको विधानादन्तर्गतस्य चापानुवादः । रत्नाकरानुदित खण्डनकृदुक्तदोषमुद्धर्तुमाह—नन्वेवमिति । तथापाठे इत्यर्थः । सि-

सरला ।

नवेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ते" इति भाष्याच्च वार्तिकेऽपि सूत्रव्यवहारदर्शनेन "अक्षाद्‌हिन्याम्" इति वार्तिकस्य सूत्रपदेन ग्रहेऽपि नासङ्गतिः । स्पष्टं चेदं शब्दरत्ने तद्धितप्रकरणे ।

प्रवत्सतरेति । अत्र कालापानुसारिणो वत्सरशब्दमपि पठित्वा वत्सरे देय-मृणं वत्सरार्णमित्युदाहरन्ति, अपरे तु वत्सशब्दमपि पठन्ति, वत्सत्वं भाष्यादि-विरुद्धम् ॥

अन्तादिवच्च ( पा० सू० ६।१।८६ ) इहैकः पूर्वपरयोरित्यनुवर्तते यथासंख्यं चेत्यभिप्रेत्याह-पूर्वस्यान्तवदिति । स्थानिवत्सूत्रेणैव गतार्थमिदं सूत्रम् । न चा-

---

शब्दरत्नम् ।

वत्वम् । किञ्च भ्राजन्तर्गतराजेर्न ऋकारानुबन्धत्वं तस्य समुदायानुबन्धत्वादिति । भाष्यादिविरुद्धमिति । तदनुक्तत्वादिति भावः ॥

गतार्थमिदमिति । पूर्वपरयोरिति द्विवचननिर्देशेनोभयोरपि प्रत्येकं स्थानित्वा-दिति भावः । एवं च 'प्रार्च्छति' इत्यादौ विसर्गवारणाय ज्ञापकाश्रयणमपि न कार्यं, यतस्तत्र स्थानिवत्वेन रेफान्ते पदत्वं दुर्लभं, तस्य तत्स्थानिधर्मत्वाभावात् । आनुमा-

भैरवी ।

भ्राजन्तर्गतराजेर्धातुत्वात्तस्य ग्रहणासम्भवादिति भावः । न ऋकारानुबन्धत्वमिति । तेन राज्-ग्रहणेन तद्ग्रहणासम्भव इति शेषः । यत्र भाष्यकारपठितवचनविरुद्धार्थस्य प्रसक्तिस्तत्रैव भाष्यविरुद्धमिति व्यवहारस्तथा त्वत्र नास्तीत्याशयेनाह—तदनुक्तेति ॥

ननु "आद्गुणः" इत्यादौ स्थानषष्ठ्यनिर्देशात्कथमुक्तार्थतेत्यत आह—पूर्वपरयोरिति । अपिशब्दः प्रत्येकपदोत्तरं योजनीयः । समुदायस्यैव स्थानित्वाभिमतत्वे समाहारद्वन्द्वेनैव निर्दिशेदिति भावः । अत एव 'कृष्णर्द्धिः' इत्यादौ रपरत्वसिद्धिः । उभयोः—पूर्वपरयोः । इति भाव इति । मूलकारस्येति शेषः । एवञ्च—स्थानिवद्भावाश्रयणे च । ज्ञापकाश्रयणमिति । "उभयथर्क्षु" इति निर्देशस्य ज्ञापकत्वाश्रयणम्प्रकाशकारादिरीत्या कार्यमित्यर्थः । तत्स्थानि-धर्मत्वाभावात्—एकादेशस्य स्थानिधर्मत्वाभावात् । समुदायस्य प्रत्येकञ्च स्थानित्वं, नहि तत्र पद-त्वमस्तीति भावः । नन्वानुमानिकवचनकल्पनया भविष्यतीत्यत आह—आनुमानिकेति ।

भावप्रकाशः ।

इत्याद्यसाधुरेव । तेषां मतिभ्रमे तन्मात्रात्रे शब्दनित्यत्वं नेति भावः । राजेर्न ऋकारेत्ति । बहुव्रीहिरयम् । अत्रे तत्पुरुषः । तस्य, ऋकारस्य । भाष्यादीति । आदिना प्रकाशादीनां ग्रहणम् ।

ननु "आद्गुण"इत्यादौ स्थानषष्ठ्यनिर्देशात्कथं गतार्थत्वम् । किञ्च कथञ्चित्समुदायनिष्ठधर्मस्य तेन लाभेऽप्यवयवधर्मलाभार्थमावश्यकमिदम् । अत आह—पूर्वेति । अपि प्रत्येकपदोत्तरं योज्यः । स च समुदायसमुच्चायकः । प्रत्येकमिति । अन्यथा समाहारद्वन्द्वेनैव वदेत् । अत एव 'कृष्णर्द्धिः'इत्यादौ रपरत्वादिसिद्धिरिति भावः । इति भाव इति । मूलस्येति भावः । एतत्सूत्रविचारं च दिगर्थतयाऽपि सूत्र-कर्तृमुखादौ तदुपपादयति—एवञ्चेत्यादिनोप्यमित्यन्तेन । एवञ्च, तेन गतार्थत्वे च । आश्रयणमपी-ति । प्रकाशादिकृतमित्यर्थः । अपिः सूत्रसमुच्चये । एवञ्चापरं लाघवमिति भावः । तत्स्थानिधर्मत्वा-

सरला ।

येन स्थानिवत्वेन वा भ्राजग्रहणेन 'विभ्राट्' इत्यत्र पदत्वार्थतया भ्राजिग्रहणस्य सार्थक्यात् । समुदा-यानुबन्धत्वादिति । यदुपदेशप्रयुक्ता यस्येत्संज्ञा तदुपकारकत्वं तस्येत्यन्यत्रोक्तेः ।

तत्स्थानिधर्मत्वाभावादिति । पदत्वस्य प्र त्ययेऽवधित्वस्यावधारणमात्रवृत्तित्वाभावादित्यर्थः । आनुमानिकेति । ओत्वस्थानिघटितार्थवत्समुदायस्य स्थाने ओत्वादेशघटितार्थवत्समुदाय आदेशो भवती-ति आनुमानिकस्थान्यादेशभावस्य शब्दानित्यत्ववारणाय कृतया कल्पनयेति तदर्थः । दुर्लभत्वादिति । चिन्त्यमिदम् , ओत्वस्थानिघटितार्थवत्समुदायस्य स्थाने ओत्वादेशघटितघटितार्थवत्समुदायादेशाप त्तिवारणाय अर्थवत्समुदाये ओत्वादेशघटितविशेषणवत् ओत्वस्थान्यघटितेति ओत्वस्थानिसमभिव्याहृतयावद-

ल्विध्यर्थमिदमिति भ्रमितव्यम् , अस्याप्यल्विधावनिष्टत्वात् । अन्यथा अयजे इन्द्र-
मित्यत्र सवर्णदीर्घापत्तेः तथा च वार्तिकम्—"न वा अताद्रूप्यातिदेशात्"

---

शब्दरत्नम् ।

निकवचनकल्पनया प्र ऋच्छ इत्यस्य प्राच्छं आदेशे तु समुदाये प्रशब्दधर्माणां स्थानि
वत्त्वेन लाभेऽपि प्रारित्यत्र तदलाभेन रेफेपदान्तत्वस्य दुर्लभत्वादिति बोध्यम् । न वेति ।

भावप्रकाशः ।

भावादिति । समुदायनिष्ठत्वेऽपीत्यादिः । तदन्तावं तु तेन न वर्णवृत्तित्वादिति भावः । ऋच्छिति ।
अर्थवत्त्वस्य तत्कल्पनामूलत्वेन तावन्मात्रेऽपि तत्सत्त्वेन न तिङन्ताकिः । यथा तेस्तुरित्यादौ । अत
एवैका निर्देश इति भावः । अपरिमाणस्थायां सम्भावनायां वा । एवञ्च तत्र नाप्रद इति बोध्यम् । पूर्वन्तु
नैवम् । अतएवैतद्वैलक्षण्यसूचकस्तुः । अन्यतुल्यमेवेत्याह—प्रारिति । तस्यानादेशत्वादिति भावः ।

सरला ।

र्णघटितेति श्रौतस्थानिसमभिव्याहृतयावद्वर्णेतरवर्णाघटितेति विशेषणद्वयस्य स्थानेन्तरतमपरिभाषाबलेना
वश्यं वक्तव्यतया प्रकृते श्रौतस्थानिघटितार्थवत्समुदायस्य प्र इत्यस्य तादृशविशेषणविशिष्टेऽर्थवान् समुदा
यः प्रार् इति आदेशो भवतीति आनुमानिकस्थान्यादेशभावबोधकवचनकल्पनावश्यकत्वेन 'प्र'इत्यस्य
प्रार् इत्यत्र लाभेन तुल्यवित्तिवेद्यन्यायेन रेफे पदान्तत्वस्य सुलभत्वात् । एवञ्च स्थानिवत्सूत्रेणास्य सूत्रस्य
गतार्थत्वाङ्गीकारेऽपि 'प्राच्छति' इत्यत्र रेफस्य विसर्गवारणाय ज्ञापकमाश्रयणीयमेवेति । यद्यप्यत्र पूर्वपरयो-
रिति,स्थानिताश्रवणेन तद्घटितत्वस्य 'प्रऋच्छ' इति समुदाये एव तथापि द्विवचनबलेन प्रत्येकमपि स्थानि
तापर्याप्तिः सत्त्वेन 'प्र ऋच्छ' इत्यस्यैव प्र इत्यस्य 'ऋच्छ' इत्यस्य च श्रौतस्थानिघटितत्वमस्त्येवेति तदनु
रोधेन 'प्रार्' इत्यस्य 'आर्च्छ' इत्यस्य च 'प्राच्छ' इत्यस्यैव श्रौतादेशघटितत्वमस्त्येवेति बोध्यम् । प्रत्येकं
स्थानितापर्याप्तेः स्वीकारेण 'कुण्डादिः' इत्यत्र एकार्थे, समुदाये च तत्स्वीकारेण 'शुक्लाग्नयोः' इत्य
त्रोभयगुणकस्वरितादेशश्च सिद्ध्यति । एतादृशानुमानिकस्थान्यादेशभावकल्पनेन 'पचतु' इत्यत्र श्रौतस्था-
निघटितार्थवत्समुदायस्य 'ति' इत्यस्य "एरुः" इति सूत्रेण 'तु' इत्येवादेशो ननु 'तिउ' इति, तथा 'ल' इति
नापि अचिक 'तुम्' इत्यादिरिति । नचान्तादिवत्सूत्राभावे 'क्षीरपेण' इत्यादौ प इति पकारोत्तरपदत्वस्य पे
इत्यत्रातिदेशो न स्यादनल्विधाविति निषेधात्तस्य अल्मात्रवृत्ति 'अपद' धर्मघटितत्वादिति वाच्यम्, तत्रै
कादेशस्य स्वतः सिद्धत्वेनोत्तरपदत्वमात्रस्यैवातिदिदिक्षितत्वेन तस्य चानल्विधित्वेनानल्विधाविति निषे
धाप्रवृत्तेः । नन्वेवमपि भिय इत्यादावियङ् न स्याद् धातुत्वस्य 'भोई' इति समुदायैकदेश 'भी' इत्येतद्वृ-
त्तित्वेन तस्य स्थानिधर्मत्वाभावेन स्थानिवत्सूत्रेणातिदेष्टुमशक्यत्वाद्, इति वाच्यम्, 'प्राच्छति' इत्या
दाविवात्रापि समुदाये प्रत्येकं चार्थवत्त्वम् । स्थानितापर्याप्तेः सत्त्वेन भी इत्यस्य भो इत्यादेश , ई इत्य
स्य ई इत्यादेशः, भोई इत्यस्य च भी इत्यादेश इति त्रयाणामानुमानिकस्थान्यादेशानां कल्पनेन भ इति
धातुत्वस्य भी इत्यादेशेऽतिदेष्टुं शक्यत्वात् । स्वाश्वशब्दे तु नैव स्वशब्दस्यमनिर्दिश्य तस्मादारिन् शब्दे
परे "स्वादीरेरिणोः" इति वृद्धिः शङ्क्या, 'स्व' इत्येतन्निष्ठस्थानितानिरूपितादेशताया. स्वाशब्दे सत्त्वेऽपि
स्वाश्वशब्देऽभावेन तत्र स्वशब्दत्वस्यातिदेष्टुमशक्यत्वात् ।

नन्वेवम् 'अमी' इत्यादावपि न स्याद्बहुवचनत्वस्य स्थान्यैकदेशवृत्तित्वेन तस्य स्थानिवत्सूत्रेणा
तिदेष्टुमशक्यत्वादिति वाच्यम्, तत्रापि पूर्वोक्तरीत्या अद ई इत्यस्य अदे आदेशः अद इत्यस्य अदे
इत्यादेशः, ई इत्यस्य ए इत्यादेश इति स्थान्यादेशभावत्रयकल्पनेन ईकारवृत्तिबहुवचनत्वस्य एकारे सुल
भत्वात् । नच अनल्विधाविति अल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मनिमित्तकं कार्यं न
स्थानिवदित्यर्थकनिषेधः शङ्क्यः, तस्य अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्र-
कारीभूतधर्मेण साक्षादवच्छिन्ना या उद्देश्यता तादृशोद्देश्यताके कार्ये कर्तव्ये स्थानिवन्नेत्यर्थस्य स्थानिव-
त्सूत्रव्याख्याने स्पष्टमुक्तयाऽत्रापि आरोपप्रकारीभूत बहुवचनत्वधर्मेण साक्षादवच्छिन्नत्वस्य "एत ईद्ब
हुवचने" इति सूत्रीयोद्देश्यतायामसत्त्वेन तदप्रवृत्तेः ।

नन्वन्तादिवत्सूत्राभावे "उभयत आश्रयणे नान्तादिवत्" इत्यस्यासङ्गतिः । न च स्थानिवत्त्वस्यैव

दे बहिरङ्गत्वादसिद्धत्वमपि बोध्यम् । न च "नाजानन्तर्ये" इति निषेध यत्रान्त-

---

भैरवी ।

यन्मूलेऽभिहितं स्थानिवद्भावेन गतार्थमिति तदभिप्रायवर्णनमेवैतत् । तथाहि—स्थानिव-त्सूत्रमप्राधान्येनालाश्रयणेऽपि न प्रवर्त्तते प्रपच्येत्यादौ यथा । इदञ्च सूत्रमप्राधान्येनालाश्र-यणे "षत्वतुकोरसिद्ध " इति सूत्रे तुग्ग्रहणाज्ज्ञापकात् यद्यपि न प्रवर्तते तथापि यत्राप्राधा न्येनालाश्रयणन्तत्र प्रवर्तत एव । अत एव "क्षीरेण" इत्यादौ 'पे' इत्यस्यैकाच्त्वविशिष्टोत्तर पदत्वातिदेशाण्णत्वस्य प्रवृत्ति । स्थानिवत्सूत्रेण तु तस्य नातिदेशोऽप्राधान्येनालाश्रय णात् । किञ्च तेन स्थानिनिष्ठधर्मस्यैवातिदेशो भवतीति 'भोई, भिय ' इत्यादौ वर्णयोरेव स्थानित्वेन 'भो' इतिसमुदाय धातुत्वानापत्तिरितीयञ्च न स्यात् । आनुमानिकस्यादेशा देशभावे 'भोई' इति समुदायस्य 'भो' इत्यादेशे स्थानिनि समुदाये धातुत्वस्यासत्त्वेन 'भो' इत्यस्य धातुत्वमलभ्यम् । आनुमानिकस्यान्यादेशभावकल्पनेऽपि 'भोई' इत्येतत् घटकयो' प्रत्येक स्थानित्वमित्यत्र मानाभाव । प्रत्येकमपि स्थानित्वकल्पने स्वशब्दाऽश्वशब्दयो रेकादेशे स्वाश्वशब्दे स्वत्वस्यातिदेशोऽपि स्यादिति वत ईरिन् शब्दे 'स्वाश्वेरी' इत्यत्र वृद्ध्यापत्ति । अस्य सूत्रस्याप्रधान्यनालाश्रयणेऽपि प्रवृत्त्यर्थमावश्यकत्वादेव भाष्यकृताम-प्रत्याख्यानमिति ।

भावप्रकाश ।

रपेणइत्यादावेकारविशिष्टे पकाद्युत्तरपदत्वस्याप्राधान्येनालाश्रयणेन स्थानिवत्त्वेनालभ्यत्वात् । किञ्चो कादेशे वर्णयोरेव भीतस्थानित्वेन 'भा ई भिय ' इत्यादावेकादेशविशिष्टे धातुत्वासम्पत्ते, तस्य तत्र स्त्वान्यथमत्वात् । आनुमानिकादेशग्रहणे विशिष्टस्यार्थवत स्थानित्वेऽपि प्रत्येक तयो समुदाययोः स्थानित्वे मानाभावाच्च । तथात्वे च 'स्वाश्व'शब्दस्य स्थानिवत्त्वेन स्वशब्दतया तत ईरिन्शब्दे वृद्ध्या पत्त' । अत एव 'प्राछ् 'इत्यादौ षत्वजश्त्वादि न । किन्त्वेवम् "उभयत आश्रयणे" इत्यस्य लोकन्याय-सिद्धस्यासङ्गत्यापत्तावभीयादित्यार्थसिद्ध' । स्थानिवत्त्वस्य तूभयत आश्रयणविषये कत्तरीत्याऽप्राप्ति । तस्मात्प्राधान्येन सम्मात्रवृत्तिधर्माश्रये "अन्तादिवच्च" इत्यस्याप्रवृत्तिरिति ततो वैलक्षण्येनास्यावश्यक त्वम् । अतएव भाष्ये न प्रत्याख्यातम् । यच्च परममूलस्य प्रकाशानुयायिनो युक्तत्वेऽपि मूलमयुक्त-मेवेति ।

सरला ।

समुदाये लक्षणा, परशब्दस्य च एकादेशपरस्थानिनिष्ठाद्यावयवकसमुदाये लक्षणा । तथाच एकादेश एकादेशपूर्वस्थानिचरमावयवकसमुदायस्यान्तवत्, एवमेकादेश एकादेशपरस्थान्याद्यावयवकसमुदायस्या दिवदिति सूत्रार्थ । एवञ्च एकादेशनिष्ठचरमावयववत्तानिरूपकसमुदाये एकादेशपूर्वस्थानिनिष्ठचरमावयवता निरूपकसमुदायवृत्त्यर्थवत्पर्याप्ता प्रातिपदिकत्वसुबन्तत्वप्रत्ययत्वादयो धर्मा अतिदिश्यन्ते, एवमेकादेशनि ष्ठाद्यावयववत्तानिरूपकसमुदाये एकादेशपरस्थानिनिष्ठाद्यावयवतानिरूपकसमुदायवृत्त्यर्थवत्पर्याप्ता प्रातिप दिकत्वादयो धर्मा अतिदिश्यन्ते इतियावत् । "तद्वच्च" इति न्यायेनैव 'पूर्वपरयो' इत्यस्यानुवृत्त्या पूर्व स्थानिवृत्तिधर्मातिदेशसिद्धौ "अन्तादिवच्च" इति समुदायांशे नित्यमाकाङ्क्षान्तादिशब्दघटितसूत्रकरण पूर्वपरशब्दयोरुक्तार्थे लक्षणायां तात्पर्यग्राहकम् । तथाच वाङ्गसमुदायवृत्तिधर्माणामयवस्यासानामेवा तिदेश इति लभ्यते । तथा च वर्णमात्रवृत्तिधर्माणामत्वहस्वत्वादीनां तद्घटितधर्माणामदन्तत्वादीनां चाप वर्त्पर्याप्तत्वाभावेन नातिदेशप्रसङ्ग इति सूत्रेणैवाक्षरमर्यादया तदर्थसिद्धौ "वर्णाश्रये विधावन्तादिवद्भाव प्रतिषेधो वाच्य " इति वार्तिक न करणीयम् । अन्यथा 'न वा अशाद्ग्राह्यातिदेशात्" अन्तादिवर्णवृत्ति वर्णमात्रवृत्तिधर्मघटितधर्मानतिदेशादित्यर्थकस्य वार्तिकस्य स्वतन्त्रवचनत्वे तेन 'वर्णाश्रये" इति वार्तिक प्रत्याख्यानमसङ्गत स्यात् , वचनस्य वचनान्तरेण प्रत्याख्यानायोगादिति ।

ति क्विबन्तं प्रपे एवमपि जश्त्वेन दकारोऽस्तु। चर्त्वे कृते श्चुत्वमिति तु न न्याय्यम्। श्चुत्वं प्रति चर्त्वस्यासिद्धत्वात्। यत्तु "न मु ने" (पा० सू०८।२।३) इत्यत्र 'न' इति योगं विभज्यासिद्धत्वमिह नेत्याहुः। तदपि न, असिद्धत्वेऽपि रूपसिद्धौ निराधायां योगविभागस्यागतिकगतिभूतस्येहाश्रयणे प्रमाणाभावात् ॥

आक्रस्यत इति। "आङ उद्गमने" (पा०सू०१।३।४०) इति तङ्। "स्नुक्रमोः-" (पा०सू०७।२।३६) इति नेट् ॥

समसम्बन्धीविधिरिति। समकर्मकं विधानमिति तु नोक्तम्। अनुवाद्ययोरपि यथासंख्यस्येष्टत्वात्। "समूलाकृतजीवेषु हन्कृञ्ग्रहः" (पा०सू०३।४।३६) इत्यत्र यथा ॥

ङ्णोः—(पा०सू०८।३।२८) ॥ कुक्टुकोः पूर्वान्तत्वात्प्राङ्क्षाये इत्यत्र "शात्पश्चात्योः" इति षत्वं न। सुगण्ट्साये—इत्यत्र "न पदान्तात्" (पा०सू०८।४।४२) इति ष्टुत्वं न।

---

शब्दरत्नम्।

साम्येव सत्यभिधाने, परिभाषाया भाष्येऽदर्शनादित्याहुः। प्रमाणाभावादिति। योगविभागस्य भाष्येऽदर्शनेनाप्रामाणिकत्वाच्चेत्यपि बोध्यम् ॥

यथासंख्यस्येति। स्थान्तैकदेशेन सूत्रस्य ग्रहणं बोध्यम् ॥

भैरवी।

आह—परिभाषाया इति। प्रायुरिश्यस्वरप्रयोजनस्थेताहशरूपानभिधानमेवेति ॥

"यथासङ्ख्यम्" इति सूत्रे यत्प्रथमान्तं यथासङ्ख्यमिति पदं तदनुकरणमस्मान्तमेव भविष्यतीति यथासङ्ख्यस्येत्यसङ्गतमत आह—स्थान्तेति। एवञ्च यथासङ्ख्येत्येकदेशयुक्तसूत्रप्रवृत्तेरिष्टत्वादिति मूलार्थः ॥

भावप्रकाशः।

प्रयोगानभिधाने तत्र तदनाश्रयणीयत्वमिति।

नन्वर्थपरत्वे यथासङ्ख्यमित्युचितम्, शब्दपरत्वे विद्यासिद्धिरत आह—स्थान्तैकदेशेनेति। तदर्थभेदविवक्षायां तदनुकरणेनेत्यर्थः। तथा च तद्युक्तसूत्रप्रवृत्तेरिति मूलार्थः।

सरला।

ननु 'संख्यामनतिक्रम्य यथासंख्यम्' इति यथासंख्यशब्दस्याव्ययीभावतयाऽव्ययत्वात्तः परस्याः षष्ठ्या लुक् औचित्येन यथासंख्यस्य इति प्रयोगानुपपत्तिरत आह—स्थान्तैकदेशेनेति। "यथासंख्यमनुदेशः समानाम्" इति सूत्रैकदेशानुकरणम्, ततोऽनुकरणानुकार्ययोर्भेदविवक्षापक्षे सिद्धान्तभूते षष्ठीति तदाशय इति न पूर्वोक्तदोषावकाशः। बोध्यमिति। अयं भावः—सूत्रे अनुदेशशब्दः कर्मसाधनः, समानाम् इति च शेषषष्ठी। तथाच समसम्बन्धी विधिरित्यर्थो भवति। भावसाधनानुदेशशब्दश्चेत्समानामित्यस्य कर्मषष्ठ्यन्तत्वे समकर्मको विधिरित्यर्थः स्यात्। तथाच "समूलाकृत" इति सूत्रे विधेयस्य णमुलः समसंख्याकत्वाभावेनैव तदप्रवृत्तिः स्यात्। कस्यानुपेक्षाऽत्राऽऽद्य एव पक्षः स्वीक्रियते इति भावः।

अत्रेदं तत्त्वम्, इदं सूत्रं धर्मसाम्ये एव प्रवर्तते न तु व्यक्तिसाम्ये; व्यक्तीनामानन्त्येन तत्साम्यस्य दुरुपपादत्वात्। अत एव "संख्यातानुदेशेनाप्येतत् सिद्धम्" इति "स्थानेऽन्तरतमः" इति सूत्रस्य भाष्यं संगच्छते। अन्यथा यणां सप्तसंख्याकत्वेन इकां च चतुष्टेः सत्त्वेन साम्याभावात्तदसंगतिः स्पष्टैव। धर्मसाम्ये एतत्सूत्रप्रवृत्तिस्वीकारे तु न दोषः, व्यक्तीनां संख्यासाम्याभावेऽपि ह्रस्वत्वादीनां धर्माणां साम्यस्य सत्त्वादित्यन्यत्र विस्तरः।

पुष्करे तीर्थविशेषे सीदतीति पुष्करसत्, तस्यापत्यं पौष्करसादिराचार्यः। बाह्वादित्वादिञ्। अनुशतिकादित्वादुभयपदवृद्धिः॥

ङः सि धुट् (पा०सू०८।३।२९)॥ "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्" परत्वात्, इत्यभिप्रेत्याह-सस्येति। सीति सप्तमीनिर्देशस्तु लाघवार्थः। षट्त्सन्त इति। धुटश्चर्त्वेन तकारः। यत्त्वाहुः-"चयो द्वितीया" इति पक्षे तस्य थ इति।

---

शब्दरत्नम्।

परत्वादिति। "तस्मिन् (पा० सू० १।१।६६) इति सूत्रापेक्षया "तस्मात्-" (पा० सू० १।१।६७) इत्यस्य परत्वादित्यर्थः। ङकारात्सकारे धुडित्यर्थे "तस्मिन्"- (पा० सू० १।१।६६) इत्यस्य प्रवृत्त्योपस्थितङकारस्यागमित्वं "तस्मात्-" इत्यस्य प्रवृत्त्योपस्थितसस्य तत्त्वमित्यसम्भवरूपविरोधे परत्वेन व्यवस्थेति सस्यागमित्वनिर्णय इति भावः। स्पष्टं चेदं "तस्मिन्" (पा०सू० १।१।६६) इति सूत्रे भाष्ये। लाघवार्थ

भैरवी।

नतु ■ "ङः सि" इतिसूत्रे पञ्चमीनिर्देशस्य परत्वं, किन्तु सप्तमीनिर्देशस्यैवेति 'पञ्चमीनिर्देशो बलीयान्'इत्यत्रोक्तं परत्वस्य तत्र हेतुत्वेन प्रतिपादनाच्च परत्वमत्र नास्तीत्यत आह—तस्मिन्निति। परिभाषाविषये कार्यकालपक्षेऽपि पाठकृतमेव परत्वं नियामकं न तु संज्ञाशास्त्रवत्प्रदेशीयं, साधकाभावात्। किञ्च भाष्यकृता—"अधिकारो नाम त्रिप्रकारः कश्चिदेकदेशस्थः ■ शास्त्रमभिज्वलयति" इत्यभिहितम्। 'कश्चित्परिभाषारूप' इति व्याख्या च कैयटेन कृता। तेनाष्टाध्यायीपाठ एव तद्विषये नियामक इत्यभिहितम्। ननु विरोधे सति परत्वेन व्यवस्था, स एव तु कथमत आह—ङकारादिति। तत्त्वम्—आगमित्वम्। असम्भवः—कार्यित्वनिमित्तत्वयोर्युगपदसम्भवः। निर्णय इति। परत्वात्तस्मादित्यस्य प्रवृत्तौ निर्णयः फलित इत्यर्थः। ननु

भावप्रकाशः।

ननु न पञ्चमीनिर्देशस्य परत्वम्, वैपरीत्यात्। प्रधानीभूतागमित्वाश्रयबोधकशब्दयोर्मध्ये ङ इत्यतः सीत्यस्य परत्वं स्वकिञ्चित्करं वैपरीत्यापादकं च भाष्यसम्मतत्वादित्यर्थे ■ न तदुक्तिसारस्यमत आह—तस्मिन्निति। परिभाषाणां कार्यकालपक्षेऽपि पाठकृतं परत्वमस्तीति विप्रतिषेधसूत्रप्रवृत्तिर्निर्बाधैवेति भावः। तथा च परत्वादिति न परिभाषान्तर्गतं किं तु प्रकृताभिप्रायमिति बोध्यम्। स्पष्टञ्चेदमन्यत्र। अन्यत्र चारितार्थ्यं स्पष्टमुपेत्य विरोधं तद्बीजमुपपादयति—ङकारादिति। अर्थे इति। सतीति शेषः, श्रुतत्वात् सामग्रीसत्त्वाच्च। एतेन ङात् परः से परे पूर्वपदस्येति वाक्यार्थे धमकानुमहाय स परादिरेव, सस्येत्यादि ■ फलितार्थ इत्यपास्तम्, विशेष्यस्याविद्यमानत्वेन तद्विशेषणत्वायोगात्। परस्येत्यादेः षष्ठ्यन्तस्यैव क्रमेण परिभाषाभ्यामुपस्थाने तथान्वयासम्भवाच्च। असम्भवेति। कार्यित्वनिमित्तत्वयोर्युगपदसम्भवेत्यर्थः। पर्यायस्तु न, भावृत्त्यापत्तेः। एतेन ङात्परस्य से पूर्वस्येत्यर्थे 'षट्त्सन्तः' इति लक्ष्यसम्भवात् विरोधाभावेन कथं तेन व्यवस्थेत्यपास्तम्, उक्तरीत्या तस्यालक्ष्यत्वात्। व्यवस्थेतीति। परप्रवृत्त्या पूर्वाप्रवृत्तिरिति भावः। अत एव तस्यागमत्वमविहितत्वम्। अन्यथा धुड् ङः सीति वदेत्। सन्देहस्तूभयत्रापि तस्य इति बोध्यम्। निर्णय इति। तत्प्रवृत्त्या फलित इति भावः। एतेन षष्ठीप्रकल्पनपक्षस्य दूषितत्वात् कथमिदमित्यपास्तम्। अत एवोपस्थितेत्युक्तमुभयत्र। एवं च तत्कार्यस्थित्या तन्निर्देशस्य प्रादत्यं सिद्धमिति बोध्यम्। तथा परत्वाश्रयणे बीजं ध्वनयितुमाह—स्पष्टञ्चेदमिति। मूलाद्युक्तमि-

सरला।

मूले—तस्यापत्यमिति। पुष्करसच्छब्दात् अपत्यमित्यर्थे बाह्वादित्वादिञित्यर्थः। पौष्करसादिरिति। "अनुशतिकादीनाञ्च"इत्युभयपदवृद्धिः।

मूले—तकार इति। अत्र जश्त्वं तु न प्रवर्तते, धुटोऽसिद्धत्वात्।

तन्न, चर्त्वस्यासिद्धत्वात् । अत एव धुडभावे 'षट् सन्त' इत्यत्र टस्य ठो न । टकारनकारविसर्गाणां द्वित्वविकल्पात् षोडश । "खयः शर" इति सकारद्वित्वे द्वात्रिंशत् । न च तत्र चर्त्वस्यासिद्धत्वं शङ्क्यम्, "पूर्वत्रासिद्धीयमद्वित्वे" इत्युक्तेः । न च "शरोऽचि" (पा०सू०८।४।४९) इति द्वित्वनिषेधः शङ्क्यः, तस्य सौत्रद्वित्वमात्रविषयत्वात् । अत एव "शरः खय." इति वार्तिकस्य वत्सः, अप्सराः, इत्युदाहरणं भाष्ये स्थितम् । धुटः परादित्वं "न पदान्तात्–" (पा०सू०८।४।४२) इति ष्टुत्वनिषेधार्थम् । अत एव वक्ष्यमाणस्तुगिहैव न कृतः । यत्त्वाहुः—एवमपि प्रक्रियालाघवाय तुडेव

---

शब्दरत्नम् ।

इति । षष्ठ्याः प्रयोग एव कर्त्तव्ये इत्यर्थः । चर्त्वस्यासिद्धत्वादिति । अत एव धुडिति नोक्तम् । अत एव—चर्त्वस्यासिद्धत्वादेव । ननु "धुक् डः सि" इत्यस्तु, सप्तमीव यथाश्रुतैव, ड इति च षष्ठ्यन्तं, परमार्थतो वाक्यशक्त्यङ्गीकारेण पूर्वान्तत्वे परादित्वे वा न शक्यतावच्छेदकभेदोऽत आह—धुटः परादित्वमिति ।

भैरवी ।

यदि न षष्ठीनिर्देशस्तर्हि प्रकृतिमात्रस्य प्रयोग एव न स्यादत आह—षष्ठ्या इति । अत एव—चर्त्वस्यासिद्धया तकारस्य थकाराभावादेव ।

धातोः कर्त्रर्थकसार्वधातुके शप् भवतीत्यर्थेनोभयोर्मध्येऽनवयव. शप् भवति यथा, तथा डः सि धुड् भवतीत्यर्थे ऽनवयवो धुट् स्यादिति ॥ शङ्का न भवति । आगमलिङ्गकारोच्चारणवैयर्थ्यापत्तेः । अतस्तस्यागमत्वमेव । एवञ्चागमित्वं डकारस्य सकारस्य वेति सन्देहे "उभयनिर्देशे" इत्यादिना सस्यागमित्वनिर्णयः कृत । तत्र 'ड' इत्यस्य पञ्चम्यन्तत्वे पूर्वोक्तः सन्देहो भवति, यदि 'ड.' इति षष्ठ्यन्तस्तदा न सन्देह, परन्तु धुडागम एव चेत् क्रियते तदा डकारात्पूर्वः स स्यादितीष्टरूपासिद्धिरित्याशयेन 'धुगिति' कृत्वा डकारस्यागमित्वनिर्णयाय सूत्रानुपूर्व्यस्यासङ्कुत्वा शङ्कते—नन्विति । 'धुक् ड. सि' इति न्यासे सकारात्पूर्वं डकारस्योपादानेन विधेयान्तरोपादानेन च डकारस्यागमित्वनिर्णयो भविष्यतीत्याशयेनानुपूर्व्यस्यासो दर्शितः । नन्वेवमपि शक्यतावच्छेदकानुपूर्वीभेदादसङ्गत्यापत्या बोधानापत्तिरत आह—परमार्थत इति । एतेन पदानुपूर्वीभेदादिष्टार्थाप्रतीतिः स्यादिति शङ्का न कार्येति दर्शितम् । न शक्यतावच्छेदकभेद इति । वाक्यानुपूर्वीभेदाभावादिति शेषः । सूत्रे—धुडेति ।

भावप्रकाशः ।

स्पष्टः । अत एव सूत्रपाठावेक्षया परत्वस्य व्यवस्थापकत्वमिति तत्र कैयटः । ननु सप्तमीनिर्देशाभावे ऽप्रयोगापत्तिरत आह—षष्ठ्या इति । न्यायेन तथार्थाङ्गीकारे स्पष्टार्थमित्यादिः । इत्यर्थ इति । इति तात्पर्यार्थं इत्यर्थः । न तु स विवक्षितार्थत्वेन षष्ठीबाधनार्थं इति भावः । अत एवेति । तदसिद्ध्या तस्य थाभावादेवेत्यर्थः । साध्यपरामर्शोऽन्वयासम्भवादाह—चर्त्वेति । एतेन योगविभागादनसिद्धत्वेन पक्षे द्वितीयोऽपि । एतेन धुडभावपक्षे टस्य ठानापत्तिः प्रकाशकृदभिप्रेतान्विते तुडपक्षे थापत्तिश्च मनोरमोक्तापास्तेति हरदत्तप्रकाशाशयवर्णकखण्डनकृदुक्तिः परास्ताः, डदः स्येत्यत्र दोषोक्तः । धुक् ड इति । एवञ्च विधेयस्य प्रागुक्त्या सान्निध्याच्च डस्यैवागमित्वम् । एतेन "डः सि धुक्" इति दण्डयुक्तमशस्तमिति भावः । तदाह—सप्तमीति । ननु तावतापि न्यायप्राप्तिः कुतो नेत्यत आह—ड इतीति । डकदेवः प्रथमोपात्तत्वेऽपि तस्यागम इति भावः । नन्वेवमपि शक्यतावच्छेदकानुपूर्वीभेदात्सङ्गत्याबोधानापत्तिरत आह—परमेति । एतेन धुडभेदाद्व्युत्पत्तिवैचित्र्यं तत्राप्यावश्यकमिति न दोषोऽत्रेति समाधिर्युक्तस्तस्य

सरला ।

षष्ठ्यन्तमिति । सकारे परे डस्य धुगागमो भवतीत्यर्थः । नन्वेवं धुगागमे 'सन्त.' इत्यानुपूर्व्याः शक्यतावच्छेदकत्वं, धुडागमपक्षे तु 'ष्सन्तः' इत्यस्या इति भेदः स्यादित्यत आह—परमार्थत इति ।

भैरवी ।

धुट इत्यादिः । अत एव—ष्टुत्वप्रतिषेधस्येष्टत्वादेव । ननु तुगागमे "चयो द्वितीया" इति थकारस्यापत्तिरपि दोषः । नचास्य पदान्तत्वान्न द्वितीयादेशापत्तिरिति वाच्यम्, हलन्ते वक्ष्यमाणरीत्या पदान्तेऽपि क्वचित्प्रवृत्तेरिति चेन्न, तुकि कृते द्वितीयष्टुत्वयोः प्रसक्तौ ष्टुत्वदृष्ट्या द्वितीयादेशस्यासिद्धतया ष्टुत्वस्यापत्तिरेनेत्याशयेनात एवेत्यवधारणस्य करणात् । तुडागमे द्वितीयापत्तिरिति त्वन्यत् । केचित्तु—"चयो द्वितीया" इत्यस्य—

भावप्रकाशः ।

कविदसत्त्वेनानुपयोगादिति यचितम् । अपदेऽपि दशनात्संहिताभावेन तत्र धुडाद्यभावाच्च नावग्रहे दोष इति भावः । मूले ष्टुत्वेति । धुट इत्यादिः । अत एवेति । ष्टुत्वप्रतिषेधस्येष्टत्वादेवेत्यर्थः ।

अत्र मान्याः—"चयो द्वितीया" इत्यस्य प्रातिशाख्यानुरोधेन वेदे ऽपदान्त एव प्रवृत्तिरिति छन्दे स्फुटम् । एवञ्च लोकवेदयोरैक्यार्थं लोकेऽपि व्यवस्थितविभाषया पदान्ते द्वितीयादेशो नेति वादिना मतेनेदम् । प्रथमातिक्रमे कारणाभावात्तदपेक्षयैव द्वितीयत्वस्य सत्त्वाच्च द्वितीयपदेनैवाक्षेपात् प्रथमस्थानिके लब्धे प्रथमपदमन्यस्थानिकप्रथमव्यावृत्त्यर्थमिति तद्व्याख्यातारः । एतेन वृत्तिविन्यासे भाष्यकपरमन्यविरोध इत्यपास्तमिति । एवञ्च प्रातिशाख्यैकवाक्यता । अत [illegible] द्वितीयस्यापि प्रसङ्गाच्चेद स न कृत इति दण्डयुक्तिः, तत्रापि पक्षे प्रसङ्गाचिन्त्य मूलमिति रत्नाकरोक्तिश्च चिन्त्येति बोध्यम् । प्रातिशाख्योक्तान्यथासामप्रामाण्यमेव वाक्यतालोचितं चेति सूक्ष्ममयुक्तमेवेति वादिना मतेनेत्यनेन सूचितं अन्ये तु तुकः पूर्वान्तत्वेन तत्स्थानिकष्टुत्वनिषेधाप्राप्त्या ष्टुत्वे पूर्वस्य चर्त्वे टस्य सूयेत । तस्य चरत्वं न, ष्टुत्वदृष्ट्या असिद्धत्वात् । न च ष्टुत्वोत्तर ठापत्तिः । अत एव परमन्यत्र कृतिरिति वाच्यम्, कर्मोरथमिति प्रातिशाख्यैकवाक्यतयाऽपदान्त एव तत्प्रवृत्त्या परोक्षेप्सितयोः पदान्तत्वापदान्तत्वकृतगमइतिमइतिभ्यां तदापत्तितदसङ्गत्योरभावात् । तस्य भाष्ये वृत्तौ च "शतः स्फुरं प्रत्यङ्ङ्हस्वमनु यन् शतक्रतुः प्रसरद् विरप्शी गोमतीति, कक्सामभ्यां विराट् सम्राट् तत्सवितुर्वृणीमहे अप्स्वग्ने" इति चोदाहरणमनुदाहरणान्युक्तानि । न च "प्रत्यङ्ङ्ख् स्वमनु यन्" इति तद्भाष्योदाहरणासङ्गतिः, प्राङ्ख् षष्ठ इत्याद्यसिद्धिस्तदुक्तैवास्य नित्रिचेति वाच्यम्, तत्रापदान्तभागमित्यस्याचरमभागमित्यर्थोपलक्षकत्वेनादोषात् । "चयो द्वितीया" इति दृष्ट्या चर्त्वासिद्धस्वरूपार्थानुवाद इति यावत् । पदान्ते प्रायो जश्त्वमकृत्वा विना चर्त्वं चयोऽभावात् । अत्र तु कृते न जश्त्वमस्यासिद्धत्वात्, चर्त्वे स्वेतरतामर्थादेव न । एवञ्च 'प्राङ्ख्षष्ठ' इत्यादौ द्वितीयो युक्त एव । कृगादीनां जश्त्व प्रत्यसिद्धत्वेन तदभावेपि चरत्वस्य वार्तिकदृष्ट्याऽसिद्धत्वेनाभावात् । न चैवमपि "वधूसा अप्सरा" इति भाष्योक्तवार्तिकलक्ष्यासङ्गतिर्मतद्वयेऽपि । "अप्पूर्वात् सर्तेरसिवदेः स" इत्युणादावुक्तत्वेन पदयोश्चर्त्वनिष्पन्नत्वादिति वाच्यम् । भाष्यप्रामाण्यादप्पूर्वात् प्साधातोरसिरन् अप्सोप्सश्च पतेः स आदेश इति व्युत्पत्तिरिष्टत्वात् । तेनार्थं स्पष्टं निरुक्ते तद्भाष्ये च । उणादेर्माध्यविरुद्धत्वाय बहुश उपलम्भेऽप्यप्रामाणिकत्वाच्च । वस्तुतः पाणिनिसम्मताव्युत्पत्तिपक्षस्यैव भाष्याभिमतत्वेनादोषाच्च । एवञ्च प्रातिशाख्यैकवाक्यतायां न दोषलेशः । अत एवेत्यादि मूलं [illegible] अपदान्तमात्रविषयस्य मूलोक्तयथाश्रुतार्थैकवाक्यताशयेनेत्याहुः । मम तु प्रतिभाति नास्य तदेकवाक्यता युक्ता, समाख्याबलेन तस्य छन्दोमात्रविषयत्वात्, अस्य साधारणत्वात् । लिट्स्वित्यादौ तु चर्त्वासिद्धा प्राप्तिरेव न । अत एव तथाव्युत्पत्तावपि "अप्सरा" इति भाष्योक्तलक्ष्यसङ्गतिः । एवञ्च सकललोकवेदसाधारणस्यास्य पदान्तेऽपदान्ते च प्रवृत्तिरुचिता । अत एव तैत्तिरीयप्रातिशाख्यम् "प्रथम ऊष्मपरो द्वितीयम्" इति । प्रथमः स्पर्शः तत्परः स्ववर्गीय द्वितीयमापद्यत इति तदर्थः । "विरफ्शिन्नुदावाय, तस्थ् पोडश्यमवत्, प्रत्यङ्ख्सोमो अतिद्रुतः, तत्सवितुः" इत्यादि तथासर्वसम्मतशिक्षा व्यासशिक्षा च ।

पदान्तस्यापदान्तस्य सपयोः परभूतयोः ।
प्रथमस्य द्वितीयत्वमपदान्तस्य शोत्तरे" इति ॥

"शश्छोऽटि" (पा०सू०८।४।६३) इत्यस्य हि पदान्ताज्झय परस्य शस्य छ इत्यर्थ आकरे स्थित । एवं च धुट परादित्वात् सञ्च्छम्भुरित्यत्र च्छो न स्यात् । विपूर्वो-द्रपेरौणादिके शप्रत्यये "मध्वश्चोतन्त्यभितो विरप्शम्" इत्यादौ यथा । अत पूर्वान्तस्तुक् कृत । नन्वेवं कुर्वन्त्सीते इत्यत्र "पदान्तस्य" (पा०सू०८।४।३७) इति णत्वनिषेधो न स्यादिति चेन्न । कार्यकालपक्षे बहिरङ्गत्वेन तुकोऽसिद्धत्वात् । यथो-द्देशपक्षे "स्तो श्चुना' इति योगो विभज्यते । 'न' इति वर्तते 'ण' इति च । स्तो श्चुना योगे णत्वं न स्यात् । नकारार्थमिदम् । सकारग्रहणं वर्गग्रहणं चोत्त-रार्थम् । तत्र 'श्चु' इति । पूर्वमनुवर्तते । एवं "नश्च"(पा०सू०८।३।३०) इति सूत्रे कुर्वन्त्सीदतीत्यत्र "पदान्तस्य" (पा० सू० ८।४।३७) इति णत्वप्रतिषेधो धुट परादित्वे प्रयोजनमिति प्राचा ग्रन्थोऽपि यथोद्देशपक्षे योज्य ।

---

बालमनोरमा ।

तार्थत्वे लाघवेनान्यविभक्त्युच्चारणं युक्तं, न त्वन्यथेत्याशयात । धुडेवास्त्विति । षीति च षष्ठ्यर्थे इति भाव । विरप्शमिति । छान्दसत्वमपि बहुश सूत्रकृतो पदर्श-नादिति भाव । णत्वं न स्यादिति । पूर्वत्रदृष्ट्या श्चुत्वस्यासिद्धत्व तु न, वचनप्रामा-ण्यादिति भाव । त्रिपाद्यां सर्वथा परिभाषाऽप्रवृत्तौ पक्षद्वयेऽपीदमेव समाधानम् । यथोद्देशपक्षे इति । कार्यकाले तु असिद्धत्वान्न दोष पूर्वान्तत्वेऽपीति भाव ।

ऊष्मी ।

नेति । सप्तमीति शेष । ननु छान्दसत्वादेव 'विरप्शम्'इति भविष्यतीत्याशङ्कायामाह— छान्दसार्थमपीति । असिद्धत्वन्तु नेति । सम्प्रति प्राप्तमसिद्धत्वमित्यर्थ । पक्षद्वये—यथोद्देशकार्य-कालभेदेन पक्षद्वय । इदमेवेति । अत्रैवकारेण यत्तु षडन्तात्यादिना यदभिहितन्तत्र युक्तमित्य-भिहितम् । असिद्धत्वादिति । 'असिद्धम्' इत्यननासिद्धत्वादित्यर्थ । इति भाव इति । अत्रारुचि बीजन्तूक्तमेव । यत्तु परमलघुमञ्जूषायां [illegible] इति पर्यन्तस्य [illegible] स्थमनूदितमिति बोध्यम् । परेण वर्णो द्वितीया इति आदेशविकल्पत्र रूपद्वयाधिक्यात् [illegible] स्यमिति खण्डनहेतुरुक्ति प्रयुक्ता,

भावप्रकाश ।

प्राप्तिरिति भाव । षष्ठ्यर्थे इति । सप्तमीति शेष । [illegible] यथा [illegible] भाव । एवञ्च षीतिवत् निर्देश, [illegible] तदनुगतं इति तात्पर्यमिति केचित् । वस्तुत षीति च षष्ठ्यर्थ, षष्ठ्यर्थबोधक [illegible] इत्येव कार्यमित्यर्थ । द्वितीयादेशस्य [illegible] इति तु शाब्द-बोध्यम् । ननु छान्दसत्वादेव तत्र सिद्धं तदर्थमत आह—छान्दसार्थमपीति । [illegible] स्यास्येति भाव । एवञ्च [illegible] न तु लोके [illegible] यद्यपि [illegible] धर्मः आवश्यक इति तात्पर्यम् । बहुश इति । छन्द आदि[illegible] इत्यर्थ । इमरति । एवञ्च यत्तु वदन्तीत्यादिना [illegible] इत्यादि दोषाविर्भावश्चायुक्त [illegible] कत्वया तदग्रन्थ कथञ्चित् योजयन् [illegible] युक्तमयुक्त इति भाव । असिद्धत्वा-दिति । असिद्धं बहिरङ्गमित्यनेनेति भाव । इति भाव इति । अत्रारुचिबीजन्तूक्तमिति यथाश्रुतग्रन्थ

सरला ।

इति भाव इति । वस्तुतस्तु [illegible] पदे [illegible] इत्यादिलौकिकप्रयोगेऽपि छत्वं मा भूदिति "शश्छोऽटि' इति सूत्रे [illegible] मिति बोध्यम् ।

मूले— बहिरङ्गत्वेनेति । [illegible] "पदान्तस्य [illegible] तुको बहिरङ्गत्वमित्यर्थ ।

यत्तु वदन्ति—इदं प्रयोजनं बहिरङ्गपरिभाषया गतार्थत्वात् प्रत्युक्तमिति । तत्पाक्षिकम्, त्रिपादीस्थे ऽन्तरङ्गे बहिरङ्गपरिभाषेयं न प्रवर्तते इति सुद्ध्युपास्य इत्युदाहरणे स्वोक्त्या सह विरुद्धं चेत्यास्तां तावत् । सञ्च्छम्भुरिति । इह श्चुत्व-तुकोरसिद्धत्वमाश्रित्य "नश्छवि" (पा० सू०८।३।७) इति रुत्वं न शङ्क्यम् । छत्व-स्यासिद्धत्वात् ।

ङमो ह्रस्वात् (पा०सू०८।३।३२) ॥ ङम् प्रत्याहारः । सञ्ज्ञायां च कृतं टित्त्वं सामर्थ्यात् संज्ञिभिः सम्बध्यते । तेन यथासंख्यं ङुट्-णुट्-नुटः प्रवर्तन्ते । नित्यग्र-हणं विस्पष्टार्थम् । "हे मपरे–" (पा०सू०८।३।२६) इति "मय उञो वो वा" (पा०सू०८।३।३३) इति च विकल्पद्वयस्य मध्ये पाठादेव नित्यत्वलाभात् । सुग-

---

शब्दरत्नम् ।

सञ्ज्ञायाम्–ङमिति प्रत्याहाररूपायाम् । विकल्पद्वयस्य मध्ये इति । "विभा-षामध्ये च ये विधयस्ते नित्याः" इति "पूङः क्त्वा च" ( पा० सू० १।२।२२ ) इति सूत्रे भाष्योक्तेरिति भावः । न च तन्मध्ये पाठेन नित्यत्वस्वरूपे तन्मध्यपठितानां "नपरे

भैरवी ।

सुगादिविकल्पसाधारण्याभिप्रायकत्वाद्वा ।

ननु मूले ङम्प्रत्याहारइत्यस्यानन्तरं संज्ञायामिति कथनमनावश्यकं तत्र चेत्येतावन्मात्रेण प्रस्तुतार्थनिर्वाहादत आह—ङमिति प्रत्याहाररूपायामिति । ननु 'ङमुट्'इत्यत्र टित्त्वं दृश्यते तत्रो-कारान्तस्य टित्त्वमनु संज्ञाया इति संज्ञायामिति मूलमसङ्गतमिति चेन्न, उकारस्योच्चारणार्थत्वा-त् । एतेनोकारान्तस्य टित्त्वं सा च न संज्ञेति संज्ञायामित्यसङ्गतमिति कस्यचिदुक्तिः प्रत्युक्ता । रत्नाकराद्युक्तिं खण्डयति—नचेति । अस्य नित्यत्वापत्तिरित्यत्रान्वयः । 'विभाषामध्य'इत्यपूर्वं वचनमिति शङ्काभिप्रायः । भाष्यकारोक्त्यापूर्ववचनत्वेऽपि तु न्यायसिद्धमित्याशयेन समाधत्ते—

भावप्रकाशः ।

अन्यो युक्त एवेति मूलमेवायुक्तमिति भावः । तदेतद्दूषणमपाह—आस्तामिति मूले । परमभूते अच्छा-विति पद शुक्लयजुश्चन्द्रिकारस्यम् । एतेन चयो द्वितीया इति छविकल्पेन रूपद्वयासिद्ध्याविघ्नमिदमिति खण्डनकृदुक्तिः परास्ता । तदनुवादकत्वात् पयोक्तविकल्पाश्रयकत्वाच्च ।

ननु तत्र चेति भाष्ये संज्ञायामिति आवश्यकमनभिमतार्थकं चात आह—ङमितीति । उकार उच्चारणार्थ इति भावः । यत्तु जगन्नाथः—"इदं चिन्त्यम्, तस्यातत्त्वाप्रसक्तेः । नहि तेन संज्ञाग्रहण प्रसङ्गोऽशब्दसंज्ञेति निषेधात् । ङमुडिति पञ्चम्यन्तं ङम् शब्दस्योट्शब्देन तत्पुरुषो बहुव्रीहिर्वा । न्याय शाब्दबोधे तात्पर्याभावादन्ये समुदायग्रहणादिष्टसिद्धेः । एवञ्च कुत्रादेर्विधेयस्यैव ङिश्च न तु नत्पाः । किञ्च संज्ञार्थं ङमि न तु ङमुटि, सुत्राभावात्, तस्य तत्त्वेनाप्रसिद्धत्वाच्च । टित्त्वं तूक्तमनुरूपस्य, एवञ्च तस्य विधेयत्वं स्यान्न तस्याः, नापि तेषामतो लक्षणैवाश्रयणीया'–इति । तन्न, व्यधिकरणबहुव्रीह्यापत्तेः, सामर्थ्याभावाच्च, तेषामनुच्चारणेनोपदेशानन्त्यत्वादित्संज्ञानापत्तेश्चेति दिक् । मध्ये इति । तयो-मध्ये इत्यर्थः । पूङः क्त्वा चेतीति । अत्रे वाग्रहणादिकल्पानुवृत्त्या निष्ठायां क्त्वा सिद्धया क्त्वाग्रहणस्योत्तरार्थत्वं लाघवमनादृत्य "पूङश्च" इति च कृतमेव सन्नकृतेऽपि माद्यादमतप्रसङ्गे इत्यर्थः । एतेन भाष्यस्यान्यपरत्वमिति मन्दोक्तिरपास्ता । न क्त्वापोऽपिट्पाठः । एतेन तत्र भाष्येऽनुक्ते-रिदं चिन्त्यमिति मन्दोक्तमपास्तम् । खण्डनकृद्रत्नाकराद्युक्तिं खण्डयति—नचेति । अपूर्वं वचनमिति

सरला ।

अयं भावः–वाहऊठ्सूत्रस्थोठ्ग्रहणज्ञापितान्तरङ्गपरिभाषायाः सापादिकतया तद्दृष्ट्या "पदान्तस्य" इत्यस्यासिद्धत्वेऽपि त्रैपादिकान्तरङ्गदृष्ट्या परिभाषायाः सिद्धत्वेनादृष्टपिशाचन्यायेनान्तरङ्गाभावप्रदेशे परि-

ण्णीश इति । ण्यल्लोपौ न स्थानिवत्, पूर्वत्रासिद्धे तन्निषेधात् । ङमुटः परादित्वं

शब्दरत्नम् ।

ः" ( पा० सू० ८।३।२७ ) इत्यादीनामपि नित्यत्वापत्तिः । स्वरितत्वबलादनुवृत्तस्य पुनर्वाग्रहणान्निवृत्तौ कल्प्यमानायां स्वानन्तर एव तत्कल्पनेनोपपत्तावन्यत्र तत्कल्पने मानाभावात् । तस्मादुत्तरत्र वाग्रहणसामर्थ्यात्पूर्वसूत्रे एव वाग्रहणस्य निवृत्तिरिति भावः । तन्निषेधादिति । "तस्य दोष" इत्यस्य तु न प्राप्तिः । ङत्वसाहचर्येणादेशणत्वस्यैव ग्रहणात् । पञ्चमीसमासस्यानित्यत्वाच्चेत्यपि बोध्यम् । परादित्वमिति । ततः परस्याच इति व्याख्यानेनेत्यर्थः । ङम इत्यस्य षष्ठ्यन्तत्वमाश्रित्य ङमन्तपदावयवस्य ह्रस्वा·

मैरवी ।

स्वरितत्वेत्यादिना । उक्तार्थमेव स्पष्टयति—तस्मादिति । पूर्वेति । अव्यवहितेत्यादिः । यत्तु 'सुगण्णीश' इत्यत्र ङमुटः परविधित्वेन स्थानिवद्भावशङ्कैवासङ्गतेति, तन्न "प्रत्यैपिषत्" इत्यर्थं पञ्चमीसमासस्यावश्यकत्वात् । अनित्यत्वादिति । प्रविगणय्येति भाष्योदाहरणादनित्यत्वादित्यर्थः । यत्तु प्राचेत्यादिना ङमादेः परस्येति व्याख्यानस्य स्वयन्दूषयिष्यमाणत्वान्ङमुटः परादित्वमिति कथमं विरुध्यत इत्यत आह—तत इति । ङम इति पञ्चमी, पदस्येत्यनुवृत्तं सामानाधिकरण्येन सम्बन्धाय पञ्चम्या विपरिणम्यते, सा चानवकाशा, अचीति सप्तमी तु तत्र चरितार्थेति साऽत्र षष्ठ्यर्थे इति कल्प्यते । एवञ्च ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याच इत्यर्थे इत्याशयात् । मूले—णत्वप्रतिषेधार्थमिति । "पदान्तस्य" इति णत्वप्रतिषेधस्य सिद्ध्यर्थमित्यर्थः । ङमन्तस्येति । अस्यान्यथेत्यादिः । षष्ठ्यन्तत्वमिति । अस्मिन्पक्षे पदस्येत्यत्र विभक्तिविपरिणामो न कार्यं इति लाघवम् । एवमचीति सप्तम्यपि चरितार्था । ह्रस्वात्परस्य ङमः पदावयवस्याचि पर इति तु नोक्तं, 'दण्डिना' इत्यादौ दोषापत्तेः । अस्मिन्पक्षे पदे इत्यनुवृत्तं तद्विशेषणमचीति, तेन तदादिविधिः । यदि तु पदावयवस्य ह्रस्वात्परस्य ङमो·

भावप्रकाशः ।

ण्डाशयः । न्यायसिद्धत्वान्न तथेति समाधत्ते—स्वरितेति । स्वानन्तर इति । यत्रानुवृत्त्याऽभिमतापदं यथं ततः प्रागव्यवहितसूत्रे एवेत्यर्थः । उक्तार्थमेव स्पष्टयति—तस्मादिति । "विभाषापयमने" इति विभाषापदस्यास्वरितत्वादननुवृत्तिः । एतेन "नृपस्तिविभाषायाम्" इत्यस्य नित्यत्वेऽपि "स्थाणोः" इत्यादीनां तत्र स्यादिति मन्दोक्तमपास्तम् । पूर्वेति । अव्यवहितेत्यादिः । यत्तु जगन्नाथः "ङमुटः परविधित्वेन तदप्राप्त्या शङ्काया एव नोत्थितिः, पञ्चमीसमासस्य तु त्वयैव पाक्षिकत्वाङ्गीकारेण बहुलकादीनामेवानिष्टार्थमप्रवृत्तेः । अन्यथा कार्यकर्त्वं निष्फलमेव स्यात्, हलङ्यादिलोपार्थं तवाप्यत्र तदर्थमेव ग्रहणं स्यात्त्रिपादीस्थत्वात् । संयोगान्तलोपेन निर्वाहे तु विगणय्येत्यत्रयादेशानापत्तिरकरीस्येति" । तन्मूलप्रोपेष्टमेव । तत् ध्वनयन् मूले हेत्वन्तरं पूरयति—पञ्चमीति । नन्वङमादेः पदस्येति प्राचोक्तव्याख्यानस्य दूषयिष्यमाणत्वेन कथं तस्य तत्त्वमत आह—तत इति । सूत्रे ङम इति पञ्चमी पदस्येत्यनुवृत्तं सामानाधिकरण्यान्वयाय पञ्चम्यन्ततया विपरिणम्यते । तस्या अनवकाशत्वादेवोत्तरत्र चरितार्थाचीति षष्ठ्यर्थे सप्तमी । तथाच ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याच इत्यर्थो निष्प्रत्यूहः । मतो लम्बन्यादन्यथा पूर्वान्त एव कर्तव्यो ङुम्वदिति प्रतीयते, तन्न । तस्माच्चरूपस्यार्थभेदेन सूत्रादेव लाभेन तद्वैलक्षण्यात् । तत् ध्वनयन् तथैव विपक्षमूलाशयमाह—ङम इत्यादिमात्र इत्यन्तेन । अन्यथेत्यादिः । ह्रस्वात्परस्य ङमः पदावयवस्य ङमुडचीति तु नोक्तं, दण्डिनेत्यादौ दोषापत्तेरिति बोध्यम् । अत एव भाष्यमूलेऽपि ह्रस्वात्परस्मात्पदावयवङमः परस्याचो ङमुडिति नोक्तम् । ह्रस्वेति । स च प्रत्यासत्त्या

सरला ।

भाषाया आकर्षणेन संस्कारकदृष्ट्या संस्कार्यस्यासिद्धत्वाभावात्परिभाषादृष्ट्या "पदान्तस्य" इत्यन्तरङ्गस्यासिद्धत्वाभावेन परिभाषया तच्छास्त्रं प्रति तुको बहिरङ्गत्वबोधने न बाधकमिति ।

कुर्वन्नास्ते इत्यत्र णत्वप्रतिषेधार्थम् । अत एव'ङमो ह्रस्वादचि द्वे' इति नासूत्रि । परं णत्वं प्रति पूर्वस्य सिद्धतया णत्वापत्तेरिति प्राञ्चः।यत्त्वाहुः-बहिरङ्गपरिभाषया गतार्थत्वादुभयमप्यसङ्गतमिति । तदपि पाक्षिकम् । राज्ञ इत्यत्रेव ययोद्देशे त्रैपादिके ऽन्तरङ्गपरिभाषाविरहस्योक्तत्वेन प्राचां ग्रन्थस्य सौष्ठवात् । कथमन्यथा द्वियं त्रियं च स्वयमेवोक्तमिति दिक् ।

---

शब्दरत्नम् ।

ङमरस्य ङमो ङमुडजादौ पदे इत्यर्थेन पूर्वादित्वमेव कुतो न कृतम् । "पदस्य" ( पा० सू० ८।१।१६ ) इति च "भात्तुपधाया" ( पा० सू० ८।२।९ ) इत्यादाविवावयवषष्ठी । अजादौ पदे इत्युक्तेर्न्नां अभ्यासे इत्यतः शार्वार मननित्यादावमन्त्यस्य नेति भावः । बहिरङ्गपरिभाषयेति । ङुटो बहिरङ्गतया ऽसिद्धत्वादित्यर्थः । उभयम्—ङ्मुटः परादित्वं, द्वे इति सूत्राकरणं च । पाक्षिकम्—कार्यकालसम्बन्धि । दिगिति । दिगर्थस्तु तत्परिभाषायाश्चिपाषामभाव एव । किं च यदि यदागमा इति न्यायेनाग-

भरवी ।

ऽजादौ पद इत्यर्थे आश्रीयते तदा दण्डिनेत्यत्र दोषः परिहर्तुं शक्य एव । ननु नन्दनामसिस्यत्र सर्वथा दोष एव, नन्दनशब्दो ल्युडन्तः, अनन्शब्दस्त्वन्प्रकृतिकशन्नन्तः, तेन नन्दनशब्दस्य कर्मधारयः, ङमन्तम्पदन्नन्दनिति तदवयवस्यान्त्यनकारस्य परादित्वज्ञानेनाजादिपदमामन्त्रिति तस्मिन्परे ङमुट् स्यादिति चेत् ? न । परममूलोक्तव्याख्यानेऽप्यस्य दोषस्य सत्त्वात् । यदि सूत्रदोषवारणाय पदस्येत्येतत्पदपदार्थे ङमन्ते परे इत्येतत्पदपदार्थनिमित्तकपदत्वचक्रेऽपि ऽपि विवक्षित इत्युच्यते, तदा तु न कोऽपि दोष इत्यवधेयम् । मूले—अत एवेति । णत्वाभावार्थमेवेत्यर्थः । कार्यकालेति । परोक्तयैवेदम् । एतस्य पाक्षिकमित्यस्य वैकल्पिकमित्यर्थं इति भ्रमस्तु न कार्यो, विकल्पस्याप्रक्रान्तत्वात् । अभाव एवेति । स्पष्टमेतदन्यत्र । यमुद्दिश्य य आगमो विहितः स आगमीयधर्मवैशिष्ट्येन गृह्यते—तद्धर्मवैशिष्ट्येन गृह्यते—स आगमीयेन शब्देन गृह्यते, तेन शब्देनागमविशिष्टस्य ग्रहणमिति चार्थः । आगमीयधर्मवैशिष्ट्येन गृह्यते आगमोऽपि तेन धर्मेण गृह्यते इत्यर्थे किम्मानमिति चेत ? प्रकृतसूत्रस्थभाष्यग्रन्थ एवेति गृहाण ।

भावप्रकाशः ।

तदवयव एवेति भावः । टित्त्वेनाक्षिप्तं प्रत्यासत्त्या लब्धं कल्पितं स्पष्टार्थमानुपूर्व्या आह—ङम इति । अजादौ पदे इति । ङमीति यथाश्रुतमेव, पदे इत्यनुवृत्त्या तदादिविधिः । अन्यथा पदस्येत्यस्यानुवृत्त्या सम्बन्धेऽपि स न स्यादिति भावः । पूर्वादित्वमेवेति । एवेन परादित्वव्यावृत्तिः।एवं च पदाश्रयत्वं यथा-सत्यमिति भावः । ननु नन्दनानन्दनोदक् इत्यादौ ङमन्तं पदं समुदितं तदवयवो ह्रस्वात्परो ङम् पूर्वपदान्तनकारस्तस्य परादित्वेनाजादिपदत्वाज्ञ्ञापत्तिः । आद्ये ल्युडन्तस्य अन्प्रकृतिकशन्नन्तेन कर्मधारयः, अन्त्ये सुप्सुपेति षष्ठ्यन्तेन समास इति चेत्र । सिद्धान्तेऽपि दोषापत्तिसत्त्वेन सर्वसमाधेयत्वात् । प्रत्यासत्तिन्यायाश्रयणेनेष्टसिद्धेश्चेति भावः । अनन्त्यस्येति । तदनाश्रयणेनेदम् । ङुट इति । द्वित्वस्याप्युपलक्षणं, बहुनिमित्तकत्वस्य तत्र स्पष्टत्वादिति भावः । परादित्वमिति । उक्तरीत्या पूर्वादित्वमेव वाच्यमिति भावः । इद च गौरवाङ्गीकारे । तदनङ्गीकार आह—द्वे इतीति । अयं च प्रकाशकृत्सिद्धान्तः । पाक्षिकमित्यस्य वैकल्पिकमित्यर्थभ्रमवारणायाह—कार्येति । अभाव एवेति । न तु कदापि प्रवृत्तिरित्य-

सरला ।

यदीति । अनेनारुचिः सूचिता । तथाच "यदागमाः" इति परिभाषया आगममात्रे आगमिवृत्तिधर्मस्यारोपो भवतीति प्रतिपादकं "पदान्तमक्तः पदान्तग्रहणेन गृह्यते" इति प्रकृतसूत्रस्थं भाष्यमेकदेशिनः, 'सर्वेषाम्' इत्यत्र आम् प्रत्ययवृत्तिपदान्तत्वस्य सुडागमे आरोपे 'अपदान्तस्य' इति पर्युदासेन

ननु परमदण्डिनावित्यादौ अन्तर्वर्तिविभक्त्या पदत्वान्नुट् स्यादिति चेन्न ।

---

शब्दरत्नम् ।

मानामागमिधर्मवैशिष्ट्यमपि बोद्धव्यते इति तेन नकाराद्यवयवनस्यापि पदान्तत्वाण्णत्व निषेधसिद्धिरित्युच्यते तर्हि ह्रस्वात्परस्य ङमन्तपदस्याचि परे ङमुडित्येवार्थस्तथा सति स्यान्न प्रागुक्त, स्याच्चातिमहदनिष्टमिति । स्पष्ट चेदं सर्वं भाष्ये ।

भैरवी ।

तत्र हि –'दण्डिना' 'शकटिना' इत्यत्र ङमुड्वारणाय "पदादिग्रहणं कर्तव्यम्" इति वार्त्तिकस्य पदादित्यस्यानुवृत्तिम्प्रदर्श्य,' एवमपि परमदण्डिना परमकुठत्रिणेऽत्र प्राप्नोति" इत्याशङ्कायाम् "उत्तरपदत्वे चापदादिविधौ प्रतिषेध" इति वचनेन दोषम्परिहृत्य ' एवमपि पदादिस्यपूर्वं कर्तव्य, यद्धि तत्प्रकृत प्राक्सुपि कुत्सनादित्येतन्नत्त ' इति कथनानन्तरम् ' एवन्तर्हि ङम एवार्थं ङमुट् क्रियते, कथम् ? पदस्येति वर्तते, ङम इति च. नैषा पञ्चमी का तर्हि ? सम्बन्धषष्ठी, पदान्तस्य ङमो ङमुट् भवतीति ह्रस्वादुत्तरस्य अचीति, यदि ङम एव ङमुट् क्रियते कुर्वन्नास्ते "रषाभ्यां नो णः समानपदे" इति णत्वम्प्राप्नोति, पदान्तस्येति प्रतिषेधो भविष्यति, पदान्तस्येत्युच्यते, नैष पदान्त, पदान्तभक्त पदान्तग्रहणेन ग्राहिष्यते" इत्युक्तम् । णत्वम्प्राप्नोतीति । आगमस्येत्यादि । अत्र पदान्तभक्त इत्यादिना उक्त परिभाषार्थो ध्वनित । अनुवृत्तस्य पदस्येत्यस्य विशेष्यत्वाभिप्रायेण मूले व्याख्या कृता । तथा सति ह्रस्वादिति प्राधान्यात्पदस्य विशेषण स्यादेव, ङम इति षष्ठ्यन्तमपि तस्य विशेषण स्यात् । एव सति यादृश सूत्रार्थ सम्पन्नस्तमाह—तर्हि ह्रस्वात्परस्य पदस्येति । ङमन्तस्येति शेष । तथा सति—पदस्य विशेष्यत्वाङ्गीकारे सति । न प्रागुक्त । शङ्कितकृत । महदनिष्टमिति । अस्ति परात्मा, देवदत्त ! रामानिति वद' इत्यादावतिव्याप्ति, कुर्वन्नास्ते सन्नच्युत इत्यादावव्याप्ति स्यादित्यर्थ । तथा च लक्ष्यानुरोधान्मूलोक्त एवार्थ कार्य । सर्वमिति । शङ्कासमाधानावसरोक्तम् ।

भावप्रकाश ।

थ । एतेनाथमानात्वबेन ज्ञानगौरवसहनानौचित्यमतो "ङेऽथिह्रस्वान्ङम " इति न्यासे मानाशयवके सामर्थ्ये प्रकाशकृत इति ख्यञ्जनकृतप्रयासो निष्फल इति सूचितम् । यदीत्यस्योप्यत इत्यनान्वयो ननु बोध्यत इत्यत्र । एव च मात्रार्थे ङिद्वा वत्वभ्रम कार्य इति बोध्यम् । अपि प्रसिद्धार्थसमुच्चायक । अयभाव –आगमी येन येन धर्मेण गृह्यते तद्गुणीभूतागमानामपि तेन ग्रहणं, यथा येन गृह्यते तेन तद्विशिष्टस्य ग्रहणमिति च तदर्थ । प्रकृतसूत्रभाष्यमेवात्रार्थे मानमिति । इतिर्हेतौ क्वचिदेत स्थाने वेनेति पाठ । नकाराद्येति । तस्यावयवेत्यर्थ । नस्यापीति । आगमनस्यापीत्यर्थ । साहचर्यपर्यवसितेन वाचनिकावयवत्वेन वर्णस्य यवर्णं कथमवयव इति न शङ्क्यम् । इय च सुम्विधिसामर्थ्यादनित्या । तेन महारेत्यादौ न दोष । तत्तो वर्णग्रहणे एवाप्रवृत्तिरिति तु न, प्रकृतसूत्रे मानेमुक सूत्रे च भाष्ये तत्र संचारितत्वादित्यन्यत्र स्पष्टम् । एतेनानेन न्यायेन समुदायस्य पदान्तत्वेऽपि केवलागमनस्य तत्त्वाभाव, नत्व तु तस्यान्त्यस्यैवेत्यपास्तम् । अनुवृत्तस्य पदस्येत्यस्य मूलाभिमतविशेष्यत्वाभिप्रायेणाह–तर्हीति । उक्तरीत्या पूर्वादिवत्स्वीकारे मूलोक्त दोषाभावे सतीत्यर्थ । ह्रस्वादिति पदस्य विशेषण प्राधान्यात्, एव ङम इति षष्ठ्यन्तमपि । आवृत्तौ पदेत्यनुवृत्तौ च मानाभाव इति भाव । तथासतीति । तस्य विशेष्यत्वाङ्गीकारे सतीत्यर्थ । एतेन सान्निध्यात् ह्रस्वादिति ङम एव विशेषणमिति ' 'तर्हि इत्यादि चिन्त्यमित्यपास्तम् । प्रागुक्त इति । मूलाशयवर्णने शङ्कोक्त इत्यर्थ । महदनिष्टमिति । अस्ति प्रत्यङ्ङात्मा, सुगुणणीश इत्यादावेवानिष्ट स्यादिष्टस्थले नैव स्यादित्यव्याप्त्यतिव्याप्तिरूपमित्यर्थ । एव च मूलकृदुक्तमवश्यमङ्गीकार्यमिति भाव । सर्वमिति । शङ्कासमाधानावसरोक्तमित्यर्थ ।

सरला

"आदेशप्रत्यययो" इति षत्वाप्रवृत्त्यापत्ते । मन्तत्वस्य चरमवर्ण सत्त्वेऽपि "यचोऽन्त्यस्य" इति सूत्र अन्त्यपदोपादानसामर्थ्यादलसमुदायेऽपि तत्त्वस्य सत्त्वेन आम्प्रत्यये पदान्तत्वस्य सुकरत्वात् ।

"उत्तरपदत्वे चापदादिविधौ" इतिप्रत्ययलक्षणप्रतिषेधात्। अत एव परमवाचौ, परमगोदुहौ, परमलिहावित्यादौ कुत्वघत्वढत्वादीनि न। यत्तु प्राचा "ङमि च पदे" (पा०सू०८।३।२१) इत्यतः 'पदे' इत्यनुवर्त्याजादेः पदस्येति व्याख्यानाद् क्रुमुड् नेत्युक्तं, तदनेन प्रत्युक्तम्। इहैव नलोपं वारयितुमुक्तरीतेरेव तेनाप्यनुसर्तव्यत्वात्॥

---

शब्दरत्नम्।

प्रत्ययलक्षणप्रतिषेधादिति। इदं च प्रकृतसूत्रे भाष्ये स्पष्टम्। अनुसर्त्तव्यत्वादिति। यदि तु स निषेधो "अपदादिविधौ" इति पर्युदासेन पदान्तत्वनिमित्तके विधावेवेति "न लुमता–" (पा०सू० १।१।६३) इति सूत्रे भाष्ये स्पष्टम्। किं चोत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तिरत एव माषकुम्भवापेनेत्यादौ "पदव्यवायेऽपि" (पा० सू०

भैरवी।

मूले–अत एव—"उत्तरपदत्वे" इति वचनस्वीकारादेव। तत्—तादृशं व्याख्यानम्। अनेन—उत्तरपदत्व इति वचनस्यात्र सञ्चारणेन। इहैव—परमदण्डिनावित्यादावेव। अनुसर्तव्यत्वादिति। एतेन वास्तविकम्परिभाषाश्रयणस्येदन्नलोपात्मकरूपणापत्तिवारणमेव फलन्न तु ङुट्प्राप्तिर्नलोपम्प्रति ङुटो ऽसिद्धत्वादिति ध्वनितम्। नन्वेवं सति यदि प्रतिपदोक्तो निपात ङमिति गृह्यते तर्हि उत्तरार्थं पदग्रहणमिति "ङमि" इति सूत्रस्थपरमगुरुविरोधः, पदे इत्यस्य सम्बन्धं विनापि निर्वाहस्य मूले कृतत्वादिति वाच्यम्, तदर्थं पदपदमित्यस्योत्सम्पादनार्थमन्वयोक्तमित्याशयात्। वस्तुतस्तु पदस्येत्यधिकारान्ङम इति पञ्चम्यन्तेन सामानाधिकरण्याद्विभक्तिविपरिणामेनोक्तार्थस्य लाभात्तेदप्रयोजनं, किन्तु विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्व एव यस्मिन्विधिरिति परिभाषाप्रवृत्त्याऽजादेः पदस्येति व्याख्यानभङ्गार्थमेव पदे इत्युत्तरार्थमित्युक्तम्। अथोत्तरपदस्य इति परिभाषया निर्वाहे ऽजादेः पदस्येति व्याख्यानमिष्टप्रयोजनमिति वाच्यम्, 'माषकुम्भवापेन' इत्यत्र 'पदव्यवायेऽपि' इति निषेधस्य सिद्ध्यर्थमुत्तरपदस्य कार्यित्व एव तस्याः परिभाषायाः प्रवृत्तिरित्यस्य स्वीकारात्। एवमन्योऽपि तत्र विशेष इत्याह—यदि त्विति। कार्यित्व एवेति। अथ पदान्तत्वनिमित्तक इति पूर्वोक्तार्थेन माष-

भावप्रकाशः।

अनुसर्तव्यत्वादितीति। एतेन नलोपं प्रति ङुटोऽसिद्धत्वान्ङुट् स्यादिति मूलोक्तं चिन्त्यमिति खण्डनकारोक्तमपास्तम्। प्रकाशोक्तस्यानुवादेनादोषात्। तदेतद् ध्वनयन् इहैव इति भाव इत्याद्यनुक्त्या इतरथाकाङ्क्षत्वेन प्रतीयमानत्वादन्यथा कर्त्विं विहाय सिद्धान्तरीत्या पूरयति—यदि त्वित्यादि।

सरला।

पदान्तत्वनिमित्तके इति। तेन 'परमवुचौ' इत्यादौ अचाविस्य पदान्तत्वनिमित्तकत्वेन न प्रवृत्तिः। ङमुड्विधेस्तु पदान्तत्वनिमित्तकत्वाभावःस्पष्ट एवेति न तत्र प्रत्ययलक्षणनिषेधप्रवृत्तिरिति तात्पर्यम्। कार्यित्वे एवेति। न च 'पूर्वदण्डिप्रियः' इत्यादौ दण्डिनो नलोपकरणाय "उत्तरपदत्वे" इत्यस्याप्रवृत्त्यर्थं मध्यमपदत्वानाक्रान्तमेवोत्तरपदं गृह्यते, तथाच 'माषकुम्भवापेन' इत्यत्र कुम्भेत्यस्य मध्यमत्वाक्रान्तत्वाद् "उत्तरपदत्वे" इति निषेधाप्रवृत्त्या णत्वनिषेधस्य सुलभत्वेन कार्यित्वनिवेशो विफल इति वाच्यम्। यद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वं मध्यमपदत्वमिति परिष्कारेणादोषात्। वैशिष्ट्यं च स्वघटकार्थवदव्यवहितपूर्वत्व स्वघटकार्थवदव्यवहितोत्तरत्वं स्वघटकत्वमेतत्त्रयसम्बन्धेन। तथाहि, 'पूर्वदण्डिप्रियः' इत्यादौ पूर्व सु दण्डिन् सु प्रिय सु एतद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा दण्डिन् इत्यस्य चिकीर्षिता तद्वृत्तिघटकप्रियाव्यवहितपूर्वत्वस्य तद्वृत्तिघटकपूर्वाव्यवहितोत्तरत्वस्य तद्घटकत्वस्य च सत्त्वाद् दण्डिन् इति निरुक्तमध्यमत्वाक्रान्तमेवेति न तत्र निषेधः। माषकुम्भवापेन इत्यादौ तु वृत्तिद्वयम्। तत्र कुम्भपदे माष आम् कुम्भ सु इत्येतद्वृत्तिघटकाव्यवहितपूर्वत्वस्याभावात् पूर्वोक्तवृत्तिवैशिष्ट्यम्।

समः सुटि [ पा० सू० ८।३।५ ] ॥ यद्यपि मोऽनुस्वारेण सिद्धं तथाप्यनुनासिकत्वत्रिसकारकत्वसिद्ध्यर्थमिदम् ॥

---

शब्दरत्नम् ।

८।४।३८ ) इति निषेधसिद्धिरित्युच्यते, तदा प्राचीनोक्तमजादेः पदस्येति व्याख्यानमेव शरणम् । स्पष्टं चैवं व्याख्यानं प्रकृतसूत्रे "उजि च पदे" ( पा०सू०८।३।२१ ) इत्यत्र च भाष्ये । तेन निषेधेन सिद्धमिति प्रकृतसूत्रभाष्योक्तिस्त्वेकदेशिन इत्यास्तां तावत् ।

त्रिसकारकत्वेति । न च पुनर्द्वित्वेन तदपि सिद्धम् । लक्ष्ये लक्षणस्येति न्यायात् ।

भैरवी ।

[illegible]

शङ्कयम्, प्रत्यासत्त्या तत्समासीयमध्यमपदत्वानाक्रान्तत्वनिवेशेन माषकुम्भस्य वाप इति समासे कुम्भशब्दस्य पदत्वसिद्ध्यर्थं कार्यित्वनिवेशस्यावश्यकत्वात् । प्रत्यासत्तिफलन्तु "दधिसेचिशय" इत्यादावलुक्समासे सेचशब्दे कुत्वाभावः । नन्वेवमपूर्वदण्डिप्रिय इत्यत्रावान्तरतत्पुरुषीयमध्यमपदत्वानाक्रान्तत्वात्पुनरनुपपत्तिः, तत्समासप्रयोजकैकार्थीभावप्रयोज्यसमासीयमध्यमपदत्वनिवेशात् । नचैवंसति परमवाचेत्यादौ विशिष्टाभावादव्याप्तिरिति

भावप्रकाशः ।

निमित्तके इति । तत्पार्निके इत्युक्तौ तु परमवुषानित्यत्र मध्याद्वापत्तिरतस्तथा साङ्ख्यमविवक्षितम् । एवेन सुटि प्रवृत्तिव्यावृत्तिः । न हि मध्यावविधाविव अनुस्विधौ तदनेन निमित्तताऽस्तीति भावः । मनेसांसि । निरनुस्वारानुकरणम् । नन्वेवमपि कमन्त पदमित्युक्त्या निमित्तकोटौ पदान्तत्वस्य प्रवेशेनेष्टसिद्धिः । किञ्च प्रसज्यप्रतिषेधेनेष्टसिद्धिः । तदा हि प्रतिपदोक्तत्वासत्त्वदापोरित्येव तेन गृह्यतेऽतएव तत्र नातिप्रसङ्गः । अत एव नञ्द्वयाघटितवार्तिकैकवाक्यता, अत आह—किं चेति । अस्यार्थस्य यथाक्रमस्तथान्यत्र स्पष्टम् । एवेन प्रकृतलक्ष्यवत्तस्यापि व्याप्तिरिति भावः । सिद्धिरिति । अन्यथा तस्य तत्र निमित्तत्वेन तत्प्रवृत्त्याऽनिष्ट स्पष्टमेवेति भावः । अजादेरिति । इत्यात्पदावयवक्रमः परस्येत्यादिः । एवेन कौमुदुक्तव्याख्यानव्यावृत्तिः । किं चानुवृत्तस्य वैयधिकरण्येनान्वयोपपत्तौ विभक्तिविपरिणामे मानाभावात् गौरवाच्च । अत एव षष्ठ्याः पञ्चम्यर्थे लक्षणेत्यपि न, कर्मणि द्वितीयेत्यादिनियमवैयर्थ्यापत्तेश्च । [illegible] च पदे इति अन्तपदवत् पदाधिकारस्य विशेषणत्वे ज्ञापकम् । अत एव [illegible] वा पदाधिकारस्य विशेषणत्वादिति प्रकृतसूत्रभाष्य सङ्गच्छते; तदाह—स्पष्टमिति । तेनेति । उत्तरपदत्वे चेति वार्तिकोक्तेनेत्यर्थः । आस्तामित्यङ्गीकारे । एतेनैवजातीयका रत्नाकरदण्ड्यादयश्चिन्त्या एवेति सूचितम् ।

समः सुटीत्यस्यो मानमिति प्रागुक्तशङ्कायां शङ्के—नचेति । न च मः सुटीत्येव सुवचम् । सनोऽ-

सरला ।

माषकुम्भ भस् वाप इत्याकारकवृत्तिवैशिष्ट्यस्य कुम्भपदे निरुक्तोभयसम्बन्धेन सत्त्वेऽपि [illegible] तद्वृत्त्यारम्भकसुबन्निमित्तकपदसंज्ञा चिकीर्षितेति कुम्भेत्यत्र प्रत्ययलक्षणत्वार्थम् उत्तरपदत्वे इति निषेधाप्रवृत्तये कार्यित्वनिवेश आवश्यकः । अत्रैवमपि "अतद्धिते" इतिवार्तिकप्रत्याख्यानाय पदे यो व्यवाय इति समर्थसमास आश्रितो भाष्ये । तथाच 'माषकुम्भवापेन' 'क्षीरपकुम्भेन' इत्यादौ फलभेदवारणाय पदपदं पदत्वयोग्योपलक्षणमित्यवश्यं वक्तव्यम् । अन्यथा "गतिकारकोपपदानाम्" इति सुबुत्पत्तेः प्रागेव समासेन आद्योदाहरणे पदे परतो यो व्यवायस्तस्याभावेन, अन्त्ये पदेन व्यवायस्याभावेनाऽऽरम्भप्रत्याख्यानयोः फलभेदो दुर्वारः स्यात् । तथाच 'माषकुम्भवापेन' इत्यादौ कुम्भेत्यत्र पदत्वयोग्यत्वस्य सत्त्वाण्णत्वनिषेध-

अत्रानुनासिकः [ पा० सू० ८।३।२ ] ॥ अयमधिकारो विधिर्वेति द्वैतम्। आद्ये ऽत्रग्रहणमनर्थकम्, अधिकारादेव रुप्रकरणलाभात्। तुशब्दस्त्वधिकारपक्षे परस्मात्कार्यिणो विशेषद्योतनार्थः—परस्य नित्यं रुत्वं, पूर्वस्य तु वाऽनुनासिक इति; विधिपक्षे व्यर्थः। वाग्रहणं स्पष्टार्थम्। "अनुनासिकात्पर–" ( पा० सू० ८।३।४ )

---

शब्दरत्नम्।

अत्र चेदमेव ज्ञापकं बोद्ध्यम् ॥

अनर्थकमिति। इदमुपलक्षणं प्रतिसूत्रमावृत्तौ गौरवं चेत्यपि बोध्यम्।

स्पष्टार्थमिति। अनेन तुग्रहणमधिकारपक्षेऽपि परस्य रुत्वम् पूर्वस्यानुनासिक इत्यर्थस्य स्पष्टं बोधनार्थं वाशब्दवदिति सूचितम्। विधिपक्षेऽत्रग्रहणं ■ एतद्रुप्रकरणे इत्यर्थस्पष्टार्थम्। वस्तुतोऽत्राधिकारत्वमेवोचितम्। "मतुवसो रु" ( पा०सू०८।३।१ ) इति सूत्रे

भैरवी।

वाच्यम्, मध्यमपदशब्देन तत्समासीयचरमपदपूर्व(त्वानाक्रान्त)स्य ग्रहणात् "अतद्धित" इत्यस्य प्रत्याख्यानाय पदव्यवाय इत्यस्य पदे व्यवाय इत्यर्थस्य करणेन माषकुम्भवापेनेत्यत्र वापशब्दस्य पदत्वसिद्ध्यर्थं कार्यित्वनिवेशस्यावश्यकत्वाच्च। नच पदपदस्य पदत्वयोग्यपरत्वं शङ्क्यम्, स्वशास्त्रसङ्केतितपदपदलक्षणापेक्षया शास्त्रान्तरसङ्केतितोत्तरपदलक्षणाया उचितत्वमित्याशयात्॥

ननु सूत्रेऽत्रग्रहणसत्त्वे रुप्रकरण एव सम्बन्धो ननु "ढो ढे लोपः" इत्यत्रेति लभ्यते इत्यनर्थकमित्यसङ्गतमत आह–इदमिति। उपलक्षणम् दोषान्तरस्यापीति शेषः। तदाह–प्रती[illegible]। इत्यर्थस्येति। सूत्रोपात्तविधेयसम्बन्धे सति निराकाङ्क्षप्रतिपत्तिर्भविष्यतीति भावः। विधिपक्षे मूलानुक्तमत्रग्रहणस्य प्रयोजनं स्वयमाह—विधिपक्ष इति। अत्र केचित् "यद्यप्युभयत्र पाणिनितात्पर्यमिति लभ्यते, तथापि विधित्वमेवोचितम्, सकृद्विधेयबोधकशास्त्रस्य व्यापारेणाकाङ्क्षाशान्त्या लाघवादिति" तत्रेत्याह—वस्तुत इति। परममूले रोरित्यस्यैतत्प्रकरणविधे-

भावप्रकाशः।

ष्यत्र सुट्परस्य मस्याभावादिति वाच्यम्। एतल्लाघवाभावात्, मात्रालाघवस्यासार्वत्रिकत्वाच्च। मान्तस्य पदस्य शब्दरूपस्य वा मस्यैव वा सुटि प्रत्याहारे रु. स्यादित्यर्थापत्तौ सुपुन् प्रशामो प्रशाम इत्यादौ रुत्वापत्तेश्चेति दिक्।

ननु रुप्रकरणादत्र "ढो ढे लोपः" इत्यादावननुवृत्तिं स्पष्टतया बोधयितुं तत्र रक्षे दोषमाह आह—इदमिति। दोषान्तरस्यापीति शेषः। तदाह—प्रतीति। अपिना विधिपक्षसमुच्चयः। इत्यर्थस्येति। स्वसूत्रोपात्तविधेयसम्बन्धेन नैराकाङ्क्ष्येणान्यत्रानन्वयादिति भावः। वाशब्दवदिति। गौरवमपीति मूल तत्र शेषः सूचितः। सूचितमिति। एतेन पूर्वविरुद्धमिदमित्यपास्तम्। तत्रार्थेऽतात्पर्यात् तस्याप्यत्रैव तात्पर्याच्च। मूले न्यूनतां परिहरति—विधीति। एवमुभयत्र गमकसत्त्वात्पाणिनेरुभयमभिमतमिति मूलतो लब्धम्। तत्र प्रक्रियाप्रकाशमतानुयायिरत्नाकरः—"विधित्वमेव युक्तं सकृद्विधिव्यापारमात्रेणा-

सरला।

द्धित्वा कार्यित्वनिषेधो विफल इति वाच्यम्, अस्तोश्यद्, परमश्वाशावट् च परमाद् तस्मादाचारक्विबन्तात् क्विपि "तितुत्र" इतीण्निषेधे 'परमाट्नि.' इत्यादौ ष्टुत्वनिषेधाय कार्यित्वनिवेशस्यावश्यकत्वात्। विस्तरस्त्वन्यत्र द्रष्टव्यः।

मूले—द्वैतमिति। द्वाभ्यामित द्वीतं तदेव द्वैतं स्वार्थिकः प्रज्ञादेराकृतिगणत्वादण्। द्वाभ्या प्रकाराभ्यामित्यर्थः। ततश्च विरुद्धधर्मद्वयप्रकारकज्ञानविषयः सन्देह इत्यर्थः। पूर्वस्येति। इदमुपलक्षणं रुप्रकरणीयविधेयाव्यवहितपूर्वस्य। तेन "समो वा लोप" इति लोपपक्षेऽपि अनुनासिकानुस्वारसिद्धिः। उदाहरणे—

इति ज्ञापकादेव सिद्धेः । न हि विकल्पं विना ऽनुनासिकाभावपक्ष इति सम्भवति । इदमेव ध्वनयितुं वृत्तौ तु वेति शब्दौ नोक्तौ ॥

अनुनासिकात् ( पा०सू० ८।३।४ ) ॥ ल्यब्लोपे पञ्चमीत्याह्—अनुनासिकं विहायेति । एवं च संसर्गवद् विप्रयोगस्यापि विशेषावगतिहेतुत्वादवत्साऽऽनीय-

---

शब्दरत्नम् ।

कृतयोः "वन उपसंख्यानं" "विभाषा भवत्-" इत्यनयोरुदाहरणे भाष्ये ऽनुनासिकाद्यनुच्चारणात् । विधित्वे तु तत्र प्रवृत्तिर्दुर्वारैव । अधिकारत्वे तूत्तरत्रैव प्रवृत्तिः । स्पष्टं चेदं वृत्ताविति तत्त्वम् ॥

ल्यब्लोपे इति । दिग्योगलक्षणा तु न, अत्रानुस्वारपरानुनासिकः पूर्वस्य तु वेति न्या-

भैरवी ।

यस्थानिन इत्यर्थः । तेन लोपस्यापि सङ्ग्रहः । इति सूत्रैकवाक्यतयोरिति । एतेन यदुक्तमत्रग्रहणस्य विधित्वपक्षे प्रयोजनन्तथाकल्पनेऽपि दोष एव । यद्यपि "वन उपसंख्यानम्" इति छान्दस-स्तथापि विभाषेति लौकिकमपाति तत्र दोष एवेत्याशय । उत्तरस्यैवेति । अत एवास्य सूत्रस्य 'मतुवसो." इत्यनन्तरम्पाठः कृतः ॥

पराशब्दस्य श्रवणेन दिग्योगलक्षणा पञ्चमीति भ्रान्तिवारणायाह—दिग्योगेति । इति न्या-सेनेति । नचैवन्न्यासे "आतोऽटि नित्यम्" इत्यत्राप्युभयसम्बन्धापत्ति. । नचेष्टापत्तिः, महा

भावप्रकाशः ।

-काङ्क्षाशान्त्या लाघवात् । अन्यदोक्तरीत्याविनिगौरवम्" इति, तदेनि ध्वनयन्नाह—यत्तुत इति । एवेनो-भयव्यावृत्तिः । रोरितस्यैतत्प्रकरणविधेयस्थानिन इत्यर्थः । एतेनैव व्याख्याने लोपादिपक्षेऽनुनासिका-दिकरणं तत्र चिन्त्यमिति खण्डनकृदुक्तिः परास्ता । सूत्रस्योदाहरणदानायाह—कृतयोरिति । छान्दस-प्रयोगसिध्यर्थमपि सूत्रादिप्रवृत्तेरिति भावः । ननु तत्सूत्रे पाठात् वनश्छान्दसत्वाद्वार्तिकस्य छन्द-स्येव प्रवृत्तिरतस्तत्र छान्दसत्वेनापि निर्वाहः सुकर इति न सर्वथा तद्विरोध., अत आह—विभाषेति । अस्य तत्र पाठेऽपि न छान्दसत्वं तत्प्रयोगस्योभयत्रेष्टत्वादिति भावः । तुल्यं चेति । एतत्प्रकरणस्यार्थ-कात्रग्रहणादिति भावः । उत्तरस्यैवेति । तस्यस्यैव तत्सदार्थत्वात् । अन्यथा पूर्वमेव पठेत् । न च विधि-पक्षेऽपि पूर्वत्रैव पाठ्येऽग्रेपाठसामर्थ्यात्तत्राप्रवृत्तिरिति वाच्यम्, ततो लाघवेन तत्सङ्गस्यैव युक्तत्वात् । इदमेव ध्वनयितुमुचितमिति प्रागुक्तम्, एव चागत्याक्तगौरवाङ्गीकार इति भावः । सूत्रद्वये भाष्यमाह-दाह—वृत्ताविति ।

इति न्यासेनेति । न चैवम् "आतोऽटि" इत्यत्रापि तथैवानुवृत्त्याऽनिष्टापत्तिः । इष्टापत्तिरेतु कर्तुं-

सरला ।

-"हरिवो मेदिन त्वा' 'भो भगो अघो' इत्यादौ ।

मूले विशेषावगतिहेतुत्वादिति ।

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥

इत्यत्र विशेषार्थनिर्णायकेषु विप्रयोगस्यापि गणनेन तस्यापि तत्त्वात् । अनवच्छेदे सन्देहे इति तद-र्थः । 'सवत्सा आनीयताम्' इत्यत्र वत्ससम्बन्धस्य धेनावेव सत्त्वेन यथा वत्ससंयोगेन धेनुरित्यर्थोऽवग-म्यते तथैव 'अवत्सा' पदस्य विप्रयोगेन धेनुरर्थोऽवगम्यते इति । प्रकृतेऽपि तथैव बोध्यम् ।

त्रामित्यत्रैव सम्भावितानुनासिकरगुणक एव उपस्थितत्वादाकाङ्क्षितत्वाद्यावधित्वेन सम्बध्यत इत्यभिप्रेत्याह—रोः पूर्वस्मादिति। अनुस्वारागम इति। आगमत्वं च परशब्देनैव लभ्यते "पूर्वौ तु ताभ्यामैच्–" (पा० सू० ७।३।३) इत्यत्र पूर्वशब्देनैचोरिवेति भावः॥

**विसर्जनीयस्य** (पा० सू० ८।३।३४)॥ खरीति। एतच्च मण्डूकप्लुत्या "खरवसानयोः" (पा० सू० ८।३।१५) इति सूत्रादनुवर्तते। नन्वनुस्वारस्यानच्त्वात्ततः परस्य द्वित्वं न स्यादेवेत्यत आह—अनुस्वारविसर्गेत्यादि। थकारोपरीति। यदि त्विकारोपरि पठ्येरन् तर्हि पय सु, यश सु, इत्यादौ इणः पर-

---

शब्दरत्नम्।

सेन सिद्धौ "अनुनासिकात्पर–" (पा०सू०८।३।४) इत्यस्य वैयर्थ्यापत्तेरिति भाव। परशब्देनैवेति। प्रसिद्धावेवकारः।

मण्डूकेति। एकदेशे स्वरितत्वप्रतिज्ञयेत्यपि बोद्धयम्। अत एवावसाने न स।

भैरवी।

इन्द्र 'इत्यस्मिन्नुदाहरणेऽनुस्वारानुपलम्भादिति वाच्यम्, एकदेशे स्वरितत्वप्रतिज्ञनेष्टसिद्धेः। अवधारणपरत्वे आगमलिङ्गस्य टित्त्वकित्त्वादेरभावे परशब्द एवागमलिङ्गमिति लभ्यते, तथासम्भवि, पूर्वशब्दस्याप्यागमलिङ्गस्य दर्शनादत आह—प्रसिद्धावेवेति।

नन्वेकयोगनिर्दिष्टानामिति न्यायेनावसानपदसम्बन्धोऽपि स्यादत आह—एकदेश इति।

भावप्रकाश।

मनर्हा, बर्हैर्यर्थ्यापत्तेः। महाँ इन्द्र इत्यादौ दीर्घादटीत्यस्येऽनेनैव तयो. सिद्धत्वात् छन्दस्यापाद्यमानरूपाभावात्पाक्षिकदोषाभावादिति वाच्यम्। छन्दस्यापाद्यमानरूपाभावेन प्रयोगनैयत्येन चैवमापादयितुमशक्यत्वात्। अत्रानुस्वारपक्षेऽनुनासिक इति व्याख्येऽश, समस्तोक्तावपि कदथानुरोधेनैकदेशे स्वरितत्वप्रतिज्ञैवेष्टसिद्धेश्च। कश्चिच्छाखायामनुस्वारपाठस्तु च्छान्दसत्वादयत्नेन वाच्यः केचित्तु वेदेऽपि विकल्पस्यैवावस्थितत्वात् तत्सूत्रमेव त्याज्यम्। एवं च न न्यासवकल्पनेति लाघवमिति न शङ्क्यमित्याहुः। एतेन चाग्रहणमावश्यकम्, अन्यथाऽनुनासिकात्परोऽनुस्वारः स्यात्। स्वप्लापपक्षम्यां मानाभावात्। न च परपद "पूर्वं पूर्वं" इत्यैतत्त्रिसूत्र्यर्थत्वेन चारितार्थ्यात्। "तस्मादित्युत्तरस्य" इत्यस्य तु न प्रासिद्धादेशविधावेव तत्प्रवृत्तेरत एव परश्चेति सार्थकम्। किं च पदान्तस्योपस्थित्याऽनिष्टापत्तेः। पश्चाद्विकल्पेऽपि स्थितौ [illegible] गमकम्। एवं च चाग्रहणं स्पष्टार्थमिति मूले चिन्त्यमिति रत्नाकरोक्तमपास्तम्। अवधारणार्थत्वे स्वरमन्यात्प्रसिद्ध्यवित्त्वाभावश्चात आह—प्रसिद्धाविति।

ननु मण्डूकानुवृत्तौ तस्यावसानेऽपि स्यात्। आक्षेपानुवृत्त्योस्तुल्यत्वादत आह—एकदेश इति। तत्कस्मादत—अत पूर्वेति। ननु तत्र संहिताधिकारादेव न तत्र सः, अवसानसंज्ञया संहितासंज्ञाया बाधात् म

सरला।

**परशब्देनैवेतीति।** पदावयवोऽनुस्वारो भवतीति तदर्थेन अवयवत्वावच्छिन्नविधेयताश्रयत्वेन तस्यागमत्वं लभ्यते इति भावः। एवञ्च "अथमागमोऽनवयव एव अवयवत्वे मानाभावात्" इति शेखरग्रन्थश्चिन्त्यः। अत एव 'महाँ इन्द्र.' इत्यादौ "ओमगे" इत्यनेन यत्व सिध्यति। अन्यथाऽनुस्वारविशिष्टस्यापदत्वेन यदागमन्यायेन ग्रहणाभावेन यत्व दुरुपपाद स्यादिति।

**एकदेशे स्वरितत्वेति।** "खरवसानयोः स" इति न्यासेनैव सिद्धे "विसर्जनीयस्य सः" इत्यस्यारम्भसामर्थ्यादत्रावसानपदसम्बन्धाभावाय एकदेशे खरपदमात्रे स्वरितत्वज्ञापनादित्यर्थः।

उक्तयुक्तिमूलको न तु वाचनिक इति प्रपञ्चितं शब्दकौस्तुभेऽस्माभिः। नन्वेवं मातुः कार्यमित्यादौ षत्वं स्यादिति चेत्? न, कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठेन

---

शब्दरत्नम्।

णादिलोपलक्षणत्वातिरिक्तविषयं, तेन तत्र स्थानिवत्त्वं भवत्येवेति "तस्य दोष–" इत्याद्यपि न वाचनिकमिति भावः। मातुः कार्यमिति। सिद्धान्तव्याख्यानेऽप्यत्र दोषः। तथा हि, सकारसन्निधावकारो नैव प्रत्ययः समुदायनिवेशितत्वात्प्रत्ययत्वस्येति तदादेशस्योरः प्रत्ययत्वाभावेन विसर्गस्य तत्सम्बन्धित्वाभावात्। यस्तुत्वे कृतेऽवशिष्टः सकारः प्रत्ययसञ्ज्ञकः, स लुप्त एव। न च "अन्तादिवच्च" (पा० सू० ६।१।८५) इत्यस्य पूर्वस्य परस्य समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रत्ययत्वादयस्ते एकादेशविशिष्टस्यापीत्यर्थात्पुर्ष्विस्यत्र प्रत्ययत्वस्य सुलभतया एकदेशविकृतन्यायेनो-

भैरवी।

अयञ्च प्रपञ्चितपदानुवादः। वस्तुतो "न पदान्त" सूत्रे द्विर्वचनादिग्रहणेन यनिघटिताभ्यो विदे वामान्त्रिपाद्याः प्रवृत्तिर्भवत्येव। अत एव 'अमो र्षारेपण' इत्यादिसिद्धिरिति स्फुटीभविष्यति। द्विर्वचनादिग्रहणन्तु न्यायसिद्धानुवादः। "तस्य दोषः" इति तु वाचनिकमिति बोध्यम्।

मूले—नन्वेवमिति। एवम्-प्रत्ययभिन्नस्येति रीत्या सामानाधिकरण्येन व्याख्याने। षत्व स्यादिति। विसर्गस्य प्रत्ययभिन्नत्वादिति भाव। अत्रैवमित्युपादानेन प्रत्ययपदस्य प्रत्ययसम्बन्धिनि लक्षणापक्षे नायन्दोष इति भ्रान्ति. स्यात्तन्निवारणायाह—सिद्धान्तेति। अकारः-उसोऽवयवाकार। समुदायनिवेशितत्वात्—अक्षिति समुदायपर्याप्तत्वात्। तदादेशस्य-अकारादेशस्य। अस्याकारादेशत्वेऽपि "द्वयोः षष्ठीनिर्दिष्टयोः" इति न्यायेन ऋवर्णादेशत्वमपीति रपरत्वस्य सिद्धिः।

"सर्वे सर्वपदादेशा" इति न्यायानुसारिणमाशङ्कां निराचष्टे—नचान्तादीति। प्रत्ययत्वेति।

भावप्रकाशः।

न्यायसिद्धानुवादोऽयमिति शास्त्रान्तराणां वतियुक्तानां त्रिपाद्यां प्रवृत्तिबोधनाय नपदान्तेत्यत्र द्विर्वचनादिग्रहणवत्। तत्फलं स्वमी धीरपेणेत्यादिनानुपदमेव स्फुटीभविष्यति। इद [illegible] वाचनिकमेव। योगविभागस्तु भाष्ये न दृश्यते। अत एव सिद्धान्ते वार्तिककृतापि "नलोप." इति सूत्रे च सूत्रकृता। भाष्योक्तिस्तु कौस्तुभानुसारिणी। स [illegible] चिन्त्य एवेति बोध्यम्। तद्ध्वनयन्नाह—इतिभाव इति। अन्यथेति बोध्यमित्युचितमिति दिक्।

यत्तु कस्कादिषु भ्रातुष्पुत्रशब्दग्रहण ज्ञापकमेकादेशनिमित्तात्षत्वप्रतिषेधस्येति भाष्योक्तं ज्ञापक मूलोक्तपक्षसाधकम्। अन्यथा एकादेशस्य परादिवत्त्वेन ग्रहणात्प्रत्ययसम्बन्धतया तत्सम्बन्धित्वेन विसर्गस्य षत्वाप्राप्त्या तदसंगतिः स्पष्टैव। लुप्यतेऽत्र प्रत्यय इति भाष्यमुपादाय सकारसन्निधावनेन प्रत्ययत्वं [illegible] लब्ध समुदायनिष्ठत्वात्तस्येति कुतस्तदादेशे तत् षत्वे कृतेऽवशिष्टस्सस्तु प्रत्ययसञ्ज्ञोऽपि लुप्त इति भाव इति कैयटोक्त [illegible] चिन्त्यम्। तत्सन्निधौ तथात्वेऽपि तस्मिन् लुप्तेऽवशिष्टस्य सम्भावनया प्रत्ययत्वानपायात्। अन्यथा यातिरित्यपि न स्यात्, वरेग्रहणं चानर्थकमापद्येत। तस्मादेकांशस्य परादिवत्त्वेन ग्रहणादुर इत्यस्य प्रत्ययत्व दुर्वारमिति रत्नाकरः। यद्यपि मूलोक्तपक्ष एवोक्तभाष्यसम्मतस्तथापि प्रत्येक सयोगसञ्ज्ञेति दश्वदफलः। वैयधिकरण्यपक्षस्तूक्तरीत्या आवश्यक एवेति दण्डी च। तदुभयमप्ययुक्त, फलत्वे सम्भावनया तदाश्रयणेऽप्यत्र षत्वे तदभावात्, एवमप्यन्तवत्त्वस्य त्रिपाद्यामप्रवृत्तेश्च, वक्ष्यमाणरीत्याऽस्य सफलत्वाच्च, तथा वैयधिकरण्यानाश्रयणाच्च। तदेतद् ध्वनयन्नाह—सिद्धान्तेति। लक्षणया सामानाधिकरण्येऽपीत्यर्थः। दोषः। षत्वापत्तिः। यस्तुत्वे इति। उत्वस्येत्यर्थः। यदागमा इति न्यायेनेति भावः। कैयटोपरि नारायणरत्नाकरोक्तं दोषमुद्धरति–नचान्तेति। मुलमतेति। रात्सस्येति उत्वस्यासिद्धत्वात्

ङसिङसोरत उकारात्परस्य षत्वं नेति ज्ञापनात् । एवं च 'अप्रत्ययस्य' इत्येतदपि

शब्दरत्नम् ।

रित्यस्य प्रत्ययतया न दोष इति वाच्यम् । त्रिपाद्या असिद्धत्वेन तत्रान्तवत्त्वाप्रवृत्तेः । स्थानिवत्त्वेन तु न निर्वाहः । उपात्तस्य स्थानिनो ऽकारस्य प्रत्ययत्वाभावात् । प्रत्ययसम्बन्धित्वं तु न स्थानिवत्त्वलभ्यमशास्त्रीयत्वात् । "सर्वे सर्वपदादेशा" इति न्यायेन मातृ असित्यस्य स्थानित्वेऽप्यसित्यस्य स्थानित्वालाभेनोसित्यस्य प्रत्ययत्वमलभ्यमिति । एतदेवाभिप्रेत्य प्रकृतसूत्रे "उरण् रपरः" ( पा० सू० १।१।५१ ) इति सूत्रे च भाष्ये उक्तम् "इह कस्मान्न भवति पितुः करोति, "अप्रत्ययस्य" इति षत्वं प्राप्नोति, अप्रत्ययविसर्जनीयस्येत्युच्यते, प्रत्ययविसर्जनीयश्चायं, लुप्यतेऽत्र प्रत्ययविसर्जनीयो "रात्सस्य" ( पा० सू० ८।२।२४ ) इति" । लुप्यतेऽत्रेत्यादेरयमर्थः—प्रत्ययविसर्जनीयत्वेन यस्तत्राभिमतः स लुप्यते न दृश्यते स्थानिनः प्रत्ययस्यैव लोपादिति बोध्यम् । ज्ञापनादिति । त्रिपाद्यामप्यन्तवत्त्वप्रवृत्तिज्ञापनद्वारेति भावः । अत एव 'अग्नी, भैरवौ ।

नवयवस्य प्रत्ययावयवतया तदादेशस्य विसर्गस्य तत्त्वसत्त्वेनेति शेषः । ननु स्थानिवत्सूत्रस्य प्रवृत्तिरुपपादितेति तेनोसित्यस्य प्रत्ययत्वम्भविष्यतीत्यत आह–स्थानिवत्त्वेनेति । अनुपात्तस्य स्थानिनो ऽकारस्याप्रत्ययस्येऽपि सकारनिष्ठप्रत्ययसम्बन्धित्वमतिदेशेन विसर्गेऽस्त्वित्यत आह–प्रत्ययसम्बन्धित्वमिति । मातृ असित्यस्येति । अस्मिन्पक्षे न्वसिति समुदायो नार्थबोधक इति स परित्यक्तः । एतदेव—उपपादितपक्षार्थसत्त्वमेव । अत्रैवकारेण कैयटेन "लुप्यते ऽत्र प्रत्ययः" इति प्रतीकमुपादाय सकारसन्निधावकारेण प्रत्ययत्वञ्च लब्धं समुदायनिष्ठत्वात्तस्येति कुतस्तदादेशे तत्, तस्मिन् कृते ऽवशिष्टस्सस्तु प्रत्ययसंज्ञोऽपि लुप्त इति भावः' इति यदुक्तन्तन्न युक्तमिति ध्वनितम् । सकारसन्निधावकारे यद्यपि न प्रत्ययत्वं तथापि तस्मिन् लुप्तेऽवशिष्टेऽकारे प्रत्ययत्वस्यानपायात् ।

ननु "रात्सस्य" इत्यनेन सकारस्य लोपो विधीयते, न तु विसर्जनीयस्येति "लुप्यतेऽत्र प्रत्ययविसर्जनीयो रात्सस्य" इति भाष्यस्य कथं योजनेत्यत आह—लुप्यतेऽत्रेत्यादेरिति । यः–विसर्जनीयः । प्रत्ययस्यैव–सस्यैव । ज्ञापनद्वारेति । एवञ्च मुख्यं ज्ञाप्यमिदमेव, षत्वन्नेति तु फलितार्थकथनमिति ध्वनितम् । अत एव–त्रिपाद्यामन्तादिवद्भावस्य प्रवृत्तिस्वीकारादेव ।

भावप्रकाशः ।

सलोपे सतीति शेषः । न दोष इति । विसर्गस्य प्रत्ययावयवत्वान्न षत्वापत्तिरित्यर्थः । तत्रान्तेति । कर्त्तव्ये इति शेषः । तत्राप्रवृत्तेरित्यर्थः । आन्तादिवत्त्वाप्रवृत्तेरितिपाठस्तु सुगम एव । तदुक्तमेव खण्डयति—स्थानीति । अस्य तत्रापि प्रवृत्तेरिति भावः । उपात्तस्येत्युक्तिफलमाह—सर्वे सर्वेति । इत्यस्येत्येकवचनेन समुदायस्य स्थानिना सूचिता । तदाह—असित्यस्येति । इतिर्दोषप्रतिपादकग्रन्थसमाप्तौ । एतदेवेति । अन्ययोक्तरीत्या तदसङ्गतिः स्पष्टैव । लुप्यतेति । अर्थे तात्पर्यं न त्वानुपूर्व्यामिति भावः । नन्वेतद्भाष्यस्योक्ततात्पर्यकत्वेऽपि 'प्रत्ययविसर्जनीयो रात्सस्येति' इत्यत्र तदवयवस्तद्रूपो वेत्यर्थद्वयस्य सम्भवेऽपि श्रूयमाणविसर्जनीयस्योक्तरीत्या तदनवयवत्वाल्लोपाप्रसक्तेश्च लुप्तस्याविसर्जनीयत्वाच्च भाष्यमसङ्गतमेवात आह—लुप्यते इति । प्रत्ययविसर्जनीयत्वेनेति । तत्स्थानिकविसर्जनीयत्वेनेत्यर्थः । तत्स्थानिकत्वेनेति यावत् । यः—विसर्जनीयः । प्रत्ययस्यैव—सस्यैव । अतएव लुप्यतेऽत्र प्रत्ययो रात्सस्येतीति पाठैकवाक्यता भवतीति भावः । इत्येति बोध्यमितिपाठः । ज्ञापनेति । एतेन मुख्यं ज्ञाप्यमिदमेव, षत्वाभावस्त्वार्थिक इति मूलोक्तज्ञापनादित्यस्यार्थिकबोधनादित्यर्थः सूचितः । एव चोसित्यस्य प्रत्ययतया तत्सम्बन्धित्वसत्त्वेन तद्भेदाभावे ऽन्यत्र षत्वाभावः स्वस्मिन् चारितार्थ्ये च युक्तमेवेति भावः । यथाश्रुतार्थ-

व्यधिकरणमेवेति हरदत्तेनोक्तं नातीवादर्तव्यम् ।

मातुरिति । अत्र हि "ऋत उत्" ( पा० सू० ८।१।१११ ) इत्येकादेशशास्त्रं

---

शब्दरत्नम् ।

क्षीरपेय' इत्यादौ मोत्वणत्वे सिद्धयतः । अत्रैकारस्याद्सम्बन्धित्वं पे इत्यस्यैकाजुत्तरपदत्वं चान्तवद्भावाधीनमिति बोध्यम् । व्यधिकरणमेवेति । प्रत्ययस्य सम्बन्धी यो विसर्गस्तस्य नेत्यर्थ इति तद्भावः । अगत्या च वाक्यभेदाऽसमर्थसमासवैयधिकरण्यान्वयरूपदोषत्रयसहनमिति तदभिमानः । नातीवेति । वैयधिकरण्यान्वयफलस्य कविभिः कृतमित्यादेः प्रत्ययसम्बन्धिभिन्नस्य विसर्गस्येत्येवं लक्षणया सामानाधिकरण्येनापि संग्रहसम्भवादिति भावः । व्याख्यादर्शोक्तसामानाधिकरण्ये तु लक्षणातोऽपि तदादराभावादतो-

भैरवी ।

एवञ्चोर्सित्यस्य पादिवद्भावेन प्रत्ययतया सकार गतेऽप्युरित्यस्य स्थानिवद्भावेन प्रत्ययतया तदादेशस्य विसर्गास्तयोरित्यस्यापि प्रत्ययत्वमिति विसर्गे प्रत्ययावयवत्वमर्थादेव लब्धमिति तदानयनार्थमतिदेशापेक्षेति भावः । एकाजुत्तरपदत्वमिति कर्मधारयः । अधीनमिति । ननु स्थानिवद्भावेन, अशास्त्रीयत्वात् । एतेनान्तादिवत्सूत्रं स्थानिवद्भावेन गतार्थमिति प्राचोक्तमपास्तमिति सूचितम् । 'पे' इत्यस्यैकाच्त्वं यद्यपि स्वतः सिद्धं तथाप्युत्तरपदत्वस्याशास्त्रीयत्वेन तल्लाभादित्यसुक्तम् । हरदत्ताभिमतं वैयधिकरण्यमुपपादयति—प्रत्ययस्येत्यादिना । अगत्या—'कविभिः कृतम्' इत्यादौ गत्यन्तराभावेन । अभिमान इति । प्रत्ययपदस्य लक्षणया प्रत्ययसम्बन्धिबोधकत्वं तद्धर्मावच्छिन्नप्रतियोगिकभेदवतोऽभेदेन विसर्गविशेषणत्वम् । एतेन सर्वेष्टसिद्धौ क्लेशानुसरणं व्यर्थमिति भावः । लक्षणेऽपीति । स्वस्य तस्य च मते प्रत्ययपदम्प्रत्ययसम्बन्धिपरम् । एतावानेव विशेषः, स्वमते सामानाधिकरण्येन सम्बन्धः, तन्मते व्यधिकरण्येन । फलञ्च तुल्यम् । व्याख्यादर्शोक्तमते तु प्रत्ययपदस्य न लक्षणा, कवि-

भावप्रकाशः ।

स्यागकल्पाह—अतएवेति । वत्तापाङ्गीकारादेवेत्यर्थः । अत्रेति । समयेत्यर्थः । सम्बन्धित्वमिति । सान्त्वलिङ्गादसुत्वस्यैवेति न्यायेनाकारान्तेशास्त्रीयनिष्ठस्याभावत्वेनैकारान्ते अानयनेन तत्र तत्सम्बन्धित्वम् चोद् सिद्धमत एव पूर्वापरविरोधो नेति भावः । पे इत्यस्येति । तद्विशिष्टस्येत्यर्थः । अत एवाह—एकाजिति । सौत्रानुवादः । येन समासत्वम् । अन्यथाधिकमन्यूनत्वे स्पष्ट एव । यद्यप्येकाच्त्वमशास्त्रीय तथापि तस्य स्वत. सत्त्वेनोत्तरपदत्वस्यैव शास्त्रीयत्वेन तस्यान्यशास्त्रीयत्वेपि विशिष्टमशास्त्ररूपस्य तथा शास्त्रबोध्यत्वेन तन्निष्ठविशेष्यधर्मंतद्विशेषणधर्मस्यापि शास्त्रीयत्वेन विशिष्टानयन. निर्वाधमिति भावः । अधीनमिति । स्थानिवत्त्वं [illegible] न भावयत्यादेः सम्बन्धितस्याशास्त्रीयत्वात् शास्त्रीयादत्वस्योभयथाप्यस्थानिधर्मत्वाच्च । शास्त्रीयत्वं च विधेयतया शास्त्रबोध्यत्वमत एवैकाच्त्वादेर्न तत्त्वम् । अन्ये विशेषणतयाऽऽश्रयणात्, पक्षभेदेन वर्णयोः समुदायस्य वा स्थानित्वेन द्वयोरपि तद्धर्मत्वाच्चेति भावः । प्रसज्यप्रतिषेधोपि तस्येष्ट स्तद्वदित्याह—प्रत्ययस्येति । वैयधिकरण्य स्पष्टयितुं तथोक्तम् अन्यथान्यतरवैयर्थ्यं स्पष्टमेव । इत्यर्थइति । हरिमुनैकदेशार्थः । एव चैवकारेण मूलस्थेन तदनुवादान्तर्गतेन तत्रेदुपयस्येति वैयधिकरण्यान न्वयं तथा त्या मूलोक्तसामानाधिकरण्यव्यावृत्तिरत एव तत्रत्यापि सङ्गतिरिति बोध्यम् । अगत्येति । कविभिः कृतमित्याद्यनन्यथासिद्धयेत्यर्थः । अभिमान इति । लक्षणारूपपदैकदोषस्योक्तवाक्यत्रयदोषतो लघुभूतस्य सहनेन तथान्वयेनेष्टसिद्धया गतेरभावेन तत्त्रयसहन सुषुंवेत्युचितरनेन सूचिता । अपिः पर्युदासमसमुच्चायकः । तेन वाक्यभेदादिक न । एव चेष तदादर स्यानीत्युक्तिसफलेति भावः । लेशतोऽपीति । तदन्वयफलस्य कथमप्यसङ्ग्रहात् अत्यन्तादरनिषेधोऽनुचितः । तन्मते

विसर्गं प्रति परम्परया प्रयोजकम् । आकरे तु "एकादेशशास्त्रनिमित्तात्" इति प्रचुर पाठ । तत्र एकादेशशास्त्र निमित्त यस्य उकारस्य तस्मादित्यथ ॥

---

शब्दरत्न

घेत्यसङ्गतमेव स्यादिति । अनेनोक्तव्याख्याया एव स्वाभिमतत्व सूचितवानित्यलम् ।

**परम्परयेति** । एकादेशशास्त्रसम्पन्नरेफस्यानिकत्वेन विसर्गस्यैकादेशशास्त्रनिमित्तक त्वमिति भाव । **प्रचुर पाठ इति** । ओषधीस्कृधीत्यादौ शसैकादेशे "क करत्करति कृधि-" ( पा० सू० ८।३।५० ) इति षत्वनिवृत्तिश्च तत्फलमुक्तम् । मूल तु तस्य फलस्य "छान्दसत्वात "छन्दसि वा प्र-" ( पा० सू० ८।३।४९ ) इत्यत "इण ष" ( पा० सू० ८।३।३९ ) इत्यस्य निवृत्त्या ऽदोषाच्च पञ्चम्यन्तमेव पठितमिति दिक् ॥

भैरवी ।

भिरित्यत्र दोषावारणञ्चेति तदादराभाव इति भाव । अनेन-अतावेति कथनेन । अलमिति । उक्तदोषगणापत्त्या स्वाय व्याख्यवाधितेति सूचितम् ।

एकादेशशास्त्रमुकारादने निमित्त न तु विसर्गे इत्यकारादेशशास्त्रनिमित्तकस्येत्यनुपपन्नमत आह—एक देशेति । प्रचुर इति । इदुदुपध इतिसूत्र-'उरण रपर ' सूत्रयारेवम्दृशनम्भाष्य ऽस्ताऽत्यस्य प्र रत्वम् । तादृशपाठमाध्वप्रलन्त्वम्ययासिद्धमित्याह-ओषधीस्कृधीत्यादाविति । ओषधिशब्दाच्छसि पूर्वसवर्णदीर्घ शस रुकारस्य रुत्वविसर्गयो क करत्' इत्यस्य प्राप्ति । इति षत्वेति । इति सूत्रप्राप्तषत्वमित्यथ । तत्र 'इण ष ''स' इति च सम्ब ध्यत । क प्रभृतिषु परेषु अदितिश्छन्दसम्बन्धिभिन्नस्य विसर्गस्थानेन परस्य षा ऽन्यस्य तु स इति 'कस्कादिषु च ' इति सूत्रस्यैव तद्यथाप्राप्ति षत्वस्य । अन्यथा परमसूत्रे तस्य सूत्र- स्य सकारविधायकत्वेन व्याख्यातत्वादसङ्गति स्यात् । तत्फलम्-पञ्चम्यन्तपाठफलम् । वा ऽप्यर्थे । मूल—परमसूत्र । तस्य फलस्य छान्दसत्वादिति । मकारवर्जितस्य षकाराभावदर्शनादि षयप्रयोगस्य छान्दसत्वादित्यथ । छन्दसीति । एवञ्चात्र इत्यस्य कस्कादिषु च" इत्यतत्प यन्तमेव सम्बध्यते भवतीति तत्र सूत्रेण सकार एव विधीयत इति भाव । दिगिति । दिगथस्तु

भावप्रकाश

सूक्तरीत्या वाक्यभेदापत्त्या तथादरो निषेद्धु युज्यत इति भाव । असङ्गतमेव स्यादिति । तथावोक्त एव तस्याशय इति भाव । अत्र इति भाव इति पाठ । इष्टापत्ति खण्डयति—अनेनोक्तेति । अनेनेत्य कथनेन लक्षणया सामानाधिकरण्यस्यैवेत्यथ । सूचितवानिति । यद्यपि ध्वनिनापेक्षयोक्त प्रकार तथ पि स्वस्वरूपव्याक्तिनैव परोक्तिर्ये त न्यायेनान्यदीय लिखित्वा शब्दान्तरेण विच्छिद्य तथोक्त्या स्वीय मत ध्वनि- तवानित्यथ । अन्यथोक्तदोषगणापत्तिरुदाह—अलमिति । अस्याथस्तूक्त एव ।

**प्रचुर इति** । उक्तसूत्रद्वयादिभाष्यादावप्युक्तयोश्छाचत्वमिति भाव । इति षत्वेति । षत्वप्राप्त षत्वेत्यथ । क प्रभृतिषु परेषु परतोऽदितिश्छन्दसम्बन्धिभिन्नस्य विसर्गस्यैण उत्तरस्य षाऽन्यस्य तु स इति तदथ । कस्कादिषु चेत्यस्यैवेति भाव । तत्फलमुक्तमिति । पञ्चम्य तपाठफलमप्युक्तमित्यथ । चोऽप्यर्थोऽत्र सम्बध्यते एतत्तु कोरिति सूत्रभाष्ये इति शेष इति भाव । मूल त्विति । कौमुद्या मित्यथ । तस्य फलस्येति । तत्र षत्वाभावरूपफलस्येत्यथ । छान्दसत्वादिति । लक्ष्यस्य सघटितस्य छान्दस त्वादित्यर्थं । सिद्धत्वादिति शेष । इद चेण ष इत्यस्यानुवृत्तिमभिप्रेत्य । वस्तुतस्तैव न "कस्कादिषु च 'इत्यत्र तदनुवृत्तावप्यग्रऽनुवृत्तौ मानाभावादित्याह—छन्दसीति । अदोषाच्चेति । तन्निवृत्त्या तेन सत्वमात्रविधानेनेष्टसिद्ध षत्वापत्त्यभावाच्चेत्यथ । तथा च न ज्ञापकोपयोग इति भाव । दिगिति । तदथस्तु

सरला ।

पदग्रहणस्य साथक्यमित्युच्यते तथाऽपि सर्पिरादिशब्दस्थसकारस्यानिकविसर्गस्य अयुक्तचिपक्षेऽप्युक्तत्रि

मुहुःकामेति । इह "कुप्वो ≍क≍पौ" ( पा० सू० ८।३।३७ ) इति प्रवर्तते । वृत्तौ मुहुस्कामेति सकारः क्वचित् पठ्यते, तत्प्रामादिकमिति हरदत्तः ।

• द्विस्त्रिश्चतुरिति ( पा० सू० ८।३।४३ ) । इह द्वित्रिभ्यां सुजन्ताभ्यां साहचर्यात् चतुःशब्दोऽपि सुजन्त एव गृह्यते । कृत्वोऽर्थग्रहणं ज्ञापकम्—साहचर्यं न सर्वत्र व्यवस्थापकमिति । तेन "दीधीवेवीटाम्" ( पा० सू० १।१।६ ) इत्यत्र धातुसाहचर्येऽपि आगमस्येटो ग्रहणम् । उभयत्र विभाषा चेयम् । चतुरित्यस्य "इदुदुपधस्य-" ( पा० सू० ८।३।४१ ) इति प्राप्ते, इतरयोस्त्वप्राप्ते । न च तयोरपि "इसुसोः सामर्थ्ये" ( पा० सू० ८।३।४४ ) इत्यनेन सिद्धिः शङ्क्या ।

शब्दरत्नम्

प्रामादिकमिति । पदादित्वेन "सोऽपदादौ" ( पा० सू० ८।३।३८ ) इत्यस्या- प्राप्तेरिति भावः ॥

साहचर्यमिति । न च रामलक्ष्मणावित्यादौ दृष्टसाहचर्यसम्बन्धस्याभिधानियाम- भैरवी ।

पञ्चम्यन्तपाठो भाष्यसम्मत एवोचितः । अत एव "अपदान्तस्य मूर्धन्यः" इति सूत्रे-प्रकृत षग्रहणमनुवर्तते तेनैव सिद्धे मूर्धन्यपदद्विमर्थमिति विचारे "क्व प्रकृतमिणः ष" इति भाष्ये सङ्गच्छत इति षग्रहणस्य कःकरदिति सूत्रे सम्बन्धो भवत्येवेति । परममूले तु "कः करत्" इति सूत्रस्य सकारादेशमात्रविधायकत्वेन व्याख्यानं वृत्त्यनुसारेण । अत एव वृत्तौ अदितिः कर- दित्यत्र सकारादेश इत्युक्तम् । हरदत्तेन तु पूर्वोक्त-"अपदान्तस्य" इति सूत्रस्थभाष्यदर्शनेन "सकारादेश" इति प्रतीकमुपादाय षत्वस्याप्युपलक्षणमेतदिति व्याख्यातम् ।

दृष्टसाहचर्येति । लोकादावित्यादिः । साहचर्यसम्बन्धस्य—एकस्मिन्कार्ये परस्परसापेक्षत्वरू- पसम्बन्धस्य । नियामकत्वमिति । युगपदेवोभयोः प्रसिद्धार्थबोधकत्वमित्यर्थः । 'संयोगो वि- प्रयोगश्च' इत्यादिना हरिणा ऽयमर्थः सङ्गृहीतः । तदर्थस्तदुदाहरणानि चान्यत्र स्पष्टानि ।

भावप्रकाशः ।

पञ्चम्यन्तमेवोचितम् । अत एवापदान्तस्येत्यत्र "क प्रकृतम् ? इणः षः" इति भाष्यं सङ्गच्छते । "कः क- रोत्"इति सूत्रे सकारादेश इति प्रतीकमुपादाय षत्वस्याप्युपलक्षणमेतत् तथाचाश्रितविषेण इति हरदत्तो- ऽपि । किं च मतन्मतेऽप्यस्यासिद्धत्वेन "इणः षः" इति प्राप्तवारणाय तस्यावश्यकत्वम् । अत्र सत्व स्वतः स- त्वेनैकादेशशास्त्रनिमित्तकत्वाभावात् षष्ठ्यन्तपक्षे वारणं दुष्करमिति ।

अस्याप्राप्तेरिति । हरदत्तोक्तेरनुवादोऽयम् ।

दृष्टेति । लोकादाविति भावः । साहचर्यसम्बन्धस्येति । एकस्मिन्कार्ये प्रसिद्धपरस्परसापेक्षत्व- रूपसम्बन्धस्येत्यर्थः । नियामकत्वमिति । युगपदेवोभयोस्तत् । तेन नान्यान्याश्रय इति भावः । तदुक्तं हरिणा—संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।

अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ।

सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ॥

शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः" इति ।

एते संयोगादयो नानार्थशब्देषु शब्दार्थस्यानवच्छेदे संदिग्धे तद्व्याकरणद्वारा विशेषस्मृतिहेतवो निर्ण- यहेतव इत्यर्थः । उपस्थितानामनेकेषामेकतरमात्रार्थतात्पर्यनिर्णयद्वारा तन्मात्रार्थविषयकान्वयबोधजनका

सरला

पक्षे वा प्रत्ययभिन्नत्वेन तस्यानेन सर्वत्र षत्वप्राप्त्या "नित्यं समासे" इत्यनेन उत्तरपदस्थविसर्गस्य इविर्नोद्यायेति दिक् ।

( पा० सू० ८।३।४१ ) इति नित्यं ष।

व्यपेक्षाविरहेऽपीति। तिष्ठतु सर्पिष्कुण्डिकामानयेत्यादावित्यर्थः। व्यपेक्षायामिति। इह सर्पिष्कुण्डिकाया इत्यत्रेत्यर्थः। यत्तु पारायणिका आहुः— 'कस्कादिषु सर्पिष्कुण्डिकादीनां पाठ उत्तरपदस्थत्वेऽपि षत्वार्थः' इति। तद्भाष्यविरोधादुपेक्ष्यम्।

शब्दरत्नम्।

यतश्चेति। प्रतिपदोक्तस्य चेत्यपि बोद्धव्यम्। नित्यं ष इति। भाष्यप्रामाण्येनात्राव्युत्पत्तिपक्षस्यैवाङ्गीकारेण व्युत्पत्तिपक्षे प्रत्ययषत्वनिमित्तत्वात्कथं षत्वमिति न शङ्क्यम्। अत एव "चतुष्पाद्भ्यो ढञ्" ( पा० सू० ४।१।१३५ ) इत्यादिनिर्देशसङ्गतिः।

इत्यर्थ इति। अप्रत्ययान्तत्वं पूर्वं सूचितम्। तद्भाष्येति। "अनुत्तरपदस्थस्य" इति किम्, परमसर्पिः कुण्डिका" इति 'नित्यं समासे-' ( पा० सू० ८।३।४५ ) इति सूत्रस्थभाष्येत्यर्थः।

सङ्ग । न च सजूरित्यत्राव्याप्तिः "व्यपदेशिवद्भावोऽप्रातिपदिकेन" इति निषेधा-
दिति वाच्यम् । "येन विधि" इति सूत्रे शब्दकौस्तुभेऽस्य प्रत्याख्यातत्वात् ।

---

शब्दरत्नम् ।

तिपदिकेनापि तदन्तविधिप्रतिपादनं स्वमा पामहत्सत्युदाहृत च सङ्गच्छते । अतएव "स-
मासप्रत्ययविधौ-" इति निषेधानुवादकतया एव युक्तत्वाच्च । परत्वस्य ज्ञापकं "सपू-
र्वाच्च" (पा०सू०४।२।८७) इति सूत्रम् । अन्यथा 'पूर्वादिनिः' (पा०सू०४।२।८६)
इत्यत्र तदन्तविधिनैव सिद्धे किं तेनेति? प्रत्ययविधौ प्रतिषेध "इत्यस्यैव ज्ञापकमिति वक्तुं
शक्यम् । अत एव तदन्तविधिसूत्रभाष्ये 'समास-"इत्यादिनिषेधद्वयस्य न कथनमिति
बोध्यम् । प्रत्याख्यातत्वादिति । अस्याः फलाभावात् । "सूत्रान्ताट्ठक्" "दशान्ताड्ढ"
(पा०सू०५।१।४५) इत्यादावन्तग्रहणसामर्थ्येन व्यपदेशिवद्भावाप्रवृत्तिरिति भावः ।
ननु "एकगोपूर्वात्-" (पा०सू०५।२।११८) इत्यस्य केवलैकशब्दगोशब्दयोरप्रवृत्त्यर्थं
ऽऽवश्यकौ "सूत्रान्तात्-" (पा०सू०५।२।४४) 'दशान्तात्' (पा०सू०५।२।४५) इत्यर्थं
च । तत्रान्तग्रहणं तु प्रत्ययविधौ तदन्तग्रहणनिषेधात्तदन्ते प्रवृत्त्यर्थमावश्यकमिति न तत्सामर्थ्या-
द्व्यपदेशिवद्भावाप्रवृत्तिर्वक्तुं शक्या । न च भगवान्प्रत्याख्यातवान् "सूत्रान्तात्-" इत्यादौ विशे-

भैरवी ।

वचनस्य प्रवृत्तिः स्यात्तदा "पामत्वसा" इत्युदाहरणविरोध स्पष्ट एव । अस्य-ग्रहणवतेति
वचनस्य । अनुवादकता—तद्वाक्यस्य निषेधानुवादकतेत्यर्थः । युक्तत्वादिति । तत्सार्थबोधक-
त्वकल्पने लाघवस्य सम्भवेन युक्तत्वादित्यर्थः । नन्वस्मिन्वचने ज्ञापकत्वं वृत्तौ कृतमित्य-
स्यातिरिक्तत्वमेव युक्तमतमाह—परत्वस्येति । ज्ञापकमिति । उपक्रम उक्तमिति शेष । वस्तुत-
स्तु तस्य वार्तिकस्य जागरूकत्वाज्ज्ञापकमेव तत्सूत्रमेनेति बोध्यम् । इत्यस्यैवेति । एतेन ज्ञाप-
कत्वासम्भव एव ध्वनित । स्वकल्पनायाम्मानमाह—अत एवेति । अनतिरिक्तत्वादेवेत्यर्थः ।
अस्या —व्यपदेशिवद्भावो ऽप्रातिपदिकेनेति परिभाषायाः । प्रत्याख्यानहेतुमस्य स्पष्टयति—
फलाभावादिति । ननु केवलसूत्रादिशब्दाट्ठगादिवारणमेव फलमस्त्वित्यत आह—सूत्रान्तादिति । इति
भाव इति । कौस्तुभ इत्युक्त्यनन्तरम्प्रत्याख्यातत्वादिति कथनस्य भाव । एतेनारुचिर्ध्वनिता ।
तामेवाह—न वेकेत्यादिना । पूर्वोक्तमन्तग्रहणसामर्थ्यं खण्डयति—तत्र तेति । आवश्यकमिति ।
एतेन चारितार्थ्यं दर्शितम् । भगवानप्राप्तिवेति । 'येन विधिस्तदन्तस्य" इति सूत्रे पूर्वं वा-

भावप्रकाश ।

भावः । तस्या अतिरिक्तत्वमभ्युपेत्य मूले स हेतुरुक्तः । वस्तुतस्तदेव न लाघवात् मानाभावात्फलाभावा-
च्चेत्याशयेन हेत्वन्तर तत्रैवाह—अस्येति । ग्रहणवतेति निषेधस्येत्यर्थः । एवमग्रेऽपि । इति निषे-
धेति । इविवार्तिकस्थप्रत्ययांशे तन्निषेधे यथ । युक्तत्वाच्चेति अतत्त्वसकल्पनात् तत्सकल्पनायां
लाघवात् । एवं च शङ्कोत्थितिरेव नेति भाव । ननु फलाभावदावपि मानसत्त्वादनिरिक्तत्वं स्यादत
आह—परत्विति । ज्ञापकमिति । तद्वृत्तिकारादिभिरुक्तमिति शेष । तदुपपादयति—अन्यथे-
त्यादि किन्तेनेत्यन्तेन । अन्यथा—तत्परिभाषानङ्गीकारे । इत्यस्यैवेति । अन्यथा तेनैव
निषेधात्तस्यावश्यकत्वेन तज्ज्ञापकत्वासङ्गतिरेव स्यादिति भाव । अत्र कल्पनायां मूलमप्याह—अत
एवेति । तस्य तदनतिरिक्तत्वादेवेत्यर्थ । अप्रत्याख्याने ग्रहणवतेत्यस्य निर्मूलत्वापत्त । नच तत्सूत्र मूल-
त्वदुक्तपरिभाषया पूर्वग्रन्थेऽनापत्तरिति । प्रत्याख्यातत्वे हेतुस्तु न युक्त उक्तरीत्येत्यस्वरसादाह—फला-
भावादिति । ननु केवलसूत्रशब्दादेष्ठगादिवारणं तत्फलमत आह—सूत्रान्तादिति । इति भाव इति ।
सूचितामरुचिमाह—नन्वित्यादिना । केवलशब्दद्वन्द्वविशेषणम् । इत्यर्थं चेति । तावदिप्रकेरयस्यानु-
षङ्ग । तत्रान्तेति । तयोरित्यर्थ । आवश्यकमिति । तथा च चरितार्थ तदिति भाव । भगवानप्रत्याख्यातवान्

"व्यपदेशिवद्भावोऽप्रातिपदिकेन" इति, "ग्रहणवता–" इति च परिभाषाद्वयमपि

---

शब्दरत्नम् ।

षणविशेष्यभावव्यत्यासेन सिद्धे ऽन्तग्रहणसामर्थ्यं सुपपादमिति कौस्तुभोक्तरीत्या निर्वाहः "समासप्रत्ययविधौ–" इत्यादीनां सूत्रशब्दादेर्विशेष्यत्वे तात्पर्यग्राहकत्वस्य सत्त्वेन विपरीतस्य तस्य वक्तुमशक्यत्वात् । न चास्यां मानाभावः । "पूर्वोत्सपूर्वादिनिः" (पा० सू० ६।३।८६) इत्येकयोगेन सिद्धे पृथग्योगकरणस्य मानत्वात् । न च "इष्टादिभ्यः" (पा० सू० ६।३।८८) इत्यत्रानुवृत्त्यर्थं तथा पाठः, अत एवानिष्टीत्यादिसिद्धिरिति वाच्यम् । ज्ञापकपरभाष्यप्रामाण्येनानिष्टीत्यादिप्रयोगाणामनिष्टत्वात् । एकयोगेऽपि

भैरवी ।

तिकम्भाष्ये तस्य सूत्रस्य प्रयोजनप्रदर्शनपरमस्ति तत्र भयश्चासावङ्कुरश्चेति समासः । एतेन

[illegible]

व्यबोधः तेन 'भयङ्कुरः' 'अभयङ्कुरः' इति भवति, एवमाढ्यङ्करणं स्वाढ्यङ्करणमिति भवति । एवं सुभगादिषु बोध्यम् । तेनानुवृत्तस्य विशेषणत्वमुपात्तस्य विशेष्यत्वमित्युत्सर्गः । प्रत्ययविधाविति । निषेधस्यैतन्मात्रतात्पर्यग्राहको नतु स्वार्थतात्पर्यग्राहक इति कल्प्यते । एवञ्च सूत्रान्तादिति सूत्रे ऽन्तशब्दाभावेऽप्यनुवृत्तस्य प्रातिपदिकादित्यस्य तत्र विशेष्यबोधकत्वस्वीकारेण सूत्रान्तात्प्रत्यये सिद्धे ऽन्त ग्रहणन्तत्र व्यपदेशिवद्भावाप्रवृत्तौ ज्ञापकम्भविष्यतीति भावः । समाधानमाह—समासेत्यादिना । आदिपदेन 'ग्रहणवता" इत्यस्य सङ्ग्रहः । विशेष्यत्व इति । एवञ्च तत्रान्तग्रहणाभावे सूत्रशब्दान्तात् स्यादित्यन्तशब्दोपादानमावश्यकमेवेति भावः । विपरीतस्य—उपात्तस्य तत्र विशेषणत्वमित्येवंरूपस्य । तस्य—विशेषणविशेष्यभावस्य । नचेति । अस्य मानाभाव इत्यत्रान्वयः । अस्याम्—व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषायाम् । परोक्तम्दोषमुद्धरति—नचेष्टादिभ्य इत्यादिना । अत एव—सपूर्वादित्यस्यानुवृत्तेरेव । ज्ञापकपरेति । अस्य "येन विधि" इति सूत्रस्थेत्यादिः । एकयोगनिर्दि-

भावप्रकाशः ।

ष्विति । कृशादिपदबहुव्रीहिणा तेन भयशब्दस्य समाहारद्वन्द्वः । "तृतीयादिषु" इति पाक्षिकं पुंवत्त्वं तेन "भयेषु कृष्ण" "आढ्यसुभग" इति सूत्रोक्तस्य भयशब्दस्याढ्यादेश्चोपपदस्य ग्रहणम् । तयोरुपात्तयोर्विशेषणत्वमनुवृत्त दर्शयोर्विशेष्यत्वमिति भयङ्करः, अभयङ्करः, आढ्यङ्करणम् स्वाढ्यङ्करणमित्यादिसिद्धिः । "क्षेमप्रियमद्रेऽण् च" इत्यत्र तु वैपरीत्यमिति भावः । विशेषणेति । अनुवृत्तस्य विशेषणत्वमुपात्तस्य विशेष्यत्वमित्युत्सर्गः । अत्र दृष्टान्तदार्ष्टान्तिकयोर्व्यत्यासः प्रत्ययविधाविति निषेधार्थैतन्मात्रतात्पर्यकत्व न स्वार्थे इति भावः । सूपपादमिति । तथा च सा नैतद्यनि भावः । विध.विरयादेरिति पाठः । तात्पर्यग्राहकस्येत्यत्राभेदेनान्वेति इति केचित् । वस्तुतस्तु इत्यादीनामिति पाठेपि वेदाः प्रमाणमितिवदभेदान्वयसम्भवान्न क्षतिरिति बोध्यम् । तात्पर्यग्राहकत्वस्येति पाठे तु नोक्तशङ्कावीति बोध्यम् । आद्यपाठ एव युक्तः । अत एव बहुवचनासङ्गतिरपि नेति तत्त्वम् । आदिना मूलोक्तग्रहणवतेत्यस्य सङ्ग्रहः । विशेष्यत्वे इति । तस्यैचिछकत्वेन व्यत्यासस्यापि सिद्धत्वादितिभावः । एतेन विशेष्यविशेषणभावयोर्यथेष्टत्वादेव सिद्धौ ज्ञापकानपेक्षत्वेन त्वदुक्तिर्व्यर्थं "सपूर्वाच्च" इति सूत्रं मा स्त्विति आपन्न चेति मन्दोक्तमपास्तम् । तस्य तात्पर्यग्राहकत्वात् सूत्राशयवर्णने नास्तित्वयुक्तेरयुक्तत्वाच्च । तस्य–विशेष्यविशेषणभावस्य । एतावता स फलत्वमुपपाद्य समूलत्वमुपपादयति—नचास्यामित्यादिना । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्यत्रेत्यर्थः । भाष्योक्तं दोषमुद्धरति—नचेति । तथा पाठः—पृथक्पाठः । ज्ञापकपरेति । "येन विधि"

: प्रत्ययविधिविषयकमिति दिवउत्सूत्रे कैयटहरदत्ताभ्यामुक्तत्वाच्च । एवं च परम-

---

शब्दरत्नम् ।

तत्रैव स्वरितत्वबलेन तावत एवोत्तरत्रानुवृत्तौ बाधकाभावाच्च । व्यपदेशिवद्भावस्य प्रातिपदिके निषेधस्वीकारादेव "नान्तादसंख्यादेः–" ( पा०सू०५।२।४९ ) इति चरितार्थम् । अन्यथा पञ्चम इत्यादावपि व्यपदेशिवद्भावेन संख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेवेत्यवधेयमाह—व्यपदेशिवद्भाव इत्यादि । दिवउत्सूत्रं यत्रेति बहुव्रीहिणा तत्सूत्रघटिते पादे इत्यर्थः । एवं च "दिव उत्" ( पा०सू०६।१।१३१ ) इति सूत्रे हरदत्तेन "इन्द्रे च" ( पा०सू०६।१।१२४ ) इति सूत्रे कैयटेनोक्तमिति भावः । "येन विधिः–" ( पा०सू०१।१।७२ ) इति सूत्रे कैयटेन सूत्रोपात्तान्तादिशब्दविषयताऽस्येति वदता स्पष्टमेव प्रत्ययविधिविषयतोक्ता । "असमासे निष्कादिभ्य." ( पा०सू०५।१।२० ) इति सूत्रे भाष्ये कैयटे च

भैरवी ।

ङ्याप्प्रातिपदिकग्रहणेऽपि ... इत्यत्र एतां क्वचिदेकदेशोऽप्यनुवर्तते इति परिभाषामाश्रित्याह—एकयोगेऽपीति । तस्य परिभाषायां ज्ञापकान्तरमपि सूचयन्नित्याशयेनाह—व्यपदेशीति । तद्वैयर्थ्यम्—सूत्रवैयर्थ्यम् । एवञ्च सूत्रमार्थक्यन्तत्फलमिति भावः । खण्डनकारोक्तदोषमुद्धरति—दिवउत्सूत्रमिति । अन्तादिशब्दैरिति । यत्रैषामुपादानं तत्रैव व्यपदेशिवद्भावाप्रवृत्तिरित्यर्थः कैयटस्यापि सम्मत इति मूलोक्तं सप्रमा-

भावप्रकाशः ।

इति सूत्रस्थोक्तपमानाकारभाष्येत्यर्थः । एवं चाकरस्थात्तत्रानुवृत्तिर्नेति भावः । इदं च "एकयोगनिर्दिष्टानाम्" इति न्यायावष्टम्भेनोक्तम् । 'एकयोगनिर्दिष्टानामेकदेशोऽपि' इति न्यायाश्रयणेन तेषामित्यत आह-एकेति । तत्रैव-सपूर्वादित्यत्रैव एव । एकदेशे-वयोऽस्य प्राचामनुरोधेनैव । ज्ञापकान्तरं सूचयन्नुक्तार्थं द्रढयति—व्यपदेशिवदिति । निषेधस्वीकारादिति । तदर्थकपरिभाषास्वीकारादेवेत्यर्थः । अपिः समुच्चितसमुच्चायकः । तद्वैयर्थ्यमिति । सूत्रवैयर्थ्यमित्यर्थः । एतेनासंख्यादेरिति विशेषणसामर्थ्यात्तत्र तद्प्रवृत्तेः ज्ञापकत्वेन सा नेत्यपास्तम् । सूत्रवैयर्थ्यस्यैव सत्त्वात् । उत्तरीत्या सूत्रफलयोः सत्त्वेनावश्यकत्वाच्च । एव च कौस्तुभादिष्वियं एवेति भावः । खण्डनकृदाद्युक्तं दोषं खण्डयति-दिवउदिति । चरमार्थे । इतिमावहति मूचिशब्दयोरचिरं उपनयितुं मूलं योजयति—येनेति । तावीति । "स्तनान्ताद्ठक्" "वयान्ताट्ठक्" इत्यादिसूत्रस्थेत्यर्थः । आदिना पूर्वादिशब्दपरिग्रहः, ज्ञापकस्य सजातीयापेक्षत्वात् । अन्यथा सर्वत्र तस्य चेत्यादिनैव सिद्धेरिति भावः । ताऽस्येतीति । व्यपदेशिवदिति निषेधस्येत्यर्थः । स्पष्टमेवेति । प्रत्ययविध्य-त्र तेषामभावादिति भावः । नन्वेवं 'पञ्चम 'इत्यादावपि प्रागुक्तरीत्या निषेधास्यया तद्वैयर्थ्यापरिहारस्तद्विषयताप्यस्य वाच्या । अतएवान्तादीत्यनन्तशब्दवदादिशब्दोऽपि तेन प्रयुक्तः । एव च स न प्रभुरित्यर्थः । पूर्वादिशब्दस्य तूपलक्षणत्वेन ग्रहणं बोध्यम् । एव च तत्कैयटोक्तरीत्या न दृश्यते इतीदमयुक्तमत एवायं कैयटः, परिभाषेन्दुशेखरे सम्यक्त्वेन न लिखितोऽत आह-असमास इति अनयोः-मूलोक्तपरिभाषयोः । असमासग्रहणप्रयोजनकथनावसरे "आर्द्रगोपुच्छ" इत्यत्र तदन्तविधौ पारमगोपुच्छिकमित्यत्र ठक्प्रतिषेधाट्ठञ् फलमित्युक्त्वा तत्खण्डके विधौ प्रतिषेधः प्रतिषेधश्चायमिति भाष्ये उक्ता ध्वनिता च । तत्कैयटे स्पष्टमुक्ता चेत्यर्थः । एतेन तयोः सामान्यविषयत्वस्य सौरदेवेनान्यमतत्वेनोक्तत्वेन तदभिप्रायाः प्रवादोक्तिरिति । मूल चिन्त्यमिति खण्डनकृदाद्युक्तमपास्तम् । एवं च मूले कैयटहरदत्तेति नारुचिबोधकम् । एतेनात्रारुचिबीजं तु पारमगोपुच्छिकं गोपुच्छिकमित्यादावविष्टप्रत्ययानापत्तिः । आर्द्रगोपुच्छेत्यस्य पर्युदासतया प्रत्ययविधिविषयत्वात्प्रसज्यप्रतिषेधमाश्रित्य निषेधकत्वकल्पने तु स्फुटमेव गौरवमितिवदन्तो मान्याः प्राचामनुरोधेनेति ध्वनितम् । उक्तभाष्यादिविरोधापत्तेः । इयञ्च 'ग्रहणवता' इत्यनुवृत्त्या यया कयाचित् ग्रहणवता प्रातिपदिकेन स नेत्यर्थो ङ्याप्प्रातिपदिकग्रहणे एव, न तु प्रातिपदिकाप्रातिपदिकग्रहणे, तेनोगितश्चेत्यत्र न दोष इति "उगितश्च" इति सूत्रे एव भाष्ये स्पष्टम् ।

नामपि लाक्षणिकत्वाविशेषात् । अनर्थकत्वमप्युभयत्र तुल्यम् । रुविशिष्टानामेवा-
र्थवत्त्वात् ।

ननु रेरुकारस्यानुबन्धत्वाद्रेफमात्रं विसर्गस्य स्थानि, तथाच "अन-
ल्विधौ" इति स्थानिवद्भावो न स्यादित्याशङ्कयाह्—न ह्ययमिति । यथाऽग्रहीदि-
त्यत्र "ग्रहोऽलिटि" (पा०सू०७।२।३७ ) इति दीर्घस्य स्थानिवद्भावेनेट्त्वात् "इट
ईटि" ( पा०सू०७।२।२८ ) इति प्रवर्त्तते, एवमिहापि विसर्गस्य रुत्वाद्यत्वं प्रवर्त-
तेति भावः । तथा च स्थानिवत्सूत्रे भाष्यम् "विशिष्टं ह्येषोऽनल्माश्रयते इटं नाम"

---

शब्दरत्नम् ।

"रो रि" इति लोपे कृते एकदेशविकृतन्यायेन भो.शब्दत्वादन्त्यस्यौकारस्य यत्वापत्तिरिति
वाच्यम् । तेषामभिधाने पूर्वो रोरपूर्वस्य च रोरिति व्याख्यानेनादोषो बोध्यः । अत्र पक्षे
ऽघोशब्दान्तद्वन्द्वे षष्ठ्याः सौत्रो लुक् बोध्य ।

भैरवी ।

वार्तिकेन कृतत्वस्याप्यनुकरणमित्यर्थं, तयाचोभयोरपि संग्रहः । लोपे इति । यत्वासिद्धेति
शेष । अभिधाने इति । स्त्रीक्रियमाण इति शेष । एतेनाभिधानकल्पनयाऽत्र समाधानेऽपि
"भो राजन्" इत्यस्य दर्शनेनाभिधानकल्पनायाम्मानाभाव इति दर्शितम् । अपूर्वस्येति ।
अः पूर्वो यस्येत्यर्थ. । एवञ्च "रो सुपि" इति सूत्रस्थं रोरित्युभयत्र सम्बध्यत इति सिद्धम् ।
अत्र पक्षे—कृतत्वस्यानुकरणपक्षे । अन्यथाऽपूर्वान्तद्वन्द्वात्षष्ठीकल्पने क्वचिद्वैयधिकरण्येन
क्वचित्सामानाधिकरण्येनान्वयो दुर्घट स्यादितिभाव । अत्र पक्ष इति कथनेनायम्पक्षो
न युक्त इति ध्वनितम् । एवं सति वाक्यभेदस्य षष्ठ्याः सौत्रलुकश्च कल्पनायाङ्गौरवस्य
स्फुटत्वात् । परममूलोक्तपक्षे तु अशब्दान्तद्वन्द्वस्य पूर्वशब्देन बहुव्रीहिरिति न दोषद्वय
मिति भावः ।

भावप्रकाशः ।

लक्षणप्रतिपदोक्तपरिभाषानुकरणमिति परमार्थः। एतेनात्र टीकाकृद्वचने एकदेशोऽर्थे तदवतरणकत्वप्रयोग
नावतरणोक्तदोष इति युक्त चेदित्यादिना पक्षद्वयसमर्थनं चिन्त्यमिति खण्डनकृद्रत्नाकरोक्तं, तुल्यार्थास्तु
विकल्पे विनि सूत्रविरोध इतिमन्दोक्तं चापास्तम् । लोपे इति । यत्वासिद्धेति भावः । पूर्वेति ।
लौकिकेनेत्यर्थः । भो शब्दत्वादिति । सूत्रे तस्य निमित्तत्वेनोक्तत्वादिति भावः । एतेन तस्य तत्त्वेऽपि सा
न्यानुकृतभो.शब्दाभावेन तदनापत्त्या यथाश्रुतमूलसङ्गत्या भङ्क्त्वा व्याख्यानानौचित्यमिति मन्दोक्तमपा
स्तम्, तदुक्तेः । सान्तत्वस्य लक्ष्ये व्याप्यभावाच्च । सान्तत्वस्य सत्वेऽनिमित्तत्वाच्च । तेषामिति । यत्व
इत्यादिः । अभिधाने इति । आवश्यकत्वात्स्वीक्रियमाणे इति शेषः । तस्यानभिधानेऽपि भोराजन् इत्या
दीनामुपलभ्यमानत्वाद्दोषशादवस्थ्येन तदनभिधाने मानाभावादिति भावः । अपूर्वस्य च रोरिति । अश्च
अपूर्वं शब्दयोर्बहुव्रीहि. समानाधिकरणं तद्विशेषण तत्पूर्वस्य रोश्चेत्यर्थ. । एव च मूले रोरित्यस्य प्रागपि
सम्बन्ध.सूचितः । एतेनालोन्त्यपरिभाषयान्त्यस्येति वदन्तो रत्नाकरदण्डिप्रभृतयश्चिन्त्या एवेति सूचितम् ।
मूले तु अन्त्यस्याल इति तत्स्वरूपकथनं न तु परिभाषासंचार इति भावः । अत्र पक्षे मूलोक्तवाक्यभेदगौर
वाद् गौरवान्तरमाह—अत्र पक्षे इति । कृतत्वानुकरणपक्षे इत्यर्थ. । षष्ठ्या इति । ततः षष्ठ्या इत्यादिः ।
अन्यथा अपूर्वान्तद्वन्द्वे एकषष्ठ्या क्वचित्सामानाधिकरण्येन क्वचिद्वैयधिकरण्येनान्वयो न लभ्येतेति
भावः । तथा च पदचतुष्टय फलितम् । सौत्रइति । एतच्च सौत्रत्वस्य तुल्यत्वेऽपि वाक्यभेदोऽतिरिच्यतइति
भावः । परममूलोक्तपक्षे तु अशब्दान्तेन द्वन्द्वे पूर्वशब्देन बहुव्रीहिरिति नेद दोषद्वयमिति बोध्यम् । यथा-

इति । इतोऽपि हेतोर्धात्वङ्गे त्यादिपरिगणनमशुद्धमित्यवधेयम् । निपाता इति । "भोभगो–" (पा०सू०८।३।१७) इति सूत्रे निर्दिष्टाश्चादेराकृतिगणत्वात्तत्र बोध्याः । तथा च "विभाषा भवद्भगवत्–" इति वार्तिकं नाश्रयणीयम् । अन्यथा

---

शब्दरत्नम् ।

**अवधेयमिति** । यदि "ग्रहोऽलिटि" (पा०सू०८।२।१८) इति सूत्रे इट स्थानित्वेन निर्दिष्ट इति तत्रानल्विधिराश्रयणं प्रकृते तु विसर्गे रेफस्यैव स्थानित्वाद्वैषम्यम्, "अनल्विधौ" इत्यस्य स्थान्यलवृत्तिधर्माश्रये स्थानिमन्वन्यत्र वृत्तिधर्माश्रये च नेत्यर्थस्तत्र स्थान्यलूरेफवृत्तित्वस्य स्थानिवत्त्वेन दुर्लभमलविधित्वात् ; स्पष्टं चेद प्रकृतसूत्रे भाष्ये ॥

भैरवी ।

अवधेयमिति कथनेन ध्वनितमर्थं स्पष्टयति—यद्यपीत्यादिना । तत्र—"इट ईटि" इति सूत्रे । प्रकृते—"भोभगो" इत्यत्र । वैषम्यम्—अलाश्रयणम् । यथा प्रकृते ऽलाश्रयणन्तथोपपादयति—मनल्विधेति । तत्र—"देवाः सन्ति" इत्यत्र । दुर्लभमिति । एवञ्च सिज्लोपविधायकं यत् "इट ईटि" इति ततो ऽस्य वैषम्य स्पष्टम् ।

नवैवं हे रामेत्यादावपि स्थानिसकारवृत्तिसुत्वस्यादेशे लोप आगमनदुर्लभमिति कथं रूपद्वयमिति वाच्यम्, सान्तानिष्ठपदत्वस्यैकदेशविकृतन्यायेन 'सान्तस्य समुदायस्याकारान्तादेशः' इति "सर्वं सर्वपदादेशा" इति रीत्या समुदायादेशत्वकल्पनेन स्थानिवद्भावेन पदत्वस्य सुलभत्वात् । आवश्यकञ्च समुदायादेशत्वकल्पनम् । अन्यथा आदेशस्य लोपस्याभावरूपतया ऽर्थबोधकत्वासम्भवेन स्थान्यर्थाभिधानसमर्थस्यादेशत्वमिति प्रवादस्याक्षेपः स्यात् । नचैवमपि 'दीर्घाहो निदाघ' इत्यत्रादेशे सुप्त्वाभावेनासुपीति निषेधाप्रवृत्तौ रेफापत्तिरिति वाच्यम्, सावपि पदम्भवतीति पक्षाश्रयणेन हल्ङ्यादिलोपात्प्राक् तेन निषेधेन रत्वाभावे रु, ततो हल्ङ्यान्तस्याकारान्तादेश इति कल्पनया साधुत्वस्य सम्भवात् । यत्र ह्यभावरूपादेशस्तत्र ह्येवं कल्पना, यत्र तु भावरूपादेशस्तत्र तु श्रौतस्यान्यादेशभावभावायाल्विधित्वम् । अत एवानल्विधाविति चरितार्थम् । अन्यथा 'व्यूढोरस्केन' 'द्यौः' 'पन्थाः' इत्यादावपि समुदायादेशत्वकल्पनेनाल्विधित्वञ्च स्यात्, 'द्यौः' 'पन्थाः' इत्यादौ हलन्तत्वस्याशास्त्रीयत्वात्तस्यातिदेशासम्भवाच्च विशेषणतया ऽलाश्रयणस्य तावतापि सम्भवाच्च । नचैव

भावप्रकाशः ।

अत्रमूलाप्रसङ्गति ध्वनयितुमवधेयपदसूचितमर्थं पूरयति–यदीत्यादि । तत्र इट ईटीत्यत्र।प्रकृते–त्विति । भोभगोइत्यत्र विसर्गे । वैषम्यम् । अलाश्रयणम् । नन्वनल्विधाविति सामान्योक्त्या कथमिदं वैषम्यमत आह–अनलिति । अनयोः स्थानिवत्त्वस्योकार्थद्वयस्य च यथावश्यकत्वं तथा तत्रैव प्रतिपादितम् । ननु सिज्लोपे विशिष्टाश्रयणवत्त्वेऽपि तथैवैतद्दृष्टान्तेन वैषम्याभावोऽत आह–तत्रेति । देवाः सन्तीत्यत्रेत्यर्थः । एवञ्चेत्यादि । दुर्लभमिति । तथा च तत्साद्दृश्यमकिञ्चित्करमिति भावः । ननु हे रामेत्यादौ पदत्वं तु 'एकदेश'विकृतन्यायेन 'सर्वे सर्वपदा'देशन्यायेन वा । स्थानिन इवादेशस्याप्यर्थवत्त्वमिति तन्न्यायतात्पर्यम् । अत एव स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति दधिमध्वित्यादिवत्स्वदर्थबोध इत्यनागमकानां सागमका आदेशा इति सिद्धान्तस्तेस्तुरित्यादौ तु कल्पनं च सङ्गच्छते । अन्यथा चरितेव सिद्धत्वात् एव च तत्र स्थानिनोऽर्थवत्त्वेऽपि लोपस्याभावरूपत्वादनर्थकत्वेन तत्कल्पनं युक्तमेव । अत एव दीर्घाहो निदाघेत्यादौ हल्ङ्यादिलोपेन रेफः । न च तयोरितिकतलसुबन्तत्वयोस्तत्प्रयुक्तपदत्वस्य वा तत्र पक्षे तेनाश्रयणे व्यूढोरस्केन द्यौः पन्थाः इत्यादि मूर्द्धाभिषिक्तलक्ष्येष्वपि विसर्गान्तनिष्ठान्त्यादेशत्वप्रयुक्तत्वादेर्वाऽतिदेशसम्भवेनाल्विधित्वेऽत्रैव इति वाच्यम् । अत्र भावरूपादेशेन ततो वैलक्षण्यात् । आदेशेऽन्तरत्वस्य तत्र सत्त्वेऽपि तत्त्वेनानिमित्तत्वेनोपजीव्यत्वाच्छ्रौतस्यान्यादेशभावात्यागेनानुत्वादिदेशेन णत्वप्राप्त्या तत्प्रसिद्धेः, अन्यत्र तु स्थानिनामर्थवत्तामुल्लेखेनैव निर्वाहे तथा स्थान्यादेशमात्रकल्पने मानाभावेन रात्, कथेत्यादा-

पुंल्लिङ्गैकवचनमात्रे भो हरे इत्यादिसिद्धावपि भो हरिहरौ, भो विद्वद्वृन्द, भो गङ्गे, इत्यादि न सिध्येदिति भावः। एतच्च वृत्तिहरदत्तादिमतेनोक्तम्। भाष्यस्वरस-रीत्या तु "विभाषा—" इत्यादि वार्तिकमारब्धव्यमेव। किं तु निपातोऽपि भो।

---

भैरवी।

मपि 'अतिखट्वः' 'निष्कौशाम्बिः' इत्यत्र ह्रस्वे आप्त्वादेरतिदेशोऽल्विधित्वान्न सम्भवती "हल्ङ्यादि" सूत्रे दीर्घग्रहणवैयर्थ्यमिति वाच्यम्, सानुबन्धकनिर्दिष्टस्य स्त्रीप्रत्ययत्वस्य पर दिवद्भावेन सवर्णदीर्घनिष्ठस्य ह्रस्वे अतिदेशासम्भवात्। स्त्रीशब्दार्थेन रूपेण "गोस्त्रियो [illegible] ह्र [illegible]

[illegible]

र्घे अतिदेशोऽल्विधित्वान्न सम्भवतीति वाच्यम्, "अचः परस्मिन्" इत्यनेन सम्भवात्।

स्वरभेदेदमिति। तत्र हि—"अरग्रहणमनर्थकमन्यत्राभावात्। ननु चायमस्ति उन्द्सु पय सु। किन्तु. कारणं सुवर एवोदाह्रियते, न पुनरयं—वृक्षस्तत्र, प्लक्षस्तत्रेति? अस्त्यत्र विशेष विसर्जनीये कृते न भविष्यति; इहापि विसर्जनीये कृते न भविष्यति छन्द सु पयस्सित्यादौ ननु चहापि स्थानिवद्भावात्प्राप्नोति वृक्षस्तत्रेति। अनल्विधौ स्थानिवद्भावः। अयमल्वि धि, स्यात् शक्यमरग्रहणमवक्तुम्। बाढं शक्यम्। अल्विधिस्तर्हि भविष्यति। कथम्? इद

शब्दोऽस्ति, तेन द्विवचनादौ स्त्रीनपुंसकयोश्च न दोषः । युक्तरं चैतत् । हे भग-

## शब्दरत्नम् ।

स्युच्यते तदा पयःस्वित्यत्र षत्ववारणायाहोति । तत्र हि "रोः सुपि" (पा० सू० ८।३।१६) इति विसर्गः । नियमशास्त्राणां च विधिमुखेनैव प्रवृत्तिरिति तत्र इविशिष्टः स्थानीति तद्रू-

## भैरवी

मस्ति रोरि" इति । ततः 'खरवसानयोर्विसर्जनीयः' र इत्येव, रोः सुपि—विसर्जनीयः रोः र' इति प्रतिपादितम् । एतेन भाष्यग्रघट्टकेन स्थानितावच्छेदकत्वेनाभिप्रेतस्यातिदेशेन प्राप्तस्य यत्रालसमर्थरूपानिरोधकशब्दश्चोऽप्रवृत्तिस्तत्रानल्विधाविति निषेधः प्रवर्तते नान्यत्रेति स्पष्टमेव लभ्यते । उक्तभाष्यरीत्या समाधत्ते—तदा पयःस्विदनेति । देवा' सन्तीत्यनोऽस्य वैलक्षण्यमस्तीत्याह—तत्र होति । मन्त्रस्य सूत्रस्य नियामकत्वेनेति विसर्गं इत्यसङ्गतमत आह—नियमशास्त्राणामिति । विधिमुखेनैवेति । इदमन्यत्र स्पष्टम् । वरतार्थमिति । अत एवोक्तभाष्यानन्तरम् "उत्तरार्थंस्तर्हि तत्कर्तव्यम् "हलि सर्वेषाम्" भशि इलि यथा स्यादिह

## भावप्रकाशः ।

नेष्टस्वदि सत्वविधौ विशिष्टरूपाश्रयणेनाविशेषाच्छन्दःस्वित्यत्रोभुस्त्रैरत्र सविस्तरं विशेषप्रतिपादकभाष्योक्तमसङ्गतं स्यात् । न चोत्तरार्थं 'हशि'आदिभाष्यस्यैकदेशयुक्तिरत्रमतं तथैवास्माभिरिति वाच्यम् । तत्र विरुद्धमाष्यान्तरावष्टम्भेन नानलाभ्युपनिर्बाहेग च तावद्दश तथात्वकल्पनेऽपि सर्वत्र तत्तत्करणे मानाभावात् । एतेन "वक्तार्थं मानाभावः । न चोक्तभाष्य मान, तस्यान्यायत्वादियुक्तोक्तभाष्य सङ्क्षिप्ताभ्यादनल्विधावित्यस्य स्थान्यकाभिप्रादेशे न स्थानिवद्विरयर्थोऽभिमतः । एवं च विशेषोपपत्तिः । यदि तु प्रनाति र इत्यनुवदने तदा साध्य, परत्वधार्थं पदन्येत्यात्रो दोषमद्वाशयत्वीत्यनेनाहमिः सुचितः । एवं चानल्विधाविति सूक्तोक्त सामान्यमेव साधु । एतचाद्यरमिद्रमर्थमपि, किं चान्तरङ्गपरिभाषया यत्र स्यात्, इदानीमस्यापरनिमित्तकत्वात् । अतएव तः सयोग इत्यादिनिर्देशाद्वारी तु कचाधर्मेव तत् । एवं चार्थद्वयकथनमरुणन्" इति मन्दोक्तमसारम् । मिथाविरुद्धत्वाच्च, विशेषस्य मदुक्तरीत्यैवोक्तेश्च, स्थान्यसदाभ्यानादेशनशतम्भनेन स्वदुक्तार्थस्याभावाच्च, स्वदुक्तशाभावस्योक्तत्वेनाद्वयमाशच, सामान्योक्तमनोमोयामेव खण्डित वाच्च, यैगादिके तदप्रवृत्तेश्च, अर्थद्वयाकमस्य प्रागुक्तत्वाच्चेति दिक् । भाष्यरीत्यैव समाधत्ते—तदेति । देवाः सन्तीत्यत्रो वैलक्षण्यमाह—तत्र हीति । ननु तस्य नियामकत्वेन निवृत्तिमात्रमात्रार्थकत्वमत आह—नियमेति । सरलार्थम् । एतेन पक्षान्तरस्याप्रवृत्तिः । खण्डनकृतासुक्तं

## सरला ।

पयःस्वित्यत्रेति । वस्तुतस्तु स्थान्यलृविधर्माश्रये नैयायार्थत्वं 'अनल्विधौ' इत्यत्र स्वीकार्ये व्यर्थं एव । न च 'मिन्वतिः' इत्यर्थं स आवश्यक इति वाच्यम्, पक्षनोममात्रेण स्थानिवच्छाङ्कारस्यासम्भवत्वेन यथः परनिमित्तत्वेन बहिरङ्गतया वैकागमस्याप्राप्तेः । नचैव प्रकृतसूत्रस्थभाष्यविरोध इति वाच्यम्, इष्टुक्यापुत्रस्थवार्तिकभाष्यविरोधेन कृन्मेजन्तसूत्रस्थवार्तिकविरोधेन चैतस्यैकदेशयुक्तित्वेनादोषात् । न च स्थानिशायतलवन्याप्यधर्मावच्छिन्नत्वस्य उद्देश्यतायां प्रकृतीभूतधर्मेण साक्षादवच्छिन्नत्वस्य च निवेशाद्वैकारातिकभाष्यविरोध इति वाच्यम्, अयमर्थं स्वीकृत्य तदुभयनिवेशगौरवेण [illegible] दमूलस्थभाष्यस्यैकदेशयुक्तित्वकल्पनस्यैवौचित्यात् । निरूपितं चैतत्स्थानिवत्सूत्रे लघुशब्देन्दुशेखरटिप्पणे इति ततोऽवगन्तव्यम् ।

[^]—विधिमुखेनैव प्रवृत्तिरिति । नियमशास्त्राणां निषेधमुखेन विधिमुखेन वा प्रवृत्तिर्भवति । तत्र क निषेधमुखेन प्रवृत्तिः, कुत्र च विधिमुखेनेति विचारे स्वार्थहानिः, परार्थकल्पना, प्राप्तबाधश्चेति दोषत्रयदुष्टत्वेन निषेधमुखेन प्रवृत्तिस्तत्रैव स्वीक्रियते, यत्र विधिमुखेन प्रवृत्तिर्न सम्भवति । यथा "ह-त्रैरत्य-संस्य" इत्यत्र "अपूर्वेऽस्य" इति नियमस्य । तत्र हि नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्य नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं च यद्रूपं तद्रूपावच्छिन्नभिन्नत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदका-

शब्दरत्नम् ।

त्तिरत्वस्य स्थानिवत्त्वेन लाभः सुकरः । यदि तु "रोः सुपि" (पा०सू० ८।३।१६) इत्यत्रापि 'रः' इत्यनुवर्त्य रोः रेफस्यैव तेन विसर्गस्तदा ऽनुग्रहणमुत्तरार्थं सत्स्पष्टार्थमिहैव कृतमित्यवधेयम् । तत्रेति । चादिष्वित्यर्थः । वार्त्तिकं नाश्रयणीयमिति । भो इत्यादिप्रयोगाणां निपातैरेव सिद्धेः । निपातानामपि सम्बोधनान्तभवदादिसमानार्थकत्वात्सम्बोधनविभक्त्यन्तत्वेनामन्त्रितत्वमस्ति । "भवदादि" इत्यत्र भोःशब्दस्याप्यादिना ग्रहणात्तत्र भो इत्यादिसिद्धिरिति भावः । अन्यथा—साधारणानामभावे । भा विद्वद्वृन्देति । नपुंसके सोर्लुका लुप्तत्वेन वार्त्तिकाप्रवृत्तेरिति भावः।

भैरवी ।

माभूत् वृक्षवयतेरप्रत्ययः वृक्षव् करोति" इत्युक्तम् । परोक्तन्दोपमुद्धरति—यदि त्विति । उत्तरार्थम्—हलि सर्वेषामिति सूत्रार्थम् । अवधेयमिति । मूलोक्तार्थावधेयपदार्थं एतावानित्यवधेयमित्यर्थः ।

मूले—अन्यथेति । वार्त्तिकस्यैव स्वीकारे । इत्यादिसिद्धावपीति । "मनुवसोः" इति सूत्रे पठितस्य तस्य वार्त्तिकस्यैषान्त्रयाणामन्त्यस्य रुः स्यात्सम्बुद्धौ भवस्य चौदित्यर्थः । तत्र नानर्थक इति परिभाषाया अस्वीकारपक्षे । अलोन्त्यपरिभाषा तु न प्रवर्तते वस्येतिवाच्ये ऽयस्येत्युपादानसामर्थ्यात् । एवञ्च पुंलिङ्गे हल्ङ्यादिलोपेन प्रत्ययलक्षणस्य प्रवृत्तिरिति सिद्धावपीत्यर्थः । भो हरिहराविस्यादि । आद्ये सम्बुद्धिपरत्वाभावात् अन्त्ये सम्बुद्धेर्लुकाऽपहारात् रूपन्न सिध्येदित्यर्थः ।

वार्त्तिकाभावेऽपि लक्ष्याणां सिद्धिमाह—भोइत्यादौत्यादिना । ननु निपातमात्रस्वीकारे आमन्त्रितकार्यसिद्धिः कथमत आह—निपातानामपीति । सम्बोधनविभक्त्यन्तत्वेन—सम्बोधनविभक्त्येकवचनान्तत्वेन । भ्राद्यादिसिद्धिमप्याह—भवदादीति । भवदादीत्यत्र—भवदादियोगपूर्वेऽप्यत्र इत्यत्र । तत्र भोइत्यादीति । आदिना ततो भोः इत्यादिसङ्ग्रहः । साधारणानाम्—सर्व-

भावप्रकाशः ।

दोषमुद्धरत्नमिममाप्परीतिमाह–यदि त्विति । उत्तरार्थमिति । हलि सर्वेषामित्येतदर्थमित्यर्थः । अवधेयमिति । मूलोक्तावधेयपदघटितमेतावदवधेयमित्यर्थः । अनेन सुचितसिद्धान्तरूपवक्ष्यमाणस्तत्तुपदमेव स्फुटीभविष्यति । सत्रमन्युदासाभाष–चादीति । ननु मनुवसोरित्यत्रत्यस्य 'त्रयाणामन्त्यस्य रुः सम्बुद्धौ नानर्थक इति निषेधाद्वस्येति वाच्ये ऽवस्येति वचनाच्च निर्दिश्यमान' इति न्यायेनावस्यैव, इत्यर्थकस्य वार्त्तिकस्याभावे कथन्तत्कार्यतच्छन्दसिद्धिरत आह—अथेति ■ नोक्तं तदसिद्धया गुणाप्राप्त्या रूपसिद्धेरत आह–भोइत्यादीति । ननु तथाप्यामन्त्रितकार्यासिद्धिरत आह–निपातानामपीति । सम्बोधनेति । सम्बोधनविभक्त्येकवचनान्तत्वेनेत्यर्थः । एवं च नासंज्ञत्वोक्तिविरोध इति भावः । ननु तथापि लाघवसिद्धिरत आह–भवदादीति । भवदादियोगे इत्यत्रेत्यर्थः । तेषामपरिगणनादिति भावः । आदिना ततो भो इत्यादिसंग्रहः । साधारणानामिति । सर्वलिङ्गसर्ववचनविषयनिपातानामित्यर्थः । वार्त्तिकोक्तानामेवाङ्गीकारे इति भावः । हरिहरावित्यस्य द्विवचनान्ततया भवच्छब्देनान्वयात्वादन्वयासं-

सरला ।

वच्छिन्ने सङ्कोच इति नियमस्यलौकिकनियमानुसारेण "हन्तेः" इतिशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं नियामकं "अत्पूर्वस्य" इत्येतच्छास्त्रीयोद्देश्यतावच्छेदकव्यापकं च रूपं हन्धात्ववयवत्वं हन्धात्ववयवाकारपूर्वकनत्वं वा । तत्राद्यधर्मावच्छिन्नातिरिक्तत्वेन संकोचे "हन्तेः" इति शास्त्रस्य लक्ष्यमेव किमपि न स्यादिति तद्वैयर्थ्यापत्तिः । द्वितीयधर्मावच्छिन्नातिरिक्तत्वेन संकोचे तु 'अहण्यात्' इत्यादौ "हन्तेः" इत्यस्य प्राप्तिं वारयित्वा "अत्पूर्वस्य" इत्यनेन णत्वं, नतु 'प्रघ्नन्ति' इत्यत्रेति "हन्तेः" इति

ग्निविवत् हे भो इति प्रयोगस्यापीष्टत्वात्, तस्य च वार्तिकारम्भ एव सिद्धेः। "स्युः प्याट्पाडङ्गहेहैभोः" इत्यमरोक्तानां सम्बोधनार्थानां निपातानां सहप्रयोगायोगात्। किं चात्र भवान् हरिस्तत्रभवान् इतिवत् तत्र भो इत्याद्यपि वार्तिके सत्येव सि-

## शब्दरत्नम्।

भो गङ्ग इति। विभक्तौ लिङ्गविशिष्टाग्रहणात् ङीपा व्यवधानादवतः सम्बुद्धिपरत्वाभावेनेति भावः। स्युः प्याडिति। अस्य निपातमात्राङ्गीकारे इत्यादिः। ननु निपातोऽप्ययं भवच्छब्दसमानार्थ एवेति हे भो इत्यस्य नासङ्गतिः। अत एव भाष्यकैयटयोर्वार्तिकसिद्धविभक्त्यन्तप्रतिरूपकमव्ययमित्युक्तं, विभक्त्यन्तप्रतिरूपकत्वं च शब्दतोऽर्थतश्च इत्यन्यत्र स्पष्टम्। किं च व्यतिलुनीते इत्यादिवदेतयोरपि सहप्रयोगसम्भव इत्यरुचे-

## भावप्रकाशः।

लिङ्गसर्ववचनविषयनिपातानामित्यर्थः। विभक्ताविति। गङ्गाशब्दसामानाधिकरण्येन तस्य स्त्रीलिङ्गत्वात्तत्र ङीप्स्यादिति भावः। हे भो इति प्रयोगानुपपत्तिर्निपातमात्राङ्गीकारे सूचितां स्पष्टयति—स्युः प्याडित्यस्येति। अयम्—भोः शब्द। अत एव—तस्य निपातस्य भवच्छब्दसमानार्थकत्वादेव। ननु शब्दत एव विभक्तिप्रतिरूपकत्वमस्तु तावतापि भाष्योपपत्तिर्भविष्यतीत्यत आह—विभक्त्यन्तेति। अर्थतश्चेति। विनिगमनाविरहादुभयं विवक्षितमिति भावः। अन्यत्रस्पष्टमिति। मनुष्प्सूत्रस्थभाष्यकैयटयोः स्पष्टमित्यर्थः। तत्र हि—अस्तिमानित्यादौ सत्ताकर्तृत्वेन धनबोधादस्ति कथञ्चिदर्थतः साम्यमित्यस्तीत्यस्याव्ययेष्वप्रामाणिकः

## सरला।

\ भवादसिद्धिः स्पष्टैवेति तदुपेक्ष्याह-भो विद्वदिति। विभक्ताविति। तथा च वार्तिके रुपन्ताग्रहणाद्भवच्छब्दसामानाधिकरण्यात् रुपन्ते तत्र तदप्रवृत्तिरिति भावः। ननु तथापि स्वैरिणीत्यादिवन्ङीपः प्राग्भागमाश्राय सिद्धिरत आह-ङीपेति। ननु सम्बुद्धावित्यस्यावविशेषणत्वेन यथैकवर्णव्यवधाने जायते तथा वर्णद्वयव्यवधानेऽपि स्यादत आह-भवत इति। प्रत्ययस्य प्रकृत्यश्च वस्थिनाशाङ्गत्वेन तद्विशेषणत्वस्यैवौचित्यात्। अत एव भैमलेतिसमाधिरत्र नादृत इति भावः। मात्रेन वेति पाठः। तदभावेनेष्टस्यासम्भवणेति तकारश्रवणापरेश्चेत्यपि बोध्यम्। तदव्यवच्छेदं मूले आह-स्युः प्याडिति। इनोपि तदुपेक्ष्यमत्र मूलमसङ्गतमिति बोध्यम्। अत्रान्यथेत्यादिरित्युचितम्। अन्यथोभयाङ्गीकारे वार्तिकोक्तमात्राङ्गीकारे च अन्यासङ्गतेरित्याशयेनाह—निपातेति। अयम्-भोःशब्दः। तत्र प्रमाणमाह—अत एवेति। अस्य तत्तुल्यार्थकत्वादेवेत्यर्थः। ननु शब्दत एव विभक्त्यन्तप्रतिरूपकत्वेन भाष्यानुपपत्त्या कथमितः समानार्थत्वमितोऽत आह-विभक्त्यन्तेति। अर्थतश्चेति। विनिगमनाविरहादिति भावः। अत एवास्तिमानित्यादौ सत्ताकर्तृत्वेनैव धनबोधादस्ति कथञ्चिदर्थतः साम्यमित्यस्तीत्यस्य स्वरादिष्वप्रामाणिकः पाठः इति मनुष्प्सूत्रभाष्यकैयटादिकं सङ्गच्छते। तदाह—अन्यत्रेति। ननु तथापि वार्तिकसिद्धेति वक्तुमत्र तदभावे तदसङ्गतिरेवात आह—किंच व्यतीति। समुच्चित्यद्योतकत्वाशङ्के इति भावः। अरुचेरिति। प्रकारादि-

मात्रभत्ववारणान्नान्यदित्किमशीति स्नुषाश्वशून्यायतराधः। तयाचोभययाऽपि सङ्कोचासम्भवेन विधिमुखेन प्रवृत्तिसम्भवो नास्ति, अतस्तत्रागत्या निषेधमुखेन प्रवृत्तिः। तत्र च "अत्पूर्वस्य" इत्यस्य अत्पूर्वभिन्न-
\ रेफान्तत्रयवनस्य णत्वं नेत्यर्थं इति 'प्रध्नन्ति' इति सिद्धं, 'प्रघ्ण्यात्' इत्यत्र तु "हन्तेः" इत्यनेन णत्वमिति उभयोर्योगयोः सार्थक्यम्। यत्र तु विधिमुखेन प्रवृत्तिः संभवति तत्र न निषेधमुखेन प्रवृत्तिः स्वीकार्या दोषत्रयापत्तेः, किन्तु विधिमुखेनैवेति। एवञ्च प्रकृते "रोः सुपि", इत्यत्र सप्तमीबहुवचनात्यत-पूर्वत्वविशिष्टरेफातिरिक्तत्वेन "खरवसानयोः" इत्यत्र संकोचेन विधिमुखेन प्रवृत्तिः संभवतीति "रोः सुपि" इत्यस्य विधिमुखेनैव प्रवृत्तिः स्वीकार्येति तदाशयः।

अर्थत इति। "उपसर्गविभक्तिस्वरप्रतिरूपकाश्च" इत्यत्र स्वरान्तोऽर्थतः प्रतिरूपकत्वं न सम्भवतीति

द्भवति । "इतराभ्योऽपि दृश्यन्ते" (पा०सू०५।३।१४) इति सर्वविभक्त्यन्तात्त्रसो-र्भवदादियोग एवेष्टत्वात्। किं चामन्त्रितत्वे पदात्परस्याष्टमिकनिघातः, "आमन्त्रितं पूर्वम्-" ( पा०सू०८।१।७२ ) इत्यविद्यमानवद्भावः "आमएकान्तरम्—" ( पा०सू०८।१।५५ ) इति विधिः, "वाक्यादेरामन्त्रितस्य–" ( पा०सू०८।१।८ )

शब्दरत्नम् ।

राह—किं चेति । पदात्परस्येति । इह च न भोः शब्दे फलमुभयोरपि भोःशब्दयोः सम्बोधनप्रथमान्तत्वेनामन्त्रितत्वात् । किं तु 'तिष्ठसि भगोः, तिष्ठसि अघोः' इत्यादौ भगवन्, अघवन् तिष्ठसीत्यर्थके "आमन्त्रितस्य-" इति निघातसिद्धिः । निपात-योस्तु तयोः सम्बोधने शक्तौ मानाभावेन सम्बोधनप्रथमान्तत्वाभावेनामन्त्रितत्वाभावात् भगो तिष्ठसीत्यादौ अविद्यमानत्वम्, आं भगो देवदत्तेत्यादौ एकान्तरता, भगो आगच्छ भैरवी ।

पाठ इत्युक्तम् ।

सहप्रयोगस्याप्युपपत्तिमाह-किञ्च भवतीति। समुच्चितस्याद्यातरुत्वस्य सम्भवादिति भावः। इयत्वेति । ययद्वार्तिकारम्भस्य फलमुक्तन्तदन्यथासिद्धिरुक्तैव, त्रलादिसिद्धिरपि भवदादी-त्यत्रादिशब्दोपादानेन साधितेत्यरुचेरित्यर्थः । किञ्चेति । किञ्चामन्त्रितत्व इत्यादीत्य-र्थः । मूले—'पदात्परस्य' इत्यादिना वार्तिकारम्भस्य 'तत्र भो' इति 'तिष्ठति भो' इत्यत्र वा आमन्त्रितस्य चेत्याष्टमिकसूत्रेण निघातसिद्धिः फलमित्युक्तम्, तदपि निपातस्य सम्बोधन-विभक्त्यन्तत्वस्वीकारप्रदर्शनेन साधितमेवेति मूलोक्तनिघातसिद्धिरूपप्रयोजनम्भगो-अघो-शब्दांश इत्याह—इदन्त्वित्यादिना भावादित्यन्तेन । सम्बोधनप्रथमान्तत्वेनेति । सा च प्रातिपदिका-र्थेति सूत्रेण सम्बोधने चेत्यनेन वेति आमन्त्रितमिति सूत्रे व्यक्ती भविष्यतीति भावः । सिद्धि-रिति । फलमित्यस्यानुषङ्गः । मानाभावेनेति । 'भगो हरिहरौ' इत्यतो भगवत्त्वप्रकारेण 'अ-घो देवदत्त' इत्यतोऽघवत्त्वप्रकारेण बोधस्यानुभवसिद्धतया सम्बोधनविभक्त्यन्तत्वे माना-भावेनेत्यर्थः । निपातयोर्भगोअघोःशब्दयोर्न पूर्वोक्तमेव फलं किन्त्वन्यदपीत्याशयेनाह—भ-गोस्तिष्ठसीत्यादाविति। आम् भगो देवदत्तेत्यादाविति। आमित्यङ्गीकारे । अत्राम् देवदत्त भगो इति पाठ । अत्र भगो शब्दस्यामन्त्रितस्य चेत्यनेन प्राप्तस्य निघातस्य "आम एकान्तर-मामन्त्रितमनन्तिके" इत्यनेन प्रतिषेधसिद्धिः फलम् । न च देवदत्तेत्यस्याविद्यमानवत्त्वेन नैकान्तरता प्राप्नोतीति वाच्यम्, "नामन्त्रिते समानाधिकरणे" इति सूत्रेणाविद्यमानवद्भा-वस्य प्रतिषेधात्। नैकान्तरत्वसिद्धिमात्रम्फलङ्किन्त्वन्यदपीत्याह—अघो आगच्छेति । इदं

भावप्रकाशः ।

सिद्धिस्तूक्तैवेति भावः । वार्तिकस्य फलत्रयमेवेति मत्वा तदन्यथासिद्धया तत्खण्डनं तैः कृतमिति तावदेव तत्र लिखितम् । मूलकृता ■ मिश्रतया दोषा उक्ता इत्यपूर्वदोषोद्धारमात्रेण तृतीयदोषप्रतीकधारणेन स दोषो विना प्रयास मध्ये एव गलित इति तात्पर्यम् । नन्वयमपि दोषः प्रागुद्धृतोऽत आह–इदं चेति । सम्बो-धनप्रथमेति । प्रातिपदिकार्थेति सूत्रेण सम्बोधने चेत्यनेन चेति भावः । सामन्त्रितमिति सूत्रे स्पष्टतरमेत द । सिद्धिरिति । फलमित्यस्यानुषङ्गो नत्विह चेत्यस्येति भावः। निपातयोरिति । भगो हरिहरावित्याद्यर्थ-मावश्यकत्व तयोरिति भावः । तुना सूचितं यत्तो नत्वपत्वेतीत्यनुपदमेव स्फुटीभविष्यति । मानाभावेनेति । भगवत्त्वादिप्रकारेणैव ततो बोधादिति भावः। तयोर्न तावन्मात्रं फलं किन्त्वन्यदप्यपि मूलार्कं सर्वं तयो रेवेत्युदाहरणव्याजेनाह–भगो इत्यादि । आमित्यङ्गीकारे । यद्यप्यत्राप्यविद्यमानवत्त्वं भगो इत्यस्य प्राप्तं पूर्ववदिति तामाश्रित्य प्राप्तामन्त्रितनिघातस्य "आम एकान्तरम्" इत्यनेन निषेधो न प्राप्नोति तथापि "नामन्त्रिते समानाधिकरणे" इति निषेधाद्याविद्यमानवत्त्व, निपातस्तु नास्त्येव, तदाह–एकान्तरतेति ।

इति द्विर्भावः, "सुबामन्त्रित—" ( पा०सू०२।१।२ ) इति पराङ्गवद्भावश्चेत्यादि सर्वं सिद्ध्यति, न त्वन्यथेति दिक्। भगो, अघो इति निपातावपि यदि प्रामाणिकौ तर्हि एतां नाम। आमन्त्रितकार्यसिद्धिस्तु वार्तिकायत्तैवेति सुधीभिराकलनीयम्। यत्तु वदन्ति–सकारान्तानेवैतान् निपातानास्थाय रुत्वोत्वे भाष्ये प्रत्याख्याते इति, तद्विरभसात्। स्यादेतत्। निपातानामभ्युपगमे यत्वविधौ त एव गृह्येरन् प्रतिपदोक्तत्वात्, न तु सम्बुद्ध्यन्ता लाक्षणिकत्वात्, इति चेन्? मैवम्, "स्वरितेनाधिकार" (पा०सू०१।३।११) इत्यत्राधिकः कारोऽधिकार इति व्याख्यानमाश्रित्य लक्ष्यानुरोधेन स्वरितत्वमाश्रित्योभयग्रहणात्, "भुवश्च महाव्याहृतेः" (पा०सू०८।२।७१) इति सूत्रे महाव्याहृतिग्रहणं लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वज्ञापनार्थमिति हरद

---

शब्दरत्नम्।

इत्यादौ द्विर्भावः, अनेन भगो इत्यादौ पराङ्गत्वमिति भावः। यदि प्रामाणिकावि-ति। यदीत्यनेनेदं सूचितं–तौ न प्रामाणिकौ। अत एव भाष्ये "विभाषा भवद्–"इति व्याख्याय भोः भगवन्नित्यस्यैवासिद्धिमाशङ्क्याव्ययमेव भोः शब्दो विभक्तिप्रतिरूपकत्वा-दित्येवोक्तम्। एवं च भगो इत्यादिरित्याद्यसाध्वेव। तद्विरभसादिति। "भोभगो–" (पा० ८।३।१७) "व्योर्लघु–" (पा०सू०८।३।१८) इति सूत्रयोरत्यार्थस्य भाष्येऽस्पष्टत्वादिति भावः। उभयग्रहणादिति। वार्तिककारोऽभिदधाति वक्ष्यमाणामपि "छन्दस्या वा" इत्यादौ कार्यान्तरबोधनाय सूत्रस्थानुवादस्य करणादिति भावः। हरदत्तेति।

भैरवी।

द्विर्भावप्रवृत्तियोग्यमुदाहरणम्, भगो भगो आगच्छेति तदा भविष्यति। अनेन भगो इति। अनेन भगवन् ऐश्वर्यवन्नित्यर्थः। अत्र मत्वर्थसत्तायामधनस्य करणत्वेनान्वयादामन्त्रितं प्रति कारकत्वमस्तीति पराङ्गवद्भावस्य प्राप्तिः।

न प्रामाणिकाविति। भोःशब्दस्येव तयोः कोशे अनुपादानादिति शेषः। अत एव—'भगो' 'अघोः' इति निपातयोरप्रामाणिकत्वादेव। असिद्धिमिति। एषा प्रागुपपादिता। इत्येवोक्तमित। 'नत्वन्यथाप्येते' इति तत्रोक्तमिति तयोरप्रामाणिकत्वस्य सिद्धिः। इत्यादीति। आ [illegible]

भावप्रकाशः।

प्रभा च निपातनिषेध इति भावः। धनेन भगो इति। तत्कारणकैश्वर्यवानित्यर्थः। मत्वर्थसत्तायां धनस्य करणत्वेनान्वय इति भावः। सूचितमिति। अस्य साध्वेवेत्यत्रान्वयः। तौ–निपातौ। न प्रामाणिकाविति। भोःशब्दस्येव तयोः कोशेऽनुक्तत्वादिति भावः। एतेन तथा प्रकाशकृत्सिद्धान्तोक्तिरयुक्तेति सूचितम्। अत्र मुख्य मानमाह—अत एवेति। वक्ष्यमाणादेवेत्यर्थः। असिद्धेरिति। भोःशब्दघटितानेकप्रयुक्तप्रयोगस्येत्यर्थः। एतेन तद्घटितव्याख्याप्रवृत्तिः। इत्येवोक्तमिति। नत्वन्यथाप्येते शब्दा इत्युक्तमिति भावः। आदिना भगो गच्छ इत्यादिसंग्रहः। तद्विति। प्रकाशोक्तमित्यर्थः। स्पष्टत्वादिति। एवं च कथंचिद्व्याख्यया लभ्यते इति प्रकाशो युक्त एवेति खण्डनकृदायुक्तमयुक्तमिति भावः। ननु सूत्रकारसमये वार्तिककृदाद्यस्त्वेनोभयानुवादस्यैवासम्भावितत्वेनाद्याशङ्कासमाधिश्चायुक्त एव आह—वार्तिकेति। एक-

साधुत्वेऽच । न चैवमपि प्रभोरित्यादावतिव्याप्तिः । परस्परसाहचर्येण निपाधानां वार्तिकोक्तानां च ग्रहणेऽप्यन्येषामग्रहणात् ।

---

शब्दरत्नम्

एवं चानित्यत्वात्सद्भावप्रवृत्तौ उभयोर्ग्रहणसिद्धिरिति भावः । "विभाषा भवद्-"इति वार्तिके भो ब्राह्मणा भो ब्राह्मणी इत्यसिद्धत्वाशङ्कायामव्ययमेव भोःशब्द इति सिद्धान्तेनोभयोरत्र ग्रहणलाभादिति बोध्यम् । परस्परसाहचर्येणेति । तेन चार्थवतामेव ग्रहणमिति भावः । अर्थवत्परिभाषयेत्यपि बोध्यम् । अन्येषाम्-अनर्थकानाम् । सान्तरान्तान्यतरानुकरणमिति पक्षे प्रसिद्ध्या भोइत्यादिपूर्वकत्वेनास्तामामेवार्थवत्तां ग्रहणस्य व्याख्यया भो

भैरवी

"शकन्ध्वादिषु पररूपं वाच्यम्" इति बोध्यम् । एवञ्चैकदेशानुमत्या तद्वार्तिकस्यापूर्वत्वाभावबोधनद्वारा तत्साध्यरूपाणां साधुत्वं सूत्रकृतैव ध्वनितमिति भावः । मूले-महाव्याहृतिग्रहणमिति । "भुवः" इति सूत्रे भुव इत्यनेनान्तरिक्षवाचकस्य भुवरिति शब्दस्य महाव्याहृतेर्ग्रहणम् उत धिषन्तृण्योर्वाचकभूप्रकृतिकषष्ठ्यन्तस्य ग्रहणमिति सन्देहस्य लक्षणप्रतिपदोक्तपरिभाषया निवृत्तौ महाव्याहृतिग्रहणपरिभाषाया अनित्यत्वे ज्ञापकमिति भावः ।

प्रकृतसूत्रे उभयोर्ग्रहणे भाष्यमपि साधकमित्याह—विभाषाभवदितीति । मूले-नचैवमिति । एवम्-लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिस्वीकारे । तेन—साहचर्येण । न केवलं साहचर्यमात्रं साधकमपि तु परिभाषापीत्याह-अर्थवदिति । ननु मूलकृता साहचर्यपरिभाषा समाश्रिता त्वर्थवत्परिभाषा इत्यत्र किम्बीजमत आह—सान्तेति । भोशब्दादीनामेवेति । एवकारेण प्रभोरित्यादेरेकदेशव्यावृत्तिः । तथाचैकारान्तानुकरणमिति पक्षाभिप्रायको ऽयं ग्रन्थ इति

भावप्रकाशः ।

ध्यादिवाक्यादृष्टानुकरणस्य सिद्धेः । तथा चैकदेशानुमत्या वार्तिकानामपूर्वत्वाभावबोधनद्वारा तत्साध्यप्रयोगाणां साधुत्वं सूत्रकृतैव ज्ञापितमिति भावः । यद्यपि महाव्याहृतिग्रहणाभावे प्रागस्य किमन्तृण्योर्वाचकभूप्रकृतिकषष्ठ्यन्तस्य ग्रहणमुत "भुवश्च-तरिक्षम्"इति श्रुत्युक्तान्तरिक्षवाचकस्येति सन्देहस्य तथा निवृत्तौ तदवयं तदनित्यत्वं गमयति तथापि तावता प्रकृते किमत आह—एवं चानित्यत्वादिति । तथा हरदत्तोक्तो चेत्यर्थः । ननु तस्य समूलत्वे प्रकाशद्व्याख्यानं, तदेव नेत्यत आह—विभाषेति । वार्तिके इति । तद्व्याख्यानावसरे इत्यर्थः । असिद्धत्वेति । इत्यादावसिद्धत्वेत्यर्थः । शङ्कायामिति । भगवदुक्तेनेति शेषः । यत्तु खण्डनकृत- 'अर्थवद्ग्रहणपरिभाषयातिव्याप्तेः स्वयं समाहितत्वेन नचैवमिति शङ्काया एवानुत्थानम् , अत एव साहचर्याश्रयणमपि निष्फलं, साहचर्येणेदेष्टसाधने स्वनतिप्रसक्तात्प्राक् तदाशङ्कानवकाशः' इति तन्मतिं दूषयितुं व्याचष्टे—तेन चेति । साहचर्येणापीत्यर्थः । अर्थवत्त्वं च द्वयोरेवैकाश्रयेण तयोरुचितमुक्तं इति भावः । नन्वेवं तथैवेष्टसिद्धाविदं निष्फलमित्यत आह—अर्थवदिति । अत एव व्याचष्टे अनर्थकानामिति । नन्वेवं मूलकृता तेन कुतो नोक्तेयं रीतिरित्युक्ता ऽत आह—सान्तेति । प्राचामनुरोधेनेदम् । प्रसिद्ध्येति । गौणमुख्यन्यायेनेति भावः । भोशब्दादीनामेवेति । एवेन प्रभोरित्यादेरेकदेशव्यावृत्तिः । तथा चौकारान्तानुकरणपक्षाश्रयकोऽयं ग्रन्थ इति तत्पक्षे साहचर्यादिकं चिन्त्यमेवेति भा॰

सरला ।

शब्दतः प्रतिरूपकत्वं गृह्यते तत्साहचर्यादन्यत्राऽपि शब्दत एव प्रतिरूपकत्वमिति ॥ न चाव्ययम्, समकालवाचकयुगपच्छब्दस्य युगं पततीति युगपत् इति व्युत्पत्त्या सिद्धशब्दतो विभक्त्यन्तप्रतिरूपकत्वेन वार्तिकेनैव सिद्धेस्तस्य गणे पाठवैयर्थ्येन शब्दतोऽर्थतश्च प्रतिरूपकत्वग्रहणज्ञापनादिति ।

सूत्रे सु इति पृथक्पदं लुप्तषष्ठीकमित्याह—एतत्तदोर्यः सुरिति । एतत्तद्गतसंख्याभिधायी यः सुस्तस्येत्यर्थः । एतत्तदोर्विहित इति व्याख्याने तु परमस दद्दाति, परमैष ददातीत्यादौ न स्यात् । अर्थद्वारकसम्बन्धाश्रयणे लिङ्गं तु 'अनञ्समासे' इति बोध्यम् । अकोःकिमिति । साककयोः शब्दान्तरत्वाद-प्रसङ्ग इति प्रश्नः । एषक इति । 'अकोः' इति प्रतिषेध एव "तन्मध्यपतितस्तद्ग्रहणेन गृह्यते" इति परिभाषां ज्ञापयतीति भावः ।

बहुलग्रहणेति । अत एव लोपं विना पादपूरणेऽपि क्वचिद्भवति—सास्मा

---

शब्दरत्नम् ।

लिङ्गमिति । विहितविशेषणे तद्वैयर्थ्यं स्पष्टमेवेति भावः ।

सास्मा अरमिति । सोस्मा अरमिति सन्धावपि पादपूर्तेः । न च "प्रकृत्यान्तः पादम्-" ( पा०सू०६।१।११५ ) इति पूर्वरूपस्याभावेन न पादपूर्तिः । "सोऽयमा-

भैरवी ।

सिद्धम्" इति शास्त्रप्रामाण्यादिति शेषः । वस्तुतो विद्यमानेऽपि,शास्त्रे इच्छया प्रतियोगितासम्बन्धेनाभाव आरोप्यत इति तस्याभावज्ञानस्याहार्यत्वम् ।

तद्वैयर्थ्यम्-अनञ्समासग्रहणवैयर्थ्यम् । तद्धि 'असः शिरः' इत्यादौ लोपाभावार्थंकृतम् । यद्यत्र विहितविशेषणं स्यात्तत्रा सोस्तच्छब्दाद्विधानाभावेन लोपाप्राप्तत्या तद्वैयर्थ्य-स्पष्टमेव । वस्तुतस्तु विहितपदाध्याहारेण तद्योगे पञ्चमीकल्पनायामक्लृप्तकल्पनापेक्षया ऽनन्तरपदाध्याहारेण तन्निरूपितसम्बन्धे षष्ठीत्येवोचितम् । अत एवात्र 'इति भाव' इत्युक्तम् । इदमेवानञ्समासग्रहणम् 'नञ्समास उत्तरपदार्थप्रधान' इत्यत्र ज्ञापकम् । अन्यथा नञर्थाभावस्य विशेष्यत्वेन उत्तरपदस्योपसर्जनत्वेन त्यदाद्यत्वाप्राप्त्या हल्ङ्यादिलोपस्य दुर्वारतया तद्वैयर्थ्यमेव स्यात् । पूर्वरूपस्येति । अयादेशस्य चेत्यपि बोध्यम् । इत्यादावितीति । अत्र यथा

भावप्रकाशः ।

इतिभाव इति । वस्तुतो विहितशब्दयोगे पञ्चम्या युक्तत्वेन इदत्वेन च शङ्कैवायुक्ता । एवं चानन्तरशब्दाध्याहृत्य तयोरनन्तर इति व्याख्यानमेवोचितम् । यथा चात्र नातिप्रसङ्गस्तथा स्पष्टमस्यिमाशयाम् । गौणे [illegible] इष्टापत्तिः । तत्र त्यदाद्यत्वाभावेन हल्ङ्यादिलोपस्य दुर्वारत्वात् । अत एवास्य विवेचकं इदमुक्तं मूले । अत एव च इति भावः इत्युक्तं टीकायामिति बोध्यम् । पादमितीति । प्रवृत्तेति शेषः । पूर्वरूपस्येति । अयादेशस्य चेत्यपि बोध्यम् । न पादेति । तथा चात्र एवेत्यादिमूलासङ्गतिरिति भावः । सोऽयमिति । अन्यथा शशशारीमयमितिवद् "अन्यादवद्यात्" इत्यनेन प्रकृतिभावापत्तिरिति भावः ।

सरला ।

तद्वैयर्थ्यमिति । असः शिर इत्यत्र प्रथमकथनमोस्तच्छब्दाद्विहितत्वाभावात्, अर्थद्वारकसम्बन्धाश्रयणे तु सुप्रत्ययार्थैकत्वस्य तच्छब्दार्थगतत्वेन तत्र प्राप्तसुलोपवारणाय 'अनञ्समासे' इति सार्थकम् । एवञ्च एतत्तच्छब्दार्थगतसंख्याभिधायिनः सोर्लोप इति सूत्रार्थः । एतत्तदोरिति षष्ठी अर्थद्वारकसम्बन्धबोधिकेति बोध्यम् । न च अनन्तरपदाध्याहारेण तन्निरूपितसम्बन्धबोधिका षष्ठीति वाच्यम्, तथा सति एतत्तदोरनन्तरस्य सोर्लोप इति सूत्रार्थेन 'परमः स ददाति' इति लक्ष्ये परमपदोत्तरसुप्रत्ययस्य लोपापत्तेस्तस्य तच्छब्दानन्तरत्वात् । नन्वर्थद्वारकसम्बन्धार्थकत्वस्वीकारेऽपि परमपदोत्तरसुप्रत्ययस्य तदर्थसंख्याभिधायित्वेन लोपापत्तेस्तदवस्थत्वमिति ; न चैतच्छब्दसाहचर्यात्तच्छब्दानन्तरस्यापि परस्यैव ग्रहणेन न दोष इति वाच्यम्, तथा सति परशब्दस्यैवाध्याहारस्य फलिततया 'एतत्तदोः' इति षष्ठ्याः पञ्चम्यर्थलक्षणापत्तेः, अनन्तरशब्दाध्याहारे उक्तरत्वस्य कथमप्यलाभाच्च । एतच्छब्दसाहचर्यस्य तत्राविनिगमकत्वात्, परम एष ददाति इति प्रयोगे पूर्वस्यापि दर्शनात् ;—इति चेत् ? न, एतत्तच्छब्दार्थतावच्छेदका-

अरम् । स. अस्मै इति च्छेदः ।

इति स्वादिसन्धिः ॥

## इति पञ्चसन्धिप्रकरणम् ॥

---

शब्दरत्नम् ।

गाव"इत्यादाविवात्रापि प्रातिशाख्येन सिद्धेः । एवञ्चावधारणपरतया न व्याख्येयम्, "सोऽहमाजन्म-" इत्यादौ बहुलग्रहणेन क्वचिदप्रवृत्त्या ऽपि सिद्धेरिति तात्पर्यम् ॥

इति भट्टोजिदीक्षितपौत्रहरिदीक्षितकृते मनोरमाव्याख्याने लघुशब्दरत्ने

पञ्चसन्धिप्रकरणम् ॥

भैरवी ।

"अवयादवधाद्वनस्पुरब्रतायमनस्युषु च" इति सूत्रप्राप्तस्य प्रकृतिभावस्याभाववदित्यर्थः । केचित्तु "सोऽहमाजन्म" इत्यादिसिद्ध्यर्थमवधारणपरतया व्याख्याने "सास्माकर" मित्यत्र सुलोपानापत्तिः । यदि बहुलग्रहणानुवृत्त्यैव तत्साध्यते, तदा तेनैव 'सोऽहमाजन्म' इत्यादेरपि सिद्धावधारणपरतया व्याख्यानस्य वैयर्थ्यमित्याहुः । तन्न । छन्दस्यभावदर्शनेन लौकिक प्रयोगे शास्त्रप्रवृत्तिकल्पनमन्याय्यमित्याशयात् । किञ्च लोके लोपे सत्येव पादपूरणे लोपो भवति नान्येनेत्यर्थस्य स्पष्टप्रतिपत्त्यर्थमत्रावधारणपरतया व्याख्यानं प्राचामनुरोधेन कृतम् । वस्तुतो बहुलग्रहणेनैव सर्वेष्टसिद्धावधारणपरतया व्याख्यानन्न कार्यमित्याह-एवञ्चेति । ब हुलग्रहणेनोक्तप्रयोगसाधने चेत्यर्थः । अस्य तात्पर्यमित्यत्रान्वयः । सिद्धेरिति । लोपाभावस्य सोऽहमाजन्मेत्यादौ सिद्धेरित्यर्थः । तात्पर्यमिति । अत एवेति वदतो मूलकृत इति शेषः ।

भावप्रकाशः ।

प्रातिशाख्येनेति । न च सोऽयमागादित्यस्य तत्र पाठेऽप्यस्यापाठात्सूत्राभावाच्च कथमेतदिति वाच्यम् । समानीष्टत्वे प्रातिशाख्ययोरनेनैकदेनास्य सङ्ग्रहात् पठनीयत्वाद्वा न दोष इत्याशयात् । अत एव प्राति शाख्यानुरोधेनास्याप्रवृत्तिरिति मूले वक्ष्यत्र एतत्साद्विति भाष्योक्ति सङ्गच्छते । यत्तु यत्तु खण्डन कृदण्ड्यादय सोऽहमाजन्मेत्यादिसिद्ध्यर्थमवधारणपरतया व्याख्याने सास्माकरमित्यादौ सुलोपानापत्तिः बहुलग्रहणानुवृत्त्या तदुपपादने तु सोऽहमाजन्मेत्यादावपि तयोरुपपत्तौ किमवधारणेनेति । तन्न, छन्दस्यभावदर्शनेन लक्षणानां क्वाचित्कत्वकल्पनाया अन्याय्यत्वात् । लोके लोपे सत्येव पादपूरणे लोपो नान्यत्रेत्येवनियमं शास्त्राणामनियमस्यावश्यकत्वाच्चेति भाष्यारब्धानामनुरोधेन । चतुर्विधं बाहुलकमित्यभियुक्तोक्त्या बाहुल कस्यैव नयार्थोऽङ्गीकारात् पादस्य द्विविधस्याप्यत्र ग्रहणेनाविशेषाच्च, नियतशास्त्रापरत्वस्यापि सम्मते सिद्धे श्च । तद्ध्वनयन्नाह-एवञ्चेति । बहुलग्रहणेनोक्तप्रयोगसाधने चेत्यर्थः । तात्पर्यमित्यत्रान्वयः । अपि त्ववधारण समुच्चायकः । यद्वा सजन्मेत्यादावित्यस्याप्रयोज्यः । सिद्धेरिति । लोपाभावसिद्धेरित्यर्थः । तात्पर्यं

सरला ।

वच्छिन्नधर्मितानिरूपितदस्यानिष्ठप्रकारताप्रयोजकीभूतलोपः इत्यर्थस्य विवक्षणेन परमनदोषाच्छ्रप्रत्ययार्थैक त्वनिष्ठप्रकारतानिरूपितधर्मितायाः तच्छब्दार्थतावच्छेदक-बुद्धिविशेषविषयत्वावच्छिन्नत्वाभावेनादोषात् । नचैवमपि 'तकरम्' इत्यत्र कल्पप् वोत्तरसुप्रत्ययस्य तच्छब्दार्थतावच्छेदकबुद्धिविशेषविषयत्वावच्छिन्न धर्मितानिरूपितैकत्वसंख्याप्रयोजकत्वेन सुलोपापत्तिरिति वाच्यम्, स्वार्थतावच्छेदकावच्छिन्न धर्मितानि

भैरवी ।

एवञ्च परममूलम्प्राचामनुरोधेनैवदेव ध्वनयितुं तत्र सत्येवेत्यवधारणन्त्विति 'तु' शब्दोऽरुचिम्बोधकउपात्त इति बोध्यम् ।

इति श्रीमदगस्त्यकुलवंशावतंससर्वपण्डितसार्वभौममन्नदेव
मिश्रात्मजभैरवमिश्रकल्पितायां रत्नप्रकाशिकायां
पञ्चसन्धिविवरणं समाप्तम् ॥

---

भावप्रकाश

मिति । अत्र पवेत्यादिवक्तो मूलकृत इतिभावः । एव च तथा परममूल प्राचामनुसारेण । अत एवारुचिसूचकस्तुः प्रयुक्तो ऽवधारण त्विठीति तात्पर्यम् ।

इति स्वादिसन्धिः ।

इति श्रीमत्पायगुंडोपाख्यमहादेवसुतवेणोगर्भजवैद्यनाथकृते भावप्रकाशे रघुशब्दरत्नव्याख्याने पञ्चसन्धिप्रकरणं परिपूर्णम् ।

---

सरला

कल्पितसङ्ख्यानिष्ठप्रकारताप्रयोजकत्व, स्वाश्रयवृत्तित्वमेतदुभयसम्बन्धेन एतत्द्विशिष्टतोऽपि इत्यर्थस्य विवक्षणीत 'तत्त्वम्' इत्यत्र प्रथमतत्त्व-पक्षत्वेऽपि द्वितीयसम्बन्धस्याभावेनोक्तदोषाभावादिति दिक् ।

इति स्वादिसन्धिप्रकरणम् ।

---

सर्वविधपुस्तकप्राप्तिस्थानम्-
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
विद्याविलास प्रेस, बनारस सिटी ।

## अथाजन्तपुँल्लिङ्गप्रकरणम् ।

अर्थवद्धातुः ॥ प्रत्ययं प्रत्ययान्तं चेति । सूत्रे तन्त्रादिना उभयं विवक्षितमिति भावः । तथा हि, प्रत्ययस्यैव पर्युदासे "कृत्तद्धित" इति सूत्रेण तद्धितान्तस्य संज्ञाविधानं व्यर्थं स्यात् । न च तत्रापि तदन्तं न ग्राह्यमिति वाच्यम् ।

शब्दरत्नम् ।

## अथाजन्तपुँल्लिङ्गप्रकरणम् ॥

व्यर्थं स्यादिति । न च 'अस्यापत्यम्–इः' इत्यादौ प्रत्ययत्वप्रयुक्तनिषेधबाधनेन भैरवी ।

## अथाजन्तपुँल्लिङ्गप्रकरणम् ।

सूत्रे तन्त्रादिनेति । सकृदुच्चरितः शब्दोऽनेकार्थपरो यत्र तत्र तन्त्रमिति व्यवहारः । उभयम्—प्रत्ययपदं प्रत्ययपरं प्रत्ययान्तपरमित्येतदुभयम् । तद्धितान्तस्येति । कृद्ग्रहणन्तु लिङिडस्यादौ धातुपर्युदासात्प्रातिपदिकसंज्ञासिद्धये आवश्यकमिति भावः । नचात्रापि लिङ् क्विबित्यवस्थायां जातायाः संज्ञाया एकदेशविकृतन्यायेन लिङ् इत्यत्र सौलभ्यमिति वाच्यम्, फलाभावेन तदानीमप्रवृत्तेः । परत्वान्नित्यत्वादन्तरङ्गत्वाच्चापृक्तलोपस्य प्राक् प्राप्तेश्च । वस्तुत इदन्तद्धितग्रहणमत्र नियमार्थं, कृद्ग्रहणन्तु प्रतिपिद्धार्थमिदं लिङ्क्विप्यत्र निषेधस्य प्रसङ्गादिति कैयटेनोक्तं 'कृत्तद्धितग्रहणं नियमार्थम्' इति भाष्यस्याख्यावसर इति तदनुरोधेन यथोद्देशपक्षाश्रयणे तु कृद्ग्रहणमपि तदन्तप्रतिषेधं ज्ञापकमेव । स्यादावित्ति । आदिना अधुनेत्यस्य सङ्ग्रहः । अमभावप्रकाश ।

भावप्रकाश ।

श्रीगणेशाय नमः । सूत्रे तद्धितान्तस्येति । कृद्ग्रहणं तु लिङाद्यवस्था तु इति निषेधबाधनम् । न च लिङ् क्विबित्यत्र प्रवृत्तसंज्ञाया एकदेशेति न्यायेन तत्र सौलभ्यमिति वाच्यम् । फलाभावेन तदैवाप्रवृत्तेः, परत्वादन्तरङ्गत्वान्नित्यत्वाच्चापृक्तलोपस्य प्राक् प्रवृत्तेश्च । अत एव "कृत्तद्धितग्रहणं नियमार्थम्" इति भाष्ये "तद्धितग्रहणमर्थ नियमार्थं कृद्ग्रहणं तु प्रतिपिद्धार्थं लिङ्क्षिप्यादिति अत धातुरिति निषेधप्रसङ्गः" इत्यनेन कैयट इति मान्या । परे तु सूत्रमुक्तलक्षणं, यथोद्देशे त्वदुक्तरीत्येतस्मिन् तद्ध्या तस्यापि व्यर्थत्वात् । इः, इमावित्यादि पक्षद्वये सिद्धान्ते सिद्धावस्थत मते तत्तद्व्याख्यानुरोधेन तत्रैवापि यथोद्देशस्यैवाश्रयणात् । एतेन कार्यकाले दोष इत्यपास्तम्, तद्धितादेऽपि तथात्वापत्तेश्च । आरोपितप्रशस्त्यर्थस्त्व तु क्विब्लोपे च समम् । परत्वादिकमपि दुर्वचम् । अधातुग्रहणप्रत्याख्यानेन यौगपद्यासम्भवाभावात्, किञ्चापि तदसम्भवस्यैव बीजत्वात्, सञ्ज्ञातुल्यनिमित्तकत्वेन तस्यान्तरङ्गत्वाच्च, सञ्ज्ञाया अपि यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमिति न्यायेनाधातुग्रहणप्रत्याख्यानेन वा नित्यत्वाच्च, अकृदराधिकारार्थत्वाभावेन तेषामसम्प्रवृत्तौ तदप्रवृत्तेश्च । अत एव "अप्रत्यय इति तुल्यजम् । इह कस्मान्न भवति काण्डे कुड्ये इति? कृत्तद्धितग्रहणं नियमार्थं भविष्यति" इति भाष्यं सङ्गच्छते । धातोः प्रत्ययान्तस्य चेत् कृत्तद्धितान्तस्यैवेति नियमेनाप्रत्ययपदं प्रत्याचक्षाणेनाधातुग्रहणप्रत्याख्यानमपि ध्वनितम् । तद्धितस्य बाधाद्धातुरिति संसर्गस्य, कृदंशस्य तूभयत्रेति न कोऽपि दोष इति तदाकूतम् । एवं च प्रागुक्तानर्थक्यमर्थशैथिल्य एव । किं च कृद्ग्रहणस्य विध्यर्थत्वे मध्येऽपवादन्यायेनाधातोरित्यस्यैव प्रतिषेधः स्यात्, न 'प्रत्ययान्तस्य चेत्तद्धितान्तस्यैव' इति नियमस्य, तथा च पाचककारकादौ तत्त्वानापत्तिः । अत 'अनन्तर' इति 'येनना' इति च न्याययोः प्रवृत्तेरसार्वत्रिकत्वापत्त्या त्वदुक्तार्थक्षतिरेव । न च परत्वात्तस्यापि बाधः । निषेधाश्च बलीयांस इति न्यायविरोधापत्तेः । अथ बाध्यसामान्यचिन्ताश्रयणं तर्हि समानियमस्यापि बाधापत्त्या सूत्रकेनोपदर्शितमित्यागतनिष्पत्तिः स्पष्टैव । सिद्धान्ते त्वधातुप्रत्ययपदाभावेन कृत्तद्धितेति सम्पूर्णसूत्रस्य नियमार्थत्वेऽपि परत्वात्समासनियमेन तत्र वारणमितिमूले एव स्पष्टमित्याहुः । इदं ध्वनयितुं कृदग्रहणेऽस्य मूले इदयति—नचास्येति ।

सरला ।

मूले—न ग्राह्यमिति । एतच्च केवलतद्धितप्रत्ययस्य 'अप्रत्ययः' इति पर्युदासेन पूर्वसूत्रस्याप्रवृत्त्या

'अर्थवत्' इत्यनुवृत्तिसामर्थ्यात्तदन्तग्रहणात्। प्रशंसायां हि मतुप्। एकार्थी-

---

शब्दरत्नम्।

तच्चरितार्थम्। अ अस् इ इत्यवस्थायां प्रवृत्तसंज्ञाया एकदेशविकृतन्यायेन सुलभत्वात्। एकार्थीभावेनेति। न चैतत्प्रत्ययमाश्रित्य, तन्मात्रे एकार्थीभावाभावादिति भाव।

भैरवी।

हायतया व्यपदेशिवद्भावेनास्य तद्धितान्तत्वम्, कृत्तद्धितेति तु साजात्यालम्बनम्। इत्यवस्थायामिति। तदा,तादृशसमुदायस्य प्रत्ययभिन्नतया तद्धितग्रहणं विनापीष्टसिद्धेः। वस्तुतोऽत्र सूत्रेऽधातुग्रहणमप्रत्ययग्रहणञ्च न कार्यम्, कृत्तद्धितग्रहणन्तु धातोः प्रत्ययान्तस्य चेत् तद्धितान्तस्यैवेति नियमार्थन्तेनेष्टसिद्धेरिति। एकदेशविकृतन्यायेनेति। शास्त्रीयेन स्थानिवद्भावेनेत्यर्थः।

नचेति। नहीत्यर्थः। एतत्-प्रशस्तार्थवत्त्वम्। प्रत्ययमात्रस्य-केवलकृत्तद्धितमात्रस्य। एतच्च तत्र तदन्तविधिलाभार्थमुपात्तम्, नियमार्थन्तयोरुपादानमिति कल्पनापक्षे तु न प्रशस्तार्थवद्विषयको नियमः, किन्तु धुरसा(?)ऽर्थवत्त्वमात्रविषयक एव। पूर्वसूत्रे धातुप्रत्ययपर्युदासाद्विवक्षितं तादृशार्थवद्विषयक एव। अत एव भाष्ये-"अप्रत्यय इति किम्? काण्डे कुड्ये, अप्रत्यय इति शक्यमवक्तुम्, कस्मान्न भवति काण्डे कुड्ये इति? कृत्तद्धितग्रहणं नियमार्थं भविष्यति कृत्तद्धितान्तस्यैव प्रत्ययान्तस्य प्रातिपदिकसंज्ञा भवति नान्यस्य" इति नियमप्रदर्शनेनाप्रत्ययग्रहणप्रत्याख्यानं सङ्गच्छते। तन्मात्रे-प्रत्ययमात्रे। भावाभावादिति। अर्थवद्द्वितीयाभावादिति शेषः। यत्तु 'धागृहपदप्रिय' इत्यादौ तद्धितान्तस्य प्रातिपदिकत्वापत्तिमुद्भाव्य सुप्प्राग्वर्तितद्धितान्तमात्रस्याप्रयोगेण प्रशस्तार्थवत्त्वाभावान्न दोष इति समाधानं, तत्तु न युक्तम्। सुप्प्रकृतिमात्र-)

भावप्रकाशः।

आदिना अधुनेत्यादिसंग्रहः। चरितार्थमिति। असहायतया व्यपदेशिवद्भावेन तद्धितान्तत्वात्, तदन्तयुक्तावस्थानत्वेनानदन्तविधावपि केवलस्यारोपितार्थवत्त्वादिति भावः। पायकाले चेदम्। पश्चान्तरैरपीति न्यायेन यथोद्देशं समाधत्ते-अस्मीति। प्रवृत्तेति। सुबलुगर्थमिति भावः। एकदेशेति। स्थानिवद्भावो पलक्षणमेतत्, अर्थन्यूनाधिक्यारेण तदप्रवृत्तेः। नचेतदिति। नहिप्रशस्तार्थवत्त्वमित्यर्थः। प्रत्ययमात्रस्य। केवलप्रत्ययस्य। एवमग्रेऽपि। यद्यप्येकार्थीभावेनेत्याद्युक्तमर्थवत्त्व मूलकृता उत्तरसूत्रेऽभिमत पूर्वोक्तग्रन्थसन्दर्भानुरोधात्, कौस्तुभेन तथा स्पष्टमुक्तेश्च। अत्र तु पर्युदासपक्षस्यैव तत्सर्वमिष्टम्। धातुप्रत्यययोरहन् व्यतिमंश्च ते यावत् इत्यादौ द्विविधार्थवत्त्वस्य दर्शनात्। अत एवार्थवत्सूत्रेऽर्थवत्त्व सर्वं गृह्यत इति कौस्तुभे पितामहचरणा इति भाष्योक्तिः सङ्गच्छते। एवं च प्रत्ययपर्युदासोपपत्तावपि नचेत्यकृत्तद्धितमात्रस्य इत्याद्युक्तिरयुक्ता तथापि कुडादिदृष्टान्तेनान्यप्रत्ययेष्वपि तथात्वमिति वैधर्म्येण प्रवृत्तसूत्रस्य सामर्थ्येन प्रवृत्तिरुचितेति प्रत्ययपर्युदासाङ्गीकारस्ते वृथैवेति ध्वनयितुं तथोक्तिः। स्फुटमाविष्यति चेनदत्युत (?) स्तिवरादिना। भावाभावादिति। अर्थवद्द्वितीयाभावादिति भावः। अत्र मान्या -'सुप्प्राग्वर्तितद्धितान्तमात्रस्याप्रयोगेण प्रशस्तार्थवत्त्वाभावाद्धाकुहपदप्रिय इत्यादौ तद्धितान्तत्वात्प्रातिपदिकत्व न' इति। तत्रा

सरला।

प्राप्तसंज्ञाविधानमावश्यकमिति तदाशयः। अनुवृत्तिसामर्थ्यादिति। केवलप्रत्ययस्य 'प्रत्यय' इति महासंज्ञया सर्वत्र शास्त्रीयार्थवत्त्वस्यैव सत्त्वेन कृत्तद्धितसूत्रेऽर्थवत्पदानुवृत्तिर्व्यर्थेति तत्सामर्थ्यात् तदन्तविधिरिति। एवञ्चात्रानुवृत्तमर्थवत्पदं विशेष्यं कृत्तद्धितपदं च विशेषणं, तथाच तदन्तविधिः। "संज्ञाविधौ प्रत्ययग्रहणे न तदन्तग्रहणम्" इति परिभाषायास्तु न प्रवृत्तिः संज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यताप्रयोजकं—प्रत्ययमात्रवृत्तिविषयताप्रयोजकं—पदं तदादिविशेष्यकतदन्तविधिप्रयोजकं नेत्यर्थकतयाऽत्र कृत्तद्धितपदस्य साक्षादुद्देश्यताप्रयोजकत्वाभावेन तदप्राप्तेरिति भावः। प्रवृत्तसंज्ञाया इति। तत्र प्रत्ययभिन्नत्वसत्त्वेन "अर्थवद्" इति सूत्रेणेति शेषः। एकदेशविकृतन्यायेनेति। आनुमानिकस्या

पूर्वसूत्रे चरितार्थता। धातुप्रत्ययपर्युदासेनैव तल्लाभात्। तस्मात्प्रत्ययान्तं च वर्जयित्वेत्युचितमेव।

भैरवी।

प्रत्याहार, तन्त्रेण तिपन्तिबन्तञ्च वर्जयित्वेत्यर्थः, समासश्चेति द्वितीयं सूत्रम्, यद्वा 'अविभक्ति प्रातिपदिकम्, समासश्च' इत्येवास्त्विति परास्तम्। उक्तदोषापत्तेः। किञ्च तिप्प्रत्याहार आश्रयणे प्रत्यासत्त्या सिप पकारेण गृह्येतेति थसाद्यन्तेऽतिव्याप्तिः। व्याप्तिन्यायश्चेद्विवक्षितस्तदा क्प पकारेण तदापत्तिः। एवञ्च टाबादिकबन्तानामप्रातिपदिकत्वाय तद्धितस्त्रीप्रत्ययग्रहणङ्कार्यम्। टापष्टाशब्दमारभ्य क्प पकारेण प्रत्याहारेण टाब्ग्रहणं वा कार्यमिति गौरवम्। वक्ष्यमाणरीत्या दश दाडिमानीत्यादिसमुदायस्य व्यावृत्तये अर्थवद्ग्रहणस्यावश्यकत्वाच्च। रिक्थाहञ्श्चित्यस्य वक्ष्यमाणरीत्याऽतिबन्तत्वेन तत्र नलोपापत्तिवारणाय धातुग्रहणमप्यावश्यकम्।

केचित्तु "वृत्तिमदर्थवत् प्रातिपदिकम्" इत्येव लक्षणं कार्यम्। एवञ्च सूत्रद्वयाकरणेन लाघवम्। अर्थवदित्यत्र भूमद्युक्तमप्रशस्तार्थवत्त्वं विवक्षितमतो न 'पञ्चनाथप्रिय' इत्यादौ दोषः। नचाव्युत्पन्नानां प्रातिपदिकसंज्ञा न स्यादिति वाच्यम्, सर्वत्र प्रकृत्यादिकल्पनेन व्युत्पन्नत्वस्यैव कल्पनात्। यद्यपि पचतकीत्यादिभ्य एवं सति सुबुत्पत्तिः प्राप्नोति तथाप्येतादृशानां नपुंसकत्वाभ्युपगमेन सुपां लुका सिद्धम्। नचैवमेधतरे इत्यादौ नपुंसकह्रस्वापत्तिरिति वाच्यम्, 'सप्तम्यधिकरणे च' इति ज्ञापकेन तिबन्तस्यन्तप्रातिपदिकस्य ह्रस्वत्वाभावज्ञापनात्। "सुपो धातु" इति सूत्रे प्रातिपदिकपदोपादानमात्रेण सिद्धे धातुग्रहणेन धात्वर्थविशेष्यकवृत्तौ प्रातिपदिकत्वाभावस्य ज्ञापनाच्च। न चैवम्पचतिरूपमित्यादौ प्रातिपदिकसंज्ञा न स्यादिति वाच्यम्, धात्वधिकारीयप्रत्ययान्तवृत्तौ प्रातिपदिकत्वाभावस्य ज्ञापनात्। 'भोक्तुं पारः' इत्यादौ धात्वधिकारीयप्रत्ययसत्त्वेऽपि धात्वर्थविशेष्यकबोधाजनकतया न

भावप्रकाश।

गोरित्यप्राप्ते वृत्तावसत्त्वाभानेन सुबप्राप्तेश्च नित्यादन्तोदात्तत्वमिद्ध्या फिट्स्वराप्रवृत्तेश्च। प्रकृतिप्रत्ययविभागशून्येष्वेव तत्प्रवृत्तस्त्वेति चेन्? न, अनाघ्र इति ग्रन्थमदात्। कल्परस्तु यथा न तथा मूले एव स्पष्टम्। एतेन "अधातुरतिप् प्रातिपदिकं कृत्समासश्च" इत्येव कार्यं तिपस्तिशब्दादारभ्य सुप पकारेण प्रत्याहार, तन्त्राश्रिता तिप् निबन्तं च विहायेत्यर्थः, यद्वा 'अतिप्प्रातिपदिकं समासश्च' इत्येव कार्यम्, यद्वा 'अविभक्तिरधातु प्रातिपदिकं कृत्समासश्च' इत्येवास्तु, यद्वा 'अविभक्ति प्रातिपदिकं समासश्च' इत्येवास्त्वित्यपास्तम्। किञ्चाद्ययोः प्रत्यासत्तिन्यायेन सिप पकारेण तदापत्तेश्च। एवं च टाबादिकबन्तान्तानां तदप्राप्त्या तद्धितस्त्रीप्रत्यययोर्ग्रहणं कार्यम्, टापष्टाशब्दादारभ्य क्प पकारेण प्रत्याहारेण टाप्ग्रहणं वा कार्यमिति गौरवम्। न च लिङ्गविशिष्टपरिभाषया सिद्धे ■ स्त्रीप्रत्ययोपयोग इति वाच्यम्। राजकन्या राजकुमारीत्याद्यर्थं तस्यावश्यकत्वात्। स्पष्टं चेदमग्रे टीकायाम्। यदि तु टीकोक्तरीत्या समुदायस्यातिबन्तत्वात् प्रातिपदिकत्वसिद्धिरित्युच्यते तर्हि तद्धितग्रहणमेव कार्यं न स्त्रीप्रत्ययग्रहणमिति बोध्यम्। एतेन 'अर्थवदतिप्प्रातिपदिकं समासश्च' इत्येवास्त्वित्यपास्तम्। तदन्ययोः सरत इत्यादौ प्राग्दर्शितविभक्त्यन्तेऽव्याप्त्यापत्तेश्च, सर्वपक्षेऽन्यार्थमर्थवद्ग्रहणावश्यकतया तदनुक्त्या न्यूनतापत्ताच्च। यद्यपि अर्थवद्ग्रहणेन न्यूनतादोषाभावेन तद्धितग्रहणेन सर्वत्र इत्यादावदोषेण चान्त्यपक्षो निर्दुष्टो लघुभूतश्च तथाप्यपाणिनीयत्वमिति दिक्। यत्तु "कृदादिपारिभाषिकसञ्ज्ञावृत्तिमत्त्वमर्थवत्त्वम्। अर्थवत्प्रातिपदिकमित्येव कार्यम्, अन्यत्सर्वं तुल्यमिति महल्लाघवम्। नत्र पञ्चनाथप्रिय इत्यादौ पञ्चनाथेत्यत्र वृत्तिमत्त्वात्संज्ञापत्तिः। प्राशस्त्यार्थकमतुपा एकार्थीभावानन्तर्गतवृत्तरेव तत्र ग्रहणात्। अन्यथा यथान्यासेऽपि तस्या दुर्वारत्वात्, तत्र तदंशस्य वृत्तिमत्त्वेनार्थवत्त्वात्। पचतकीत्यादौ तद्धितवृत्तिमत्त्वात्संज्ञया सुबुत्पत्तावपि

सरला।

तथाहि सति पञ्चनाथशब्दाट्टाबापत्तिः। पुंवद्भावस्तु न 'अप्रियादिषु' इति निषेधात्। नच टिदन्तत्वात् ङीबापत्तिरिति वाच्यम्, पदार्थान्तरनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वमुपसर्जनत्वमिति बहुव्रीह्य-

भैरवी ।

क्षतिः । सर्वत्र व्युत्पत्तिपक्षस्यवाङ्गीकारेण "निपातस्यानर्थकस्य" इति वार्तिकमपि न स्वीकार्य- मित्याहुः । तन्न, वृत्तिपदस्य कृदन्तादिबोधकतया तद्धत्त्वस्य तत्र वक्तुमशक्यत्वात् । किञ्चैवं द्वौ बहव इत्यादावविवानन्वितार्थकविभक्तिकल्पनापेक्षया ऽनुवादकविभक्तेर्न्याय्यतया पचतकि पचन्तकीत्यादिभ्यो द्विवचनबहुवचनयोरेवोत्पत्त्या लुका तयोरपहारासम्भवेन श्रवणापत्तेः । किञ्च विभक्त्यर्थप्रधानस्य लिङ्गसंख्याभ्यां योगो नास्तीत्यस्य भाष्यसम्मतत्वेन पचतकीत्या दिभ्य परस्य सोर्लुकापहारस्य वक्तुमशक्यत्वाच्च । किञ्च सप्तम्यधिकरणे चेति निर्देशेन मामा

भावप्रकाशः ।

स्वमोरिति लुका न क्षतिः । नचैवमेधनके इत्यादौ "ह्रस्वो नपुंसके" इति ह्रस्वापत्तिः । "नसप्तम्यधिकरणे च" इत्यनेन तदभावस्य ज्ञापनात् । यद्वा सुपो धातुरित्यत्रान्त्यग्रहणेनैव सिद्धे धातुग्रहणेन धात्वर्थविशेष्यकवृत्ति- तदभावज्ञापनात् । नच पचतिकल्पमित्यादौ संज्ञानापत्तिः । ज्ञापकस्य सजातीयतया धात्वधिकार- प्रत्ययान्ते धात्वर्थविशेष्यकवृत्तावेव तदभावस्य विवक्षितत्वात् । तल्त्वादिस्तु न धात्वधिकाराय इति न तत्राव्याप्तिः । ननु भोक्तु पाक इत्यत्र धात्वधिकारायप्रत्ययोऽस्तीति चेत्-नि तत्र, प्रत्ययार्थविशेष्यत्वेन धात्वर्थविशेष्यत्वाभावात्, अव्ययत्वाच्च । नन्वेवं वृत्तिरहितनिपातादीनां संज्ञा न स्यादिति चेन्न । व्युत्पत्तिपक्षे तत्रापि प्रकृत्यादिकल्पनया वृत्तिमत्त्वात् । एवं चाव्युत्पत्तिपक्षो न स्यादिति चेत् । जातिव्यक्तिपक्ष- वल्लक्ष्यानुरोधाद्व्यवस्था वाऽभ्युपगन्तव्या । नन्वेवं गार्ग्यत्ययमाहेत्यादावपि वृत्तिमत्त्वात्संज्ञापत्तिरिति चेन्न । इति पदसमभिव्याहारे वृत्तिप्रयुक्तकार्याभावबोधनात् । भाष्याद्यनुक्तत्वेनाप्रामाण्यं तु न, 'उपेयप्रतिपत्त्य र्थमुपाया' इति न्यायेन लाघवमूलकस्यैव प्रमाणत्वात् इति मतोक्तम्, तन्न । तत्र वृत्तिशब्दस्य कृद- न्तादिशब्दबोधकत्वेन तद्वत्त्वमर्थवत्त्वमित्यस्य दुर्वचत्वात् । अत एव कृदादिरूपा पञ्च वृत्तय इत्यभियुक्तानां वचनोक्तिः । कार्यकाले राजपुरुषो राजाथनात्यादौ समासस्य नलोपाभावान्नागमनाननुरूपकवृत्तिमत्त्वात्प्रा- तिपदिकत्वानापत्तौ नलोपानापत्तेश्च, वाक्यात्यादावकुत्वाथ तापदत्वार्थकतया न क्वे इत्यस्य चारितार्थ्यात् यथोद्देशेऽपि 'अकृत' परिभाषया 'उपजनिष्य' इति न्यायेन चादावेव तदभावेनोक्तदोषाच्च । सिद्धान्ते गतिस्तु मूले एव स्पष्टा । पचेरकमित्यादावुक्तवैपरीत्यापत्तेश्च, अतज्ञहितं तस्य चारितार्थ्यात् । ऐधनक ऐधिष्टकेत्यादौ लुगपवादतयाऽसौ दुर्वारत्वाच्च । एकत्वादीनामुक्ततया स्वाद्यनुत्पत्त्या पचतकीत्यादावदोषाच्च । औत्सर्गिकै- कवचनस्यापि गमके सत्येव जायमानत्वाच्च । अत एव ह्याप्सूत्रभाष्यमङ्गतिरिति दीक्षायामेव स्पष्टम् । 'न केवला' इति निषेधस्य गमकतया साधुत्वार्थमौत्सर्गिकैकवचनस्य एकत्वादीनामुक्तत्वेऽप्येक इत्यादिवत् सर्वविभक्तीनां चोत्पत्तेस्तन्निषेधस्य निगादौ गवित्याद्यनुकरणे च व्यभिचरितत्वात्साधुत्वस्य स्वत एव सत्त्वाच्च दुर्वचत्वाच्च । किञ्च तदर्थमपि जायमानस्य विरुद्धार्थकविभक्त्यपेक्षया न्याय्यस्यानुवादकस्य पचेतके पचन्तके इत्यादौ द्वौ बहव इत्यादिवद् द्विवचनादेरेव सत्त्वेन सदृत्या लुकाऽप्राप्त्याऽतिप्रसङ्ग किञ्च सत्त्वप्रधानस्यैव तस्यार्थं प्रातिपदिकग्रहणं तेन रमते ब्राह्मणकुलमित्यादौ ह्रस्वो नेति भाष्याद्ध्रस्वा- नापत्तेः । किञ्च विभक्त्यर्थप्रधानक्रियाप्रधानयोर्न लिङ्गसंख्याभ्यां योगोऽस्तीति भाष्येण पचतिकल्प इत्य- त्रस्य ह्रस्वादिना शय्यन्ते इत्यादौ सत्त्वेऽपि विचित्रत्वात्पदार्थशक्तीनामन्यत्र नास्मात्याद्यर्थकनेष्टार्थाना- नपुंसकत्वस्य दौर्लभ्यलाभात् । अपि च सप्तम्यधिकरणेचेत्यनेनानिर्दिष्टं प्रातिपदिकत्वे ह्रस्वाभावो ज्ञाप्यते उतोपदिष्टे ? नाद्य, एधनके इत्यादौ ह्रस्वापत्तेः । नान्त्यः वाग्दे इत्यादौ ह्रस्वापत्तेः । एवं सति निर्देशोपपत्त्यभावेन ज्ञापकत्वासम्भवाच्च । ज्ञापकस्य सामान्यापेक्षत्वे तु तथा सामान्यापेक्षत्वस्यापि सुब- न्तत्वेन सुबुत्पत्तेरपि तत एव वारणसम्भवेन सप्तम्येत्यादि तदभावस्य ज्ञापनादिति च पूर्वोत्तरग्रन्थविरोधा- पत्तेश्च, तच्छब्देन प्रक्रान्तह्रस्वपरामर्शात् । किञ्च सुबुत्पत्तौ निर्देशासङ्गत्यभावेन तत्सामर्थ्यान्निमित्तादौ एव सामान्यापेक्षत्वं न ज्ञाप्यादौ इत्यस्य प्रत्यादौ ह्रस्वानापत्त्या सूत्रवैयर्थ्यापत्त्या च दुर्वचत्वात् । अपि च तेन तुल्यमिति लक्ष्ये 'ब्राह्मणवत्' इत्यादौ "घञ मास्यान्" इति लक्ष्ये च 'तैलपाना' इत्यादौ "गेयाख्यायाम्" इत्यत्रत्य "धात्वर्थनिर्देशे ण्वुल्" इति वार्तिकलक्ष्ये चासिका शायिकेत्यादौ क्त्वा तुमुन्-

सरला ।

र्थान्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वेन पञ्चनावेत्यस्योपसर्जनतया 'अनुपसर्जनात्' इति निषेधात् । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

शब्दरत्नम् ।

प्रियशब्दान्त एव तत्रैकार्थीभावो न तु तन्मात्र इत्यदोषात् । न च क्विबन्ते

भैरवी ।

न्यतो विभक्त्यन्तप्रातिपदिकस्य ह्रस्वत्वप्रतिकल्पने अन्तरङ्गानपीति न्यायेन प्रि कुलमित्यादौ पूर्वं सुपो लुकि ह्रस्वत्वानापत्तिः । किञ्च 'पुत्रीयति' इत्यादौ क्यजन्तस्य धातुसंज्ञया सुपो लुग्भवति तस्य धात्वधिकारीयप्रत्ययान्तत्वन्तु नास्तीति धातुग्रहणस्य चारितार्थ्येन ज्ञापकत्वासम्भवः । यदि च वृत्तिमदित्यत्र व्यपदेशिवद्भावेन वृत्तेर्वृत्तिमत्त्वमनुपस्थापेन वृत्तिरित्येवाश्रीयते तदा प्राथमिकलोपोद्धारेऽपि ग्रिशुभादिशब्दस्याव्युत्पन्नत्वेनैषां प्रातिपदिकसंज्ञानापत्तिरिति दिक् ॥

तेनेत्यनेनोक्तमर्थं स्पष्टप्रतिपत्तये आह—प्रियशब्दान्त एवेति । तत्र पञ्चनावप्रिय इत्यादौ । अयं प्रियशब्दान्तनिष्ठैकार्थीभावः पूर्वोत्तरपदनिमित्तकार्यप्रयोजकः, न तु नीलशब्दान्तं अन्यस्यैकार्थीभावस्य स्वीकारः । वृत्तिघटकानामेकार्थीभावफलानां प्रियशब्दान्तनिष्ठेन तेनैवोपपत्तेरिति भावः । प्रियशब्दान्ते इत्यस्य प्रियशब्दप्रकृतिकसुबन्ते इत्यर्थः । अदोषादिति ।

भावप्रकाश ।

शब्दरत्नम् ।

दोष । तत्र धातोरेव विशिष्टार्थबोधकत्वेन अर्थवद्द्वितीयाभावेन पृथगर्थानामेकोपस्थितिजनकत्वरूपैकार्थीभावाभावादिति वाच्यम् । अलौकिके वाक्ये कल्पितैकार्थीभावस्य तत्रा-प्यारोपेणादोषात् ।

भैरवी ।

प्रशस्तार्थवत्त्वापत्तिरूपदोषाभावादित्यर्थः । दोष इति । प्रातिपदिकसञ्ज्ञाया अप्राप्तिरूप-दोष इत्यर्थः । दोषमुपपादयति—तत्रेत्यादिना । धातोरेवेति । "य शिष्यते" इतिन्यायेनावशिष्ट श्रूयमाणो लिङ् इत्यादिशब्द एव लेहनकर्त्रादिबोधक इति भावः । अलौकिके वाक्ये-लिङ्क्विबित्यत्र । अस्य वाक्यत्वञ्च शक्तशब्दसमुदायत्वरूपम् । तस्यार्थबोधनाय प्रयोगाभावेन नैकोपस्थितिजनकत्वस्य सद्भावोऽत आह—कल्पित इति । तत्र-लुप्तक्विबन्ते । अदोषादिति । वास्तविकस्य विशिष्टार्थबोधकत्वस्य तत्राभावेन प्रातिपदिकत्वाभावापत्तिरूपदोषाभावादित्यर्थः ।

एतेन यदेकार्थीभावेनेत्यादिमूलोक्तमनूद्य तत्र, औपगवः वृक्ष इत्यादौ सुब्विशिष्टस्यैव समासत्वेनाव्याप्त्यापत्ते । किञ्च समासग्रहणं व्यर्थम्, वाक्यं एकार्थीभावविरहेण तस्य नियमार्थत्वायोगात् । किञ्च 'भोक्तुं' 'भुक्त्वा' 'शुक्लतर' 'पाचकतम' इत्यादावव्याप्तिः, तुमुन्नन्तादेः प्रत्ययान्ततया ऽस्य सूत्रस्याप्रशस्तार्थवत्त्वेनाग्रिमसूत्रस्य चाप्राप्ते । एकार्थीभावः स्वार्थिकेषु नेति हरदत्तग्रन्थे स्पष्टम् । तस्मादन्वयव्यतिरेकाभ्यां प्रत्ययभिन्नत्वे सति अर्थप्रत्यायनयोग्यत्वमप्रशस्तार्थवत्त्वमिति रत्नाकरोक्तमपास्तम् ।

प्रशस्तसमीपत्वेनारोपितप्रशस्तार्थवत्त्वस्य औपगवादौ सुब्रहिते सत्त्वात्, समासग्रहणस्य नियमार्थत्वमप्युक्तमेवोपपादनीयम् । अनेन-अर्थवदित्यादित्यन्तग्रन्थेन । सानेकपदाद्येनापूर्ववचनकल्पनापेक्षया कल्पप्रत्ययपदस्याश्रुतत्वेन तस्य तात्पर्यग्राहकत्वं युक्तमिति भावः ।

भावप्रकाश ।

पत्तिरूपदोषाभावादित्यर्थः । दोष इति । तदभावेन सञ्ज्ञानापत्तिरित्यर्थः । तदभावे हेतुमाह—तत्रेति । शिष्यमाणलुप्यमाने इति न्यायादिति भावः । तत्रापि—लुप्तक्विप्यपि । एतेनैकार्थीभावेत्यादि मूलमित्यन्तं मूलमनूद्य तत्र, औपगवो वृक्ष इत्यादौ सुब्विशिष्टस्यैव तथात्वेनाव्याप्त्यापत्त । किञ्चैवं समासग्रहणं व्यर्थं वाक्ये एकार्थीभावविरहेण तस्य नियमार्थत्वायोगात् । किञ्च भोक्तुं भुक्त्वा शुक्लतर पाचकतम इत्यादौ सञ्ज्ञानापत्ते अप्रत्यय इत्युक्त्याऽस्याप्राप्ते अप्रशस्तार्थवत्त्वेनाग्रिमस्याप्राप्तेश्च । एकार्थीभावः स्वार्थिकेषु नेति हरदत्तग्रन्थे स्पष्टमिति, कृत्तद्धितस्य तादृगर्थवत्त्वं न सम्भवतीत्यनूद्य तत्रास्याप्रवृत्त्यापत्तेश्च इयान् अधुना इत्यादीनां तथाविधानां सत्त्वात् । अथ अञ्ज् इति प्रक्रियावाक्ये तादृगर्थवत्त्वं नास्तीति ब्रूम इति चेन्न । भवन्निरुक्तप्राशस्त्यस्य कल्प्यत्वभवेनानस्ववद्दत्वापत्तेरिति यत्र रत्नकरोक्तमपास्तम् । प्रशस्तसमीपत्वेनारोपितप्रशस्तार्थवत्त्वस्यौपगवादौ सुब्रहिते सत्त्वात् । अस्यार्थवत्त्वस्योत्तरसूत्रार्थत्वेनात्र सामान्यतस्तत्त्वस्य ग्रहणेन वृक्ष इत्यादावदोषाच्च । अत एव समासग्रहणस्य नियमार्थत्वोपपत्तेश्च हरदत्तादीनामुक्तरीत्या सिद्धेश्च । एवं रीत्या तत्त्वस्य सर्वत्र सम्भवेनानस्ववद्दत्वाभावाच्चेति दिक् ।

सरला ।

एकार्थीभावाभावादितीति । "समर्थः पदविधिः" इति भाष्योक्तस्य विशेष्यविशेषणभावापन्नार्थोपस्थितिजनकत्वरूपस्य एकार्थीभावस्य केवलप्रत्ययेऽभावादित्यर्थः । विशेष्यविशेषणभावापन्नार्थोपस्थितिजनकत्वं च पदसमुदायस्यैवेति पृथगर्थानां पदानां समुदायनिष्ठैकशक्त्यैकोपस्थितिजनकत्वमेकार्थीभाव इति फलितोऽर्थः । अलौकिके वाक्ये-'लिह् क्विप्' इत्यादौ । कल्पितेति । एकार्थीभावश्चालौकिकविग्रहवाक्य एव कल्प्यते यथा शत्रादौ 'पचन्तं चैत्रं पश्य' इत्यादिस्थले द्वितीयासामानाधिकरण्यं दृष्ट्वा लकारेऽपि तत्कल्पनेनाप्रथमासामानाधिकरण्याच्छत्रादेशस्तथा 'अन्यपदार्थे' 'समर्थः' 'चार्थे' इत्यनुवादबलादेकार्थीभावस्याऽलौकिकविग्रहवाक्ये कल्पनेति समाससञ्ज्ञादिप्रवृत्तिरिति । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

यदि तु प्रत्ययो न पर्युदस्येत तर्हि "सात्पदाद्योः" इति सूत्रे सातिग्रहणं व्यर्थं स्यात्। 'अर्थवत्' इति किम्? धनं, वनमित्यादौ प्रतिवर्णं संज्ञा मा भूत्। तस्यां च सत्यां स्वादयः स्युः। ननु संयोगान्तलोपः विभक्तेरभावात् न भविष्यन्तीति चेत्? न, एकवचनमुत्सर्गतः करिष्यते इति सिद्धान्तात्। हुंफडादिभ्य इव सोर्दुर्वारत्वात्। न च अर्थवद्ग्रहणपरिभाषयाऽनर्थके न स्यादिति वाच्यम्। तस्या

### शब्दरत्नम्।

**व्यर्थं स्यादिति।** अनेन प्रत्ययपर्युदासे मानमुक्तम्। साते प्रातिपदिकत्वे हि तत औत्सर्गिकैकवचने तस्यापि सुबन्तत्वेन पदत्वे पदादित्वादेव निषेधसिद्धेस्तद् व्यर्थमिति भावः। **सोर्दुर्वारत्वादिति।** तस्य च समुदायप्रातिपदिकत्वेन तदवयवत्वाल्लुक्। समुदायसंज्ञा चान्तरङ्गत्वादवयवेभ्यः प्रातिपदिकत्वात्सुपि सति प्रवर्तते इति तस्य तदवय

### भैरवी।

औत्सर्गिकेति। संयोगान्तलोपस्याभावादित्यर्थमुक्तम्। तस्यापीति—सातेरपीत्यर्थः। अपि प्रकृतिसमुच्चायकः। न चैवम्प्रकृतिप्रत्यययोः समासापत्तिः बहुचश्छिरस्वसामर्थ्येन प्रकृतिप्रत्यययोः समासाभावस्य कल्पनात्। इति भाव इति। मूलकारस्येति शेषः। एवमभिधानेनारुचिर्ध्वनिता, सा वस्तुतस्त्वित्यादिनाऽग्रे स्फुटा। तस्य च—सोश्च। "न केवला" इति निषेधविषयतायाः सत्त्वेन सोरुत्पत्तिरुचितैवेति भावः। प्रातिपदिकावयवत्वं तस्योपपादयति—समुदायेत्यादिना। एतेन प्रत्येकं सोरुत्पत्तौ तच्छ्रवणापत्तिरिति दूषणम्परिहृतम्। नन्वेवन्तत्र लुक्प्रवृत्तावपि धात्व

### भावप्रकाशः।

अनेन—ग्रन्थेन। तस्मात्सूत्रार्थानुमानियवचनकल्पनापेक्षया ऽत्रैव सत्त्वरचनं युक्तमित्याह—प्रत्ययेति। एतेन तदङ्गीकारे मानाभाव इत्युक्तम्। एतेन प्रत्ययपर्युदासे सातिग्रहणं लिङ्गमित्यपि परास्तम्। अत एव प्रत्ययः किं हरिषु करोषीत्यत्र सुप्तिपोर्माभूदिति प्रत्युदाहरणमपि प्रत्युक्तम् प्रत्ययमात्रे उत्तरख्यानमिति प्रमङ्गादिति रत्नाकरोक्तं चापास्तम्। सौत्रसातिग्रहणस्यैव मानत्वात् अत्र सूत्रे तादृशार्थवत्त्वग्रहणेन प्रत्ययस्य तत्त्वस्योक्तत्वाच्च। एतेन भाष्यादिमानाभावो ध्वनितः। स चानुपदमेव स्फुटीभविष्यति। तत्त्वमुपपादयति—**सातेरिति।** संयोगान्तलोपाभावादाह—**औत्सर्गिकेति।** अपि प्रकृत्यादिसमुच्चायकः। नचैवं प्रकृतिप्रत्ययोः समासापत्तिः। बहुचश्छिरस्ववैयर्थ्यापत्तेः। तद्ध्वनयन्नाह—**निषेधेति।** पदत्वेत्यादि। अत्र इति भाव इति सूचितारुचिस्तु वस्तुतस्त्वित्यादिना स्फुटीभविष्यति। **सोर्दुर्वारत्वादितीति।** न केवलमिति निषेधात्मकसामर्थ्यात्स्ति भावः। तच्छ्रवणापत्तिदोषो न मूलाभिप्रेत इत्याह—तस्य चेति। **लुगिति।** एतेन हल्ङ्याब्भ्यादिलोपेन श्रवणं न, धातुपाठे धनवनेत्युच्चारणसामर्थ्येन वलोपधनत्वे च नेति यद्यपि न क्षतिस्तथाप्यकारात्सोरुत्पत्तौ श्रवणापत्तिरिति दण्ड्युक्तमपास्तम्। अन्तरङ्गानपीति न्यायेन लोपाप्राप्ते, धनादिभ्यो ल्यपि तुगतोलोपाभावार्थतया नकारोच्चारणसाफल्याच्च। ननु समुदायावयवयोः समकालं संज्ञायां तस्य तदवयवत्वं दुर्घटमत आह—**अन्तरङ्गत्वादिति।** प्रथमोपस्थितत्वा

### सरला।

**व्यर्थमितीति।** प्रत्ययपर्युदासाभावे साते प्रत्ययस्य पदादित्वादेव षत्वनिषेधसिद्ध्या सूत्रे सातिग्रहणं व्यर्थं सत् 'अर्थवत्' सूत्रेऽप्रत्ययपदस्यावृत्तिं बोधयत् प्रत्ययपर्युदासज्ञापकमिति भावः। वस्तुतस्तु "अर्थवदिति वर्तते" इति भाष्ये कृत्तद्धितसूत्रेऽर्थवत्पदस्यानुवृत्तिबोधनाद् 'अन्यायश्चानेकार्थत्वम्' इति न्यायेनोभयोरपि सूत्रयोरेकविधस्यैवार्थवत्त्वस्य ग्रहणावश्यकतयोत्तरसूत्रे शास्त्रीयार्थवत्त्वग्रहणस्यार्थवत्पदानुवृत्तिवैयर्थ्येनाशक्यतया लौकिकार्थवत्त्वस्यैव ग्रहणमर्थवत्सूत्रेऽपि तादृशस्यैवार्थवत्त्वस्य ग्रहणे लौकिकार्थवत्त्वस्य च प्रत्ययमात्रेऽसम्भवान्न प्रत्ययपर्युदासस्यावश्यकता, नापि सातिग्रहणवैयर्थ्यं चेति शेखरे निरूपितम्। लौकिकार्थवत्त्वं चाग्रे निरूपयिष्यते।

### शब्दरत्नम् ।

त्वमक्षतम् । पचति, घ्वनतीत्यादौ नावयवानां सा । धातुप्रत्ययान्तपदयोस्तदवयवपरत्वेन तत्र तन्निषेधात् । तस्मादव्युत्पन्नप्रातिपदिकावयवेभ्यस्तदुत्पत्तिरापाद्या । धनशब्दस्य

### भैरवी ।

वयवादुत्पन्नस्य श्रवणापत्तिरत आह—पचतीति । तन्निषेधादिति । प्रातिपदिकसञ्ज्ञाप्रसक्तिनिषेधादित्यर्थः । अत्र धात्ववयवादुत्पन्नस्यापि लुकः प्रहारस्तु नोक्तः, अधातुरितिपर्युदासात् । प्रत्ययावयवस्याप्येवं श्रवणापत्तिः । समुदायस्य प्रातिपदिकावयवत्वन्तु न, अप्रत्यय इति पर्युदासात् । न च यदि धातुप्रत्ययपदयोस्तदवयवे लक्षणा तदा तयोरेव निषेधो न स्यादिति वाच्यम्, प्रागुक्तकृत्तद्धितग्रहणकृतनियमेन तयोर्वारणात् । तस्मात्—व्युत्पन्ने उक्तरीत्या दोषवारणात् । आपाद्या—आपादनार्हा । एतेन भाष्योक्तं धनं वनमिति प्रत्युदाहरणमेतयोरव्युत्प-

### भावप्रकाश ।

न्नत्वादित्यर्थः । अत एव "यावद् गकारे वाक् न तावदाकारे" इति भाष्य सङ्गच्छते । एतेन समराज्ञ इति समवरन्मूनस्थकैरक्षिन्य इति ध्वनितम् । प्रत्यान्द्विवचनप्रायस्य तु नात्र प्रवृत्तिः । समुदायेनार्थेनावयवानामननुभवात् । यत्तु युगपत् समुदायोपस्थित्यभावान्न्यायाविषयता, बौद्धसमुदायसत्त्वेऽपि उच्चारणे वाचिकक्रमाभिव्यक्तस्यैव शब्दस्यात्र शास्त्रे बलवत्त्वमिति, तन्न तथा क्वाप्यभावेन न्यायोच्छेदापत्तेः । द्वित्वस्थले एव तथाऽसम्भवेन मूलोच्छेदापत्तेश्च । सुपि सतीति । न केवलमितिनिषेधात् । तल्लक्षासामर्थ्याच्च विशेषेण स्वादिविधिना सज्ञाया स्वकार्यनाशकाराच्च उत्पन्नस्यापि लुगादिनेव निवृत्तिरित्युक्तप्रायर्थः । नियमस्य सन्निहितप्रकृत्यर्थापेक्षया प्रत्ययनियमस्य वाऽभ्यर्थनानुरोधेनाङ्गीकारादिति भावः । अत एव सुपास्तुकस्तु न तु मूलकृदन्तादिति । अक्षतमिति । एतेनाजुत्तरस्यान्त्यश्रवणापत्तिरित्यपास्तम् । तथाच धनाद्यवदोषा दधवद्ग्रहणे व्यर्थमितिभावः । यत्तु चित्रापति विदम इत्यादौ रदयोः पदान्तत्वात् "दरव" "परोनुना" इति विसर्गानुनासिकापत्तिरिति दण्डी, तन्न, तत्र सुप्श्रवणापत्तिसम्भवेन विसर्गादिपर्यन्तधावने बीजाभावात् । वक्ष्यमाणयुक्तेश्च । तद्ध्वनयितुं तत्रैव दोषं द्रढयितुं च मध्ये प्रासङ्गिकमाह—पचतीति । सा—प्रातिपदिकसञ्ज्ञा । तथा सति क्वचिज्जदत्वाद्यापत्तिः क्वचित्तु णत्वापत्तिः तत्र समुदायस्य तत्त्वेन पर्युदासेन सञ्ज्ञया लुगप्राप्तेरिति भावः । तदवयवेति । नचैवं समुदाययोरापत्तिः, प्रागुक्तकृत्तद्धितग्रहणकृतनियमेन वारणात् व्यपदेशिवद्भावेन तयोरपि तत्त्वाच्च । ननैवमप्युक्तनियमेन तत्प्रत्याख्यानपरभाष्यविरोधः तस्यार्थवत्परत्वाशयकत्वात् । तदभावे च तयोरेव सार्थक्ये सत्येतदर्थाकल्पनयोक्तरीत्या प्रत्याख्यानमनुचितम् । व्युत्पन्नशब्दं विहायाव्युत्पन्ने धनादौ नलोपापादनपरभाष्यासङ्गत्यापत्तेः मतिग्रहणाच्चे बलप्रत्ययस्यापि सा नेति भावः । तस्मादिति । व्युत्पन्ने प्रोक्तरीत्या दोषाभावादित्यर्थः । आपाद्या । आपादनार्हा । सा च भाष्ये मूले चोक्तैव धनादिकमव्युत्पन्नमिति भावः । व्युत्पन्नतीति । यास्कोक्तेरिति भावः । वनादीति । स तत्र व्युत्पन्न, तत्र तेन तदनुक्तेरिति भावः । अत एव मुद्यनया वनमित्या युक्त्वा नलोपापत्तिमात्रदोषो भाष्येऽभिहितः । तत्र सूत्रे मूले चेत व्याख्या वनमित्यग्रे उक्तम् । यद्वाऽनेन भाष्ये धन वनमपरेन पाठ इति सूचितम् । अत एव द्वयवत्सूत्रभाष्येऽक्वाप्यत्र । तत्र नलोपादीनात्युक्तिस्त्वत्रैव लोपोऽव्योरिति लोपाभिप्राया । धकारे नदत्वभादिपदार्थं इतिनत्रोद्बोनोक्तिस्तु सिद्धान्ताभिप्रायेति न विरोध इति भावः । ननु तत्पक्षे तत्रापि सदवयवार्थव्युत्पत्तिसम्भव वनत्रण सम्भक्ताविव्यनुसारादत आह—

### सरला ।

अक्षतमिति । तथा च न तत्र सुप्श्रवणापत्तिरिति भावः । तदेव दर्शयते—तस्मान्नलोपेति । तदवयवपरत्वेनेति । अर्थवद्ग्रहणाभावे कृदन्तस्य तद्धितान्तस्य चानेनैव सञ्ज्ञासिद्धौ तन्नियमार्थं भविष्यति प्रत्ययान्तस्य प्रत्ययस्य वा प्रातिपदिकसञ्ज्ञा चेत् कृदन्ततद्धितान्तयोः कृत्तद्धितयोरेव वेति । तथाच समुदायस्य तत्र तेनैव व्यावृत्तिसिद्धौ धातुप्रत्ययपदे तदवयवपरे इति तात्पर्यम् ।

तत्रैव विभक्तिविशिष्टयोर्मा भूत् । न चान्तवद्भावेन काण्डे, कुड्ये, इत्यादौ प्रातिपदिकत्वं स्यादेव । तथा च "ह्रस्वो नपुंसके-" इति ह्रस्वत्वं सोरुत्पत्तिश्च स्यादिति वाच्यम् । कार्यकालपक्षेणेष्टसिद्धेः । यथोद्देशेऽपि विभक्त्येकादेशो नान्त-

शब्दरत्नम् ।

तत्सत्त्वे ■ पदादित्वेन णत्वनिषेधापत्तिर्दोष इति भाव । तत्रैवेति । अत्राप्यौत्सर्गिकैकवचनापत्ति "सुपो धातु-" इति लुगापत्तिश्च, पचेरन्नित्यादौ नलोपापत्तिश्चेति भाव । स्यादेवेति । पूर्वं विभक्त्युत्पत्तेः जातस्यातिदेशेन विभक्त्यन्ते वृद्धिरिति भाव । यथोद्देशेऽपीति ।

भैरवी ।

इत्यनयोरर्थयो सुबर्थक्रियारूपयोर्लिङ्गसंख्याभ्यां योगो नास्ति विचित्रत्वात्पदार्थशक्तीनामित्यभिहितम् । तत्सत्त्वे त्विति । नपुंसकत्वमत्त्वे त्वित्यर्थ । अत्र तुना प्रागुक्तभाष्यविरोधापत्तिरूपाऽरुचिर्ध्वनिता । सूत्र—पचेरन्निति । इरिषु करोषास्थत्रेत्यर्थ । नन्वत्र नास्त्सर्गिकैकवचनापत्तिर्गमकाभावात् । नच पूर्ववत् प्रातिपदिकसंज्ञासामर्थ्यमिति वाच्यम्, फिट्स्वरप्रवृत्त्या साफल्यात् सुबिति पकारस्य प्रत्याहारनिष्पादकतया सिद्धौ पित्त्वस्याङित्त्वसम्पादकतया चारितार्थ्यसम्भवात् । नच समासस्यान्तोदात्तविधानसामर्थ्यात्सलगदेषु फिट्स्वराप्रवृत्तिरिति वाच्यम् पदसंज्ञकपूर्वोत्तरभागकसमुदायविषयऽप्रवृत्तिज्ञापनेन तस्य साफल्यादत आह—सुप इति । तिङन्ते दोषमाह—पचेरन्निति । आदिना सर्वस्मिन्नित्यस्य सङ्ग्रह ।

सूत्रे—ष्टसिद्धेरिति । प्रत्ययान्तपर्युदासेनेष्टसिद्धिरित्यर्थ । अतिदेशेन—अन्तवत्त्वातिदेशेन । एतेन लक्ष्ये लक्षणं सकृदेव प्रवर्तत इति न्यायाविषयत्वं ध्वनितम् । अत्रातिदेशेनेतिकथनेनो-

भावप्रकाश ।

रमते इत्याद्यर्थयो सुबर्थक्रियारूपयोर्लिङ्गसंख्याभ्यां योगो न ■ येनास्ति विचित्रत्वात्पदार्थशक्तीनामिति 'ह्रस्वो नपुंसके' इत्यत्र भाष्यवैयर्थ्यादिना सङ्गच्छते । एतेनाप्रत्ययं स्मिन् । इत्यनेन । नपुंसकह्रस्वो माभूदिति रत्नकारोक्तमपास्तं, सूत्रद्वयस्थैवैयर्थ्यात् । तत्सत्त्वे त्विति । नपुंसकमत्त्वे त्वित्यर्थ । तुनाऽरुचिर्बोधिता प्रागुक्तभाष्यादिविरोधरूपा । व्युत्पत्तिफलं यथाकथञ्चित्सूत्राशयप्रदर्शनद्वारा भाष्याद्यानुकूल्यसम्पादनम् । तदाह—इति भाव इति । ननु न औत्सर्गिकैकवचनं, गमकाभावात् । नच प्राग्वत्तत्सामर्थ्यं गमकं, फिट्स्वरप्रवृत्त्या साफल्यात् । सिपादि पित्त्व तत्फलं न्याय्यम् । नच समासस्येत्यन्तोदात्तविधानात्सलगादिषु तदप्रवृत्ति, सुप्तिङन्तमिलितदसञ्ज्ञकपूर्वभागकसमुदायेऽप्रवृत्तिज्ञापनेनापि तस्य साफल्यात् । नचैवमपि "अनुदात्तौ सुप्पितौ" इत्याद्यानर्थक्यापत्त्या तत्र तदप्रवृत्त्या तत्सामर्थ्यं गमकमेवेति वाच्यम् । लुकून् लोपाद्यनिष्टापादनेनापि साफल्यात् । एतेन प्रागप्येवं वक्तुं शक्यमिति तत्र तत्सामर्थ्यात्तदापत्तिरयुक्तैत्यपास्तम्, तत्र लुगाद्यापादनेन आह—सुप इति । तिङन्ते आह—पचेरन्निति । आदिना 'सर्वस्मिन्' इत्यादिसङ्ग्रह । अत्राप्यौत्सर्गिकैकवचनापत्तिरिति भाव इत्यग्रे सूचितारुचिस्तु स्फुटा भविष्यति । उत्पत्तेरिति । अनेन पक्षद्वये पूर्वं तदावश्यकत्वसूचनम् । अतिदेशेन—अन्तवत्त्वेन । एतेन "लक्ष्ये लक्षणस्य" इति न्यायेन पुनरप्रवृत्तिरित्यपास्तम्, लक्षणभेदात् लक्ष्यभेदाच्च । ■ यथाऽतिदेशशास्त्राणां वैयर्थ्यापत्तिरिति भाव । ननु तेन कार्यकालपक्षेणेत्युत्तरासङ्गति उपदेशप्रवृत्तेरनुक्तत्वात् । तथा हि सति सरादिवत्तवैकादेशस्य प्रत्ययत्वात्तदन्तत्वमार्थसमाजग्रस्तमस्तीति तथा वक्तुं युज्येत । अत एवातिदिष्टेनेति न्यायाविरोध । एतेन काण्डे इत्यादावन्तवत्त्वेन तत्त्वं दुर्वारमित्यत्र प्रत्ययत्वस्य लाघवात्पर्युदासवचनात्स्थानिवत्त्वादप्रत्ययान्तत्वानपायादिति रत्नाकरकृदुक्तिरनवधानमूलक । अन्तवत्त्वप्रयुक्तेऽसाधनेऽप्रत्यय

सरला ।

तथा शाब्दबोधे प्रातिपदिकत्वोपस्थितेरेव कारणत्वेन विभक्त्यर्थस्य लिङ्गं प्रति कारणत्वाभावेन लिङ्गबोधस्याभावादित्यर्थ । तत्सत्त्वे त्विति । लिङ्गबोधकत्वमत्त्वे त्वित्यर्थ ।

वत्, "सप्तम्यधिकरणे च" इत्यादिनिर्देशात्। "ह्रस्वो नपुंसके–" इति सूत्रे प्रातिपदिकग्रहणं वा उक्तार्थे सामान्यापेक्षं ज्ञापकमस्तु।

शब्दरत्नम्।

अपिना कार्यकालपक्षेऽपि। न हि तत्र पक्षे उपदेशेनैवैकवाक्यता न अतिदेशेनेत्यत्र मानमस्ति, अतिदेशैकवाक्यतयैव ह्रस्वप्राप्तेः सुवचत्वात्। प्रातिपदिकग्रहणं वेति। नपुंसकवृत्तित्वस्य प्रातिपदिकधर्मत्वान्नपुंसके वर्तमानस्येत्यर्थेनैव प्रातिपदिकलाभे सिद्धे तस्य व्यर्थत्वादिति भाव.। उक्तार्थे–विभक्त्येकादेशस्यान्तवत्त्वाभावे। सामान्यापेक्षमिति। अन्यथा ह्रस्व एव न स्यात्स्वाद्युत्पत्तिस्तु स्यादेवेति भावः। यद्यपीह प्रातिपदिकग्रहणं सत्त्वप्रधा-

भरवो।

पदेशिकप्रातिपदिकस्वरूपाप्रवृत्तिः सूचिता। परादिवत्त्वेनैकारे प्रत्ययत्वस्यैकदेशविकृतन्यायेन डान्ते तत्त्वस्य सत्त्वेन प्रत्ययान्तत्वस्यार्थसमाजग्रस्तत्वेन तन्निषेधात्। ननु "ह्रस्वो नपुंसके" इति सूत्रस्य पूर्वोक्तभाष्यादलिङ्गत्वेन निर्देशस्योपपत्त्या न तस्य ज्ञापकत्वमिति चेत्? न, अभ्युपेत्यवादेन मूलकृता तथाभिधानात्। प्रातिपदिकग्रहणस्य ज्ञापकत्वमुपपादयति—नपुंसकेति। नपुंसकवृत्तित्वं वाच्यवाचकभावसम्बन्धेन। लाभे सिद्धे—लाभे जाते। अन्यथा—सामान्यापेक्षज्ञापकत्वानङ्गीकारे। अप्रत्ययः किमित्यारभ्यास्त्वित्यन्तो मौलग्रन्थो ऽयुक्त एवेति ध्वनयितुमाह—यद्यपीत्यादि। सत्त्वप्रधानेति। कल्पितसत्त्वप्रधानकेत्यर्थः। एतच्च यदर्थं शास्त्रे नपुं-

भावप्रकाशः।

यान्तत्वस्यानपेक्षणेन मिथाविरुद्धत्वाच्च तन्निमित्तकैकल्ये एवातिदेशप्रवृत्तेरङ्गीकाराच्च। अन्यथाऽनिदेशानर्थक्यापत्तेः। एतेन तस्य पर्युदासत्वात्तत्पक्षेणेष्टसिद्धिरिति नव्योक्तमयुक्तमिति तदुक्तमपास्तम्। तत्पर्युदासत्वयोस्तत्रास्येष्टसिद्धावबाधकत्वात्तत्पक्षे जातस्य नष्टत्वादित्याशयाच्च। मन्मते तु तत्र दृष्टव्यवहारातिदेशेन दोषनाद्वस्थ्यमत आह–अपिनेत्यादि। एतेनापि यथेष्ट इति भ्रान्तोक्तमपास्तम्। अत्रापिना यथोद्देशासमुच्चयः। कार्यकालपक्षेणेत्यस्योपलक्षणत्वसूचनायापिः आवृत्त्या तत्रापि योजनाय वा। उक्तमेवार्थमाह–नहीति। तत्र पक्षे–कार्यकालपक्षे। अतिदेशेन–अन्तवत्त्वेन। एवेनोपदेशैकवाक्यतानिरासः, तस्याप्राप्तेः। ह्रस्वनोऽप्रत्ययान्तत्वेऽपि परादिवत्त्वेनैकादेशस्य प्रत्ययत्वेन तदन्तत्वस्यार्थसमाजग्रस्तत्वेनातिदिश्यमानेति न्यायविरोधादिति भावः। सुवचत्वादिति। तथा चोभयत्र ज्ञापकाश्रयणमावश्यकं, तच्चापिना कार्यकालपक्षेऽपीत्यर्थेन यथोद्देशेऽपीत्यादिना तदुपपादनेन च मूलकृता सूचितमिति भावः। ननूक्तभाष्यादलिङ्गत्वेन निर्देशसङ्गत्या कथं तस्य ज्ञापकत्वमत आह मूले–ह्रस्वो नपुमिति। वृत्तित्वस्येति। वाच्यवाचकतासम्बन्धेनेति भाव.। लाभे सिद्धे इति। लाभे तत्कार्ये च सिद्धे इत्यर्थः। एतेन सिद्धे इत्यधिकमित्यपास्तम्। स च लाभोऽर्थवशादुत्तरपदानुवृत्त्या आक्षेपाद्वेत्यन्यदेतत्। साधारण्यं सूचयितुं भाष्यादौ यथोद्देशसम्बन्धनिवारणायाह—विभक्तीति। "सूचीप्रवेश" इति न्यायेन मूलच्छेदात्। अप्रत्ययान्तः किमित्यादि अस्तु इत्यन्तग्रन्थोऽयुक्त एवेति ध्वनयितुमाह–यद्यपीत्यादि। सत्त्वप्रधानेति। कल्पित-

सरला।

कार्यकालपक्षेऽपीति। तत्र पक्षेऽपि 'काण्डे' इत्यत्र "अन्तादिवच्च" इत्यतिदेशसूत्रेण पूर्वान्तवद्भावेन काण्डवृत्तिप्रातिपदिकत्वधर्मस्यातिदेशेन प्राप्तह्रस्वस्य वारणार्थं "विभक्त्येकादेशो नान्तवत्" इति निषेधस्यावश्यकत्वादिति भाव.। परादिवद्भावेन प्रत्ययान्तत्वमादाय 'अप्रत्यय.' इति निषेधस्तु वक्तुम शक्य., उभयत आश्रयणे तन्निषेधादिति भाव।

सत्त्वप्रधानेति। सत्त्वप्रधानत्वं च यत्किञ्चित्प्रधानतानिरूपितप्रधानत्वासमानाधिकरणलिङ्गान्वयितावच्छेदकरूपावच्छिन्नप्रधानताप्रयोजकत्वम्। सत्त्वपदेन लिङ्गान्वयितावच्छेदकरूपपुरस्कारेण बुध्य

यत्तु वदन्ति—प्रत्ययपर्युदासो न कर्तव्यः, प्रत्ययान्तपर्युदासेनैव गतार्थत्वात्, व्यपदेशिवद्भावेन तस्यापि प्रत्ययान्तत्वादिति । तन्न । प्रत्ययग्रहणे यस्मा-

शब्दरत्नम् ।

नप्रातिपदिकग्रहणार्थं तेनात्र न ह्रस्वः । मूलोक्तार्थे ज्ञापिते चारिताथ्र्यं दुर्निरूपं च । संख्या कर्माद्ययोगात्स्वाद्युत्पत्तिरपि न । औत्सर्गिकमेकवचनमपि न, गमकं विना तदनुत्पत्तेः । "सुपो धातु—" इति लुगपि न, धातुसाहचर्येण सुप्तिङितरसमभिव्याहृतस्यैव तेन लुग्विधा-

भैरवी ।

सकृद्गुणः प्रसिद्धस्तादृशस्य प्रातिपदिकस्य तादृशेऽर्थे वर्तमानस्य ह्रस्व इति सूत्रार्थः । 'ननु मूलोक्तमुपायान्तरमस्त्वित्यत आह—मूलोक्तार्थ इति । दुर्निरूपञ्चेति । तथाच ज्ञापकत्वैवायुक्तेति

धातुसाहचर्येणेति । धात्ववयवस्य यादृशस्य सुपो लुग्भवति तादृशस्यैव प्रातिपदिकावयवस्य तस्य लुग्भविष्यति, साहचर्यात् । ननु साहचर्यं सादृश्यं, तच्च साधारणधर्मप्रयोज्यमेवान्यत्र स्पष्टं प्रकृते तु तादृशो धर्मः क ? इत्याशङ्कायामाह—सुबित्यादि । समभिव्याहृतस्येत्यनन्तरं 'सुप' इति शेष. । व्यधिकरणे षष्ठ्यौ प्रथमषष्ठ्यन्तार्थ. सुप इत्यत्र या षष्ठी तत्प्रकृत्यर्थस्य

चालनीन्यायो ऽत्र बोध्यः । एवञ्च राजन्शब्दप्रकृतिकसुबन्तभिन्न· पुरुषशब्दस्तत्समभिव्याहृतम्प्रातिपदिकं राजन्निति तत्प्रकृतिकत्वं ङसो यथा तथा स्वन्तभिन्नराजन्शब्दसमभिव्याहृ-

भावप्रकाश ।

सत्त्वप्रधानतावेत्यर्थः । अन्यथोक्तरीत्या वैयर्थ्यं स्पष्टमेव । तथाच यद्धर्मस्य शास्त्रे नपुंसकं गुणः प्रसिद्धस्तस्य नपुंसकलिङ्गवदर्थे विशेष्यतया वर्त्तमानस्य ह्रस्व इति सूत्रार्थ इति भाव. । स्पष्ट चेदमत्र सूत्रे "ह्रस्वो नपुंसके" इत्यत्र च भाष्ये । ननूपायस्योपायान्तरादूषकत्वान्मौलोऽप्युपायः साधुरेवात आह—मूलोक्तेति । तथा च ज्ञापकत्वैवायुक्तेति भावः । प्रागुक्तदोषान् क्रमेणोद्धरति—संख्येति । ननु नाम प्रागुक्तोऽस्त आह—औत्सर्गिकमिति । अयमपि प्रागुद्भूतप्रायोऽत आह—सुपो धात्विति । सुप्तिङितरेति । सुबन्ततिङन्तप्रतियोगिकभेदवद्यत्किञ्चित्समभिव्याहृतस्य सुप इत्यर्थः । घटकीभूतयत्किञ्चित्प्रकृतिभिन्नत्वे सति तादृशसुप्तिङ्भिन्न यत्तद्घटकं तत्समभिव्याहृतस्य धातुप्रातिपदिकान्यतरावयवस्य

सरला ।

मानस्य, प्रधानपदेन च संसर्गविशेष्योभयवृत्तिः निरवच्छिन्नविशेषणताश्रयावृत्तिर्विशेष्यतासंसर्गताव्यापकाभूतः प्रकारतानिरूपितत्वाख्यो यः स्वरूपसम्बन्धविशेषः तदाश्रयस्य विवक्षितत्वात् । 'काण्डे' इत्यादौ सप्तम्यर्थसंसर्गनिष्ठप्रधानतानिरूपिताप्रधानत्वसामानाधिकरण्यमेव लिङ्गान्वयितावच्छेदककाण्डत्वरूपावच्छिन्नप्रधानतायामिति तेनात्र न ह्रस्व इति भावः ।

**सुप्तिङितरसमभिव्याहृतस्येति** । सुप्तिङौ च इतरश्चेति द्वन्द्वो न तु पञ्चमीतत्पुरुषः सुप्तिङ्भ्यामितराविति । तथा सति 'हरिषु' इत्यत्रैव सुप्तिङितरप्रकृतिसमभिव्याहृततया लुगापत्तेः । द्वन्द्वस्याश्रयणे तु अन्यश्च सुप्तिङ्साहचर्यात्प्रत्यय एव । तथाच सुप्तिङन्यतरतद्भिन्नप्रत्ययसमभिव्याहृतस्य सुपो लुगिति तत्सूत्रार्थः । तेन पुत्रीयति राजपुरुषः इत्यादौ सुब्लुक्, हरिषु इत्यत्र च न स इति । काण्डे इत्यत्रापि ङकस्यैव सुपः सत्त्वेन तत्र सुप्तद्भिन्नप्रत्ययस्याभावान्न दोष इति भावः ।

शब्दरत्नम् ।

नात । एवं च प्रत्ययान्तपर्युदासो न कर्तव्य इति सूत्रशेषे भाष्ये ध्वनितम् । पचेरन्, सर्वस्मिन्नित्यादौ नकारोच्चारणसामर्थ्येन ननलोपः; तथाप्येतावत्क्लिष्टकल्पनापेक्षया लाघ

भैरवी ।

तत्प्रातिपदिकम्पुरूपेति तत्प्रकृतिकत्वं सोरित्युभयोर्लुक: सिद्धिः । अत्र सुप्तिङितरसमभिव्याहृतत्वञ्च तेन पूर्वोत्तरभावरूपम् पुरुषाभ्यामित्यादौ सुब्भिन्नो भकारस्तत्समभिव्याहारस्य पूर्ववृत्तित्वरूपस्य पुरुषशब्दे सत्त्वेन तत्प्रकृतिकस्य भ्याम एव लुगापत्तेः । नापि तदर्थान्वितस्वार्थबोधकत्वं समभिव्याहार:, अत्यन्तस्वार्थिकतद्धितान्तावयवस्य सुपो लुगनापत्ते । 'राजपुरुष सुन्दर' इति वाक्यावयवस्य राजपुरुषशब्दप्रकृतिकसुपो लुगापत्तेश्च ; किन्तु सुप्तिङितरसमभिव्याहृतत्वन्तद्घटितप्रकृतवृत्तिघटितत्वरूपं विवक्षितम् । एवञ्च सुप्तिङितरघटितवृत्तिघटकप्रातिपदिकप्रकृतिकसुपो लुगति सूत्रार्थः । नचत्रमपि 'राजपुरुष' इत्यत्र समुदायप्रकृतिकसुपन्तर्भिन्नो राजन्शब्द: पुरुषशब्दो वा तद्घटिता वृत्ति: समुदायरूपा राजपुरुष इति तद्घटकत्वस्य तद्विषयकप्रतीत्यविषयत्वस्य तत्रैव सत्त्वेन तत्प्रकृतिकसुपो लुगापत्तिरिति वाच्यम्, वृत्तिघटकत्वञ्च स्वात्तिविषयकप्रतीत्यविषयत्वमात्रम्, किन्तु स्वाविषयकप्रतीत्यविषयवृत्तिकत्वे सति वृत्त्यविषयकप्रतीतिविषयत्वरूपमिति न कश्चिद्दोष: । अत्र तिङोऽभिधानं [illegible] लुक: प्रसिद्धत्वसूचनाय । वस्तुत

स्फुटैवेति भाव: ।

प्रत्यय इत्यत्र "किम्पुनरयम्पर्युदास - यदन्यत्प्रत्ययादिति, आहोस्वित्प्रसज्यायम्प्रतिषेध -प्रत्ययो नेति, कश्चात्र विशेष: ? अप्रत्यय इति चेत्तिरेकादेशे प्रतिषेधो ऽन्तवत्त्वात्काण्डे कुड्ये । अस्तु तर्हि प्रसज्यप्रतिषेध -प्रत्ययो नेति । न प्रत्यय इति चेद् कुड्येकादेशे प्रतिषेध आदिवत्त्वात्" इत्युक्तम् । परस्य कार्यं प्रतिषेद्धव्ये परादिवद्भाव स्यात्तथात्र प्रतिषेधापत्तिरिति भाव । एवञ्च ब्रह्मबन्धूरिति न सिध्यति। इत्यम्पक्षद्वये दोषमभिधाय द्वितीयपक्षे "आचार्यप्रवृत्तिर्ज्ञापयति-उत्पद्यन्ते ऊङन्तात्स्वाद्य इति,यदयं "नोङ्धात्वो:"इति विभक्तिस्वरस्य प्रतिषेधं शास्ति"इत्यनेन दोषोद्धारं कृत्वा "अथवा पुनरस्तु पर्युदास:। ननु चोक्तमप्रत्यय इति चेत्तिरेकादेशे प्रतिषेधोऽन्तवत्त्वादिति? प्रसज्यप्रतिषेधेऽप्येष दोष:। इ्ं अत्र प्रातिपदिकमंशे अवयवस्यापि समुदायस्यापि। गृह्यते च प्रातिप

वद्भावेनार्थः शक्योऽतिदेष्टुमिति न भवति ह्रस्व इति ।

नन्वेवमपि पचेरन्नित्यादौ दोष एवेत्यत आह—पचेरन्निति । लाघवात्—ज्ञानलाघवात् । 'केवलस्यातथात्वादिति मूलमसङ्गतम्' यस्माद्विहित इत्येतद्घटितपरिभाषाया अधिकग्रहणा-

भावप्रकाश ।

सुप इति यावत्। अस्ति च पुत्रीयतीत्यादौ पुत्र अमित्युभयभिन्नत्यच्समभिव्याहृतत्व सुपि । एव राजपुरुष इत्यादावपि चालनीन्यायेन तद्भिन्नत्तत्समभिव्याहृतत्व सुपि। हरिषु करोषीत्यादौ तु द्वन्द्वे उभयभेदेऽपि तदभावान्नातिव्याप्तिः । समभिव्याहारश्च व्यवहिताव्यवहितसाधारण । यद्वा, समभिव्याहृतघटित प्रातिपदिकं तदवयवस्य सुप इत्यर्थः । शेष प्राग्वत् । विभक्त्यन्यानेकघटितप्रातिपदिकावयवस्येति तु निष्कर्षः । सुबन्यानेकघटितेत्यादिस्तु परमनिष्कर्ष । सुपः परघटितप्रातिपदिकेत्यादि तु तत्त्वम् । एवञ्चेति। उक्तरीत्या दोषसामान्याभावे चेत्यर्थः । सूत्रेति । प्रकृतसूत्रेत्यर्थः । "तस्मादुभाभ्यामपि वाच्यम्—यत्तस्येति । किं च नपुंसके । नपुंसकं यस्य गुण । कस्य च नपुंसक गुण । प्रातिपदिकस्य"इति ग्रन्थेनेति भाव । स्पष्टं चेदमुद्द्योते । एवमपि पचेरन्नित्यादौ दोष एवात आह—पचेरन्निति। लाघवात्—ज्ञानलाघवात् ।

त्स विहितस्तदादेर्ग्रहणात्। केवलस्य च अतथात्वात्। अन्यथा त्वदुक्तरीत्या सुप्तिङोरपि तदन्तत्वात् पदत्वं स्यात्। तथा च हरिषु, करोषि, इत्यादौ षत्वं न स्यात् "सात्पदाद्योः" इति निषेधात्। अधातुप्रत्ययाविति सिद्धे नञ्द्वयोपादानं स्पष्टार्थम्। महासंज्ञाकरणं श्रुत्यनुरोधात्। तथा चाथर्वणे पठ्यते—"को धातुः ?

---

शब्दरत्नम्।

चाप्रत्ययान्तपर्युदास एवोचित इति भावः। अतथात्वादिति। यस्माद्विहितस्तदादित्व स्याशास्त्रीयत्वेन व्यपदेशिवद्भावालभ्यत्वादिति भावः। निषेधादिति। यद्यपि व्यपदेशिवद्भावेनैकाच्त्वादेरिवास्याप्यशास्त्रीयस्यातिदेशेन क्रामसम्भवोऽत एव भवतीत्यादौ भवतेः शब्निरूपिताङ्गत्वसिद्धिः, व्यतिमे इत्यादौ से इत्यस्य पदत्वसिद्धिश्च, हरिरित्यादौ कार्यकालपक्षे तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वसिद्धिश्च, सुवाप्तये सत हलन्तत्वनि-न्धनफलसिद्धिश्च; तथाऽप्यसहाय एव व्यपदेशिवद्भावो न ▪ ससहाये, तेनेतरावयवे तद्-प्रवृत्तिः। स्पष्टा चेयं रीतिः "आदेच उपदेशे" इत्यत्र कैयटे। अत एव समासंनयने व्यपदे-शिवद्भावेनाकारस्य नादित्वं, दरिद्राधातावित्कारस्य मान्तत्वं, तथा सति वृद्धत्वप्रयुक्तच्छः,

भरवी।

भाव एव प्रयोजनमस्तु व्यपदेशिवद्भावस्य तथा बाध॰' इति केनचिदुक्तन्तदसङ्गतमिति सूचय-न्नाह—यस्माद्विहित इति। किञ्चैतादृशे विषये मन्त्रेषु सर्वेषामित्यादौ षत्वनिषेधाकरणेन व्यप-देशिवद्भावो नेत्यपि बोध्यम्। उक्तज्ञापकाननुसन्धानेन शङ्कते-यद्यपीति। अत एव—अशास्त्री-यस्याप्यतिदेशादेव। व्यातसे इत्यादावित्ति। आदिना 'व्यतिध्वे' इत्यस्य संग्रहः। फगिति "य-ञिञोश्च" इत्यनेनेति शेषः। सामान्येनोक्तस्यापि स्पष्टप्रतिपत्त्यर्थम्प्रकृते आह—तेनेति। इय रीतिरिति। तर्हि-औक्तेत्यादौ नान्तरीयकत्वादुपदेशसत्त्वेऽपि न व्यपदेशिवद्भावेनैजन्तत्व-मिति तेनोक्तम्। अत एव—असहाय एव व्यपदेशिवद्भावस्य प्रवृत्तिस्वीकारादेव। तथान्ति-

भावप्रकाश।

अशास्त्रीयत्वेनेति। एतेनोक्तन्यायस्याधिकग्रहणाभावे एव तात्पर्यमस्तु न तु व्यपदेशिवद्भावबाधे, माना भावादयुक्तत्वाच्चेति भ्रान्तोक्तमपास्तम्। अत्र शास्त्रीयत्वं च शास्त्रबोध्यत्वम्। अस्ति चैनस्तदन्ततवे, येन विधिरित्यनेन बोधनात्, नैव यस्माद्विहितस्तदादित्वे इति भाव। निषेधादिति। नातिग्रहणेनापूर्व वचनकल्पनापेक्षया निषेध एवोचितः। एतेन तथाङ्गीकारेण मूलं दूषयन् खण्डनकार प्रत्युक्त। व्यपदेशि वदित्येव परिभाषेत्याशङ्कते—यद्यपीति। एकाच्त्वादेरिति। अन्यथा इयायेत्यादौ तन्निबन्धनद्वित्वानि द्धिरिति भावः। अत एवेति। अशास्त्रेऽपि तत्प्रवृत्तिस्वीकारादेवेत्यर्थः। इद सिद्धिचतुष्टयेऽन्वेति। शब्निरूपितेति। अनेनासहायता सूचिता। अत्रादिभि॰ क्रमेण भवति व्यतिध्वे इयानित्यादिसंग्रहः। व्यतिसे इत्यादि च्छान्दसम्। कार्यकालेति। यथोद्देशे सिद्धिस्तु प्रागवोचाम व्याख्याता च। ततः— षः। फगिति। "यञिञोश्च" इत्यनेन। अन्यथा यस्माद्विहितस्तदादित्वाभावात् सर्वं न स्यादिति भाव। असहाये इत्यर्थंकमेकस्मिन्नित्यपि परिभाषाङ्गमित्याशयेन समाधत्ते—तथापीत्यादि। सामान्येनो-क्तमपि दृष्टान्तवैलक्षण्याय प्रकृताभिप्रायेणाह—तेनेति। अत्रेति शेषः। रीतिरिति। औक्तेत्यादौ नान्तरीयकत्वेनौकारोपदेशसत्त्वेऽपि न व्यपदेशिवद्भावेनैजन्तत्वमिति तत्र तेनोक्तम्। वृद्धत्वेति। यस्या

सरला।

असहाये एवेति। असहायत्वं च मुख्यधर्मवदघटितत्वे सति मुख्यधर्मवदघटकत्वे सति मुख्यधर्म वदसमभिव्याहृतत्वम्। अत्र प्रथमसत्यन्तदानेन समासनयनशब्दे वृद्धत्वस्य, दरिद्राधातावित्कारान्तत्वस्य च नातिदेशः। द्वितीयसत्यन्तदानेन भामनयने प्रातिपदिकत्वस्य इरावत्र धातुत्वस्य च नातिदेशः। तृतीय-दलेन च आकारे समासनयननिरूपितादित्वस्य इकारे दरिद्रानिरूपितान्तत्वस्य च नातिदेश इति बोध्यम्।

किं प्रातिपदिकं ? कः प्रत्ययः" ? इति । डित्थादीन्यव्युत्पन्नानीहोदाहरणम् । अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकमिति प्राञ्चः । यत्तु व्युत्पत्तिपक्षेऽपि निपातार्थ-

### शब्दरत्नम् ।

इवर्णान्तत्वप्रयुक्तोऽच्प्रत्ययश्च स्यात् । तत्रात्र न किंचिद्वैषम्यम् । लोकेऽपि बहुपुत्रसत्त्वे नैकस्मिन् ज्येष्ठकनिष्ठादिव्यवहारो विजातीयकन्यादिसत्त्वे त्वेकस्मिन्नपि तथा व्यवहारो भवत्येवेति बोध्यम् । अत एव हरिष्वित्यादौ सो पदत्वं न । "निजौ चत्वार एकाच" इति भाष्यं त्वेकस्मिन्नित्यस्यापर्यालोचनयैकदेश्युक्तिरिति तात्पर्यम् । वस्तुतस्तु पर्युदासे-नैवार्थवत्त्वे लब्धे अर्थवद्ग्रहणादत्र सूत्रेऽपि विभक्तीतरानपेक्षया ऽर्थबोधकत्वमर्थवत्त्व

### भवत्वा।

समुदायेऽप्यनयोर्व्यपदेशिवद्भावस्य प्रवृत्तिस्वीकारे ।। साच परिभाषा लोकन्यायसिद्धेति लोके यादृशो व्यवस्था तादृश्येवात्र शास्त्रे तत्परिभाषाविषये इत्याह—लोकेऽपीति । अत एव समुदाये तदप्रवृत्तेरेव । नन्वेवं सति निजधात्ववयवैकारमात्रे व्यपदेशिवद्भावं ससहायस्यात्र स्यादिति "निजौ चत्वार एकाच" इति भाष्यमनुपपन्नमत आह— निजौ चत्वार इत्यादि । ता त्पर्यमिति । प्रत्ययपर्युदासाद्यैकदेश्युक्तिमूलकत्व इति शेषः । एतेनारुचिर्व्यंजिता, तामुद्भावयति—व स्तुतस्त्वित्यादिना । अत्र सूत्रेऽपीति । अपिनोत्तरसूत्रमवग्रह । तेनैकरूपता द्वयार्भवति, मूल-रीत्या तु वैरूप्यं स्फुटमेव । ननु भवदुक्तार्थवत्त्वमलौकिकविग्रहवाक्यस्य नास्तीति तस्यपा न

### भावप्रकाशः ।

त्वा मध्ये वर्त्तमानो वृद्धिरादैच्श्च स वृद्धसंज्ञ इति सूत्रार्थ इति भावः । ननु नाय दोष आदिग्रहणसामर्थ्येन सुटचादेरेव तत्र ग्रहणात्, अत आह—इवर्णान्तेति । तत इति । हरिष्वित्यादौ । यत इत्यादि । अत्र—दरिद्रादौ । तस्या लोकन्यायसिद्धत्वं ध्वनयितुं लोके दृष्टान्तमाह—लोकेऽपीति । अनियम्यत्वादिति शास्त्रसमुच्चायकः । इद चोभयत्रान्वेति—बह्विति । अनेकपुत्रसत्त्व इत्यर्थः । ज्येष्ठादीत्येव सिद्धे कनिष्ठादीत्युक्तिर्वैचित्र्यार्था । आदिना मध्यमसंग्रहः, निर्वैरपुत्रसत्त्वे एवमि शेषः । असहायत्वं च सजातीयराहित्यं, न तु यथाकथञ्चिदित्यपि लोकन्यायसिद्धमित्याह—विजातीयेति । आदिना क्लीब सग्रहः । अपि कन्यादिसमुच्चायकः । तथाच केवल व्यवहारवत्कन्यादिमादायापि स व्यवहार इति भावः । नन्वेवं "निजौ चत्वार एकाच " इति भाष्यासङ्गतिः, एः ससहायत्वेन तदप्रवृत्त्या एकाच्त्वानुपपत्तेरत आह—निजाविति । तात्पर्यमिति । प्रत्ययपर्युदासाद्यैकदेश्युक्तिमूलकत्वं इति भावः । अनेन तत्रारुचि सूचिता । तामेवाह—वस्तुतस्त्विति । पर्युदासेनेति । यथैतत्तथोक्तं प्राक् । अपिरुत्तरसूत्रसमुच्चायकः । तथाचोभयत्र तुल्यार्थकत्वं मूलमते तु वैरूप्यं शब्दाधिकारश्च यस्य प्रातिपदिकेत्यादिविवक्षा च प्रत्ययपर्युदासस्वाकारश्चेह वैयर्थ्यमिति गौरवं भाष्यस्वारस्यं च हृदि निधायाह—विभक्तीति । एतत्समाधा

### सरला ।

**विभक्तीतरानपेक्षयेति** । ननु विभक्त्यपेक्षयेति वाच्ये विभक्तीतरानपेक्षयेति व्यर्थमिति चेत् ? न, 'शुचि' 'मधु' इत्यादेर्विभक्तिमनपेक्ष्याप्यर्थबोधकत्वस्य दृष्टत्वात्, प्रातिपदिकत्वापत्तेरतः ,नतु 'खलपू' 'पक्त्रिमम्' 'सांकूटिनम्' इत्यादौ खलु पक्त्रि साकूटिन् इत्यादीना विभक्तीतरयप्मप्अण्प्रत्ययसम-भिव्याहारेणैवार्थबोधकत्वात्प्रातिपदिकसंज्ञा न स्यादिति वाच्यम्, विभक्तिपदस्य प्रत्ययमात्रोपलक्षणत्व स्वीकारेणादोषात् । ननु 'एधाञ्चक्रे' इत्यादावेधामित्यस्य प्रत्ययेतर 'चक्रे' इत्येतत्समभिव्याहारेणैवार्थबो-धकत्वादर्थवत्त्वं न स्यात्, नच पदेतरस्यापि लक्षणघटकत्वेन न दोष इति वाच्यम् 'पञ्चनावप्रिय' इति समासघटकपञ्चनावेत्यस्य न प्रातिपदिकत्वम्' इत्युक्तग्रन्थविरोधात् । नन्वेधामित्यस्यार्थवत्त्वाभावेऽपि न क्षति, न चार्थवत्त्वाभावेन पदत्वाभावादेधाञ्चक्रे इत्यादावनुस्वारो न स्यादिति वाच्यम् । "नश्चापदान्तस्य" इत्यनेनानुस्वारसिद्धेः, इति चेत्? न, एधाञ्चक्रे इत्यादौ 'निङ्ङनिङ" इति नित्याना-नापत्तेः, वैकल्पिकपरसवर्णानापत्तेश्च । न च प्रत्ययस्वप्रत्येकार्थीभावाभाववत्तदैतदन्यतरसमभिव्याहार

मनुकरणार्थं चेदमिति हरदत्तेनोक्तम्। तच्चिन्त्यम्। तत्रापि प्रकृत्यादिकल्पन-सम्भवात्। वस्तुतस्तु व्युत्पत्तिपक्षेऽपि बहुपटव इत्याद्यर्थं सूत्रम्। न चैव

---

शब्दरत्नम्।

गृह्यते। एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वमिदमप्यलौकिके आरोपितमस्तीति दक्ष अस् इ इत्यवस्थायां प्रातिपदिकत्वाशङ्कितः। तदा प्रत्ययस्य प्राप्तिरेव नेति केवलप्रत्ययपर्युदासो व्यर्थः। ध्वनितं चेदं प्रत्ययपर्युदासानुक्त्या भाष्ये।

भैरवी।

स्याद्त आह—एकेति। उक्तपर्युदासलभ्यार्थं विभक्तिपदमेतत्साध्यप्रत्ययोपलक्षणमन्तेन टावादि-प्रकृतिसंग्रहः। स्वोक्तार्थस्य भाष्यकाराभिमतत्वसूचनायाह—ध्वनितमिति। सुप्तिङन्तमिति सूत्रभाष्ये "कृत्तद्धित" इति सूत्रेऽन्त इत्यस्यार्थवद्ग्रहणानुवृत्त्या लाभप्रतिपादनपरभाष्यस्यो-त्तरसूत्रे एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वतात्पर्यकत्वं यन्मूलकारसम्मतन्तदपि नेत्याह

भावप्रकाश।

ध्यविभक्तीत्यर्थः। अन्यथा धातुप्रत्ययान्तपर्युदासानर्थक्यापत्तिः। स्त्रीप्रत्ययप्रकृतौ तत्र तु टावादेरपि विभक्तिसाधकत्वेनैनासत्त्वात्साध्यविभक्तिकुक्षिप्रविष्टत्वेन तदनिरस्तत्वं सुलभम्। स्त्रीप्रत्ययान्तानां त्वानिदे शिक तत्त्वम्। एतेन विभक्तिस्त्रीप्रत्ययेतरानपेक्षेति रत्नाकरोक्तमपास्तमिति भावः। लोके दृष्टमिति शेषः नन्विदमलौकिके बाधितमिताष्टाभिद्धिरुत्तरसूत्रेणात आह—एकार्थेति। केवलेति। तद न्यत्वमेवं कर्त्तव्यमिति भावः। इदमपि सूत्रमते। भाष्यमते तु नियमात्तावपि त्याज्यावित्युक्त प्राक्। स्वमते भाष्यादिस्वारस्यमाह—ध्वनितं चेति। कौम्भकारेय इत्यत्र कारशब्दात्प्रातिपदिकत्वेन तापि कुम्भकारेयोऽपि स्यादिति "अनुपसर्जनात्" इति सूत्रमिति चतुर्थस्थभाष्यकैयटादिक

सरला।

नपेक्षयाऽर्थबोधजनकत्वमर्थवत्त्वमिति स्वाकारेण एषामित्यस्यार्थवत्त्व पञ्चनावेत्यस्य तदभावश्च सिद्ध्यतीति वाच्यम्, 'मूलकेनोपदंशम्' इत्यादौ स्ववृत्त्येकार्थीभावाभाववत्पदेनरमूलकेनेत्येनसमभिव्याहारेणैवोपदंश मित्यस्य लोकेऽर्थबोधजनकत्वेनार्थवत्त्वानापत्तेः। नच प्रत्यय-स्ववृत्तिप्रातिपदिकत्वाभाववत्पदैतदन्यतरे त्यादिलक्षणस्वीकारेण ■ काऽपि क्षतिरिति वाच्यम्, अर्थवत्परिष्कारे प्रातिपदिकत्वप्रवेशेऽन्योन्याश्रया पत्तेः इति चेत्? मैवम्, प्रत्यय-स्ववृत्तिसमासत्वाभाववत्पदैतदन्यतरेतरसमभिव्याहारानपेक्षया लोकेऽर्थ-बोधजनकत्वमिति परिष्कारस्वीकारेणादोषात्। तथाहि, 'एषामङ्के' इत्यादौ 'चत्रे' इति स्ववृत्तिसमास त्वाभाववत्पद, तदितरसमभिव्याहारानपेक्षया एषामित्यस्यार्थबोधकत्वादर्थवत्त्वम्। पञ्चनावप्रियः इत्यादौ प्रियपदे स्ववृत्तिसमासत्वस्यैव सत्त्वेन तादृशसमासत्वाभाववदुदासानपदेतरप्रियपदसमभिव्याहारेणैव पञ्चनावेत्यस्यार्थबोधकत्वेन न निरुक्तार्थवत्त्वम्। 'मूलकेनोपदंशम्' इत्यादौ मूलकेनेत्यत्रोपदंशवृत्त्येका-र्थीभावसत्त्वेऽपि तद्वृत्तिसमासत्वाभावस्य सत्त्वात्तदितरसमभिव्याहारानपेक्षयाऽर्थबोधकत्वादर्थवत्त्वक्षतिः।

अथ 'तन्निभः' 'कुम्भकारः' इत्यादौ निभकारादीनां पञ्चनावेत्यस्येवोक्तरीत्याऽर्थवत्त्व न स्यात्, न च पूर्वपदेतरत्वस्यापि लक्षणे निवेशेन नोक्तदोष इति। अत एव 'एषामतुः कल्पम्' इत्यादौ आमतुः कल्पमि त्यादेरर्थवत्त्व सिद्ध्यतीति वाच्यम्, 'हरिषु' इत्यादौ सोरपि निरुक्तार्थवत्त्वापत्त्या प्रत्ययपर्युदासकर्तव्यता-पत्तेः। न च पूर्वपदशब्देन समासावयवस्यैव ग्रहणान्न दोष इति वाच्यम्, पञ्चनावप्रियपुत्रः इत्यादौ प्रियेत्यत्र समासघटकपूर्वपदेतरत्वस्याभावेन पञ्चनावेत्यस्यार्थवत्त्वापत्तेः। न च नियतपूर्वत्ववत्सुबन्तमेव लक्षणघटकपूर्वपदशब्देन विवक्षितमिति नोक्तदोष इति वाच्यम्, कन्नुबन्ताच्चत्राशब्दात्सुपि 'चत्रासु' इत्यादौ सोरर्थवत्त्वापत्त्या प्रत्ययपर्युदासकर्तव्यतापत्तेरिति चेत्? न, प्रत्यय-स्ववृत्तिसमासत्वाभावव त्पद, स्वादिविधिनिपदत्वानाश्रयनियतपूर्वत्ववत्सुबन्तैतदन्यतमेतरसमभिव्याहारानपेक्षया लोकेऽर्थबोधक-त्वमर्थवत्त्वमिति परिष्कारेणादोषात्। स्वादिविधिनिपदत्वानाश्रयेत्युक्त्या 'चत्रासु' इत्यादौ न दोषः। निय तेत्युक्त्या 'पञ्चनावप्रियपुत्रः' इत्यादौ न दोष इत्यन्यत्र विस्तरः।

बहुच्पूर्व इत्येव सूच्यतामिति वाच्यम्। 'मूलकेनोपदंशम्' इत्यादौ कृदन्तत्वेनाति प्रसङ्गात्। न च समासग्रहणं नियमार्थमिति सिद्धान्तः। अर्थवत्सूत्रारम्भं विना समासग्रहणस्य नियमार्थत्वायोगादिति दिक्।

कृत्तद्धितसमासाश्च। 'अर्थवत्' इत्यनुवर्तनेन, तत्सामर्थ्यात्तदन्तविधिः। न हि जहत्स्वार्थाया वृत्तौ कृतां तद्धितानां चार्थोऽस्ति। भूतपूर्वगतिलभ्यस्तु न प्रशस्त। अजहत्स्वार्थायामपि न प्रत्ययमात्रेणार्थपर्यवसानमित्यभिप्रेत्याह— कृत्तद्धितान्ताविति। लिट्, धुक्, इत्यादौ "अधातुः" इति, कर्तेत्यादौ अप्र

शब्दरत्नम्।

"सुप्तिङन्तम्" इति सूत्रस्थभाष्यकैयटयोरप्यत्रैव तात्पर्यमिति बोध्यम्। इत्याद्यर्थमिति। अन्यथा विभक्त्यन्तस्योदात्तता स्यात्। प्रातिपदिकत्वे तु पूर्वं विभक्तिलुकि इकारोकारस्योदात्तत्वे पुनर्जसि इकारोकारयोरुदात्तत्वसिद्धिरिति भावः। कृदन्तत्वेनेति। न च समासविकल्पविधानस्य वैयर्थ्यम्। समासे एकस्वरश्रवणं समासाभावे प्रातिपदिकत्वे तु पूर्वोत्तरपदयोर्भिन्नस्वरश्रवणमिति विशेषात्। 'दधिउपदंशम्' इत्यादौ पक्षे प्रकृतिभावप्रवृत्तेरपि फलस्य वक्तुं शक्यत्वाच्च।

तत्सामर्थ्यादिति। अन्यथा संज्ञाविधित्वान्न स्यात्। न प्रत्ययमात्रेणेति। प्रकृतेरपेक्षणादिति भावः। अधातुरिति। कर्तृत्वार्थस्याधिकस्य भानेऽपि क्रियावाचकत्वाक्षतेः।

भैरवी।

सुप्तिङन्तमिति। अत्रैव-उभयोरप्यर्थवत्त्वमेकरूपमेवेत्यर्थः। अधिकमन्यत्र स्पष्टम्। अन्यथा-बहुपन्थ इति समुदायस्य प्रातिपदिकसंज्ञाया अस्वीकारे। स्यादिति। "चितः" इति सूत्रे 'सप्रकृते' इति वार्तिकादिति शेषः। समासेति। "तृतीयाप्रभृति" इत्यनेनेत्यादि। एकस्वरश्रवणमिति। 'समासस्य' इत्यनेनैकस्यान्तोदात्तत्वस्य श्रवणमित्यर्थः 'फिषः' इत्यस्य तु सञ्ज्ञणेऽप्रवृत्तिरिति भावः। लौकिकप्रयोगे स्वरस्य दुर्लक्ष्यत्वादाह-दधीति। पक्षे-समासाभावपक्षे। प्रकृतिभावेति। 'न समासे' इति निषेधस्य तदाऽप्राप्तेरिति भावः। नच 'दधिउपदंशम्' इत्यत्र दधिशब्दात्तृतीयासत्त्वेन तदन्तस्य भुजिक्रियायां सम्बन्धात्कथमत्र णमुलिति वाच्यम्, स्वरायां "द्वितीयायां च" इति णमुलोऽत्र सत्त्वात्। अत एव कृद्ग्रहणे इतिपरिभाषायां कृत्प्रकृत्यर्थनिरूपितकारकस्य ग्रहणेऽपि विशिष्टस्य कृदन्तत्वमित्याहुः।

प्रकृतेरपेक्षणेति। एतेन विभक्तीतरानपेक्षत्वाभावः सूचितः। ननु लिट्धुगित्याभ्यां जायमानशाब्दबोधे कर्तुः प्राधान्येन भानान्न प्रधानीभूतक्रियावाचकत्वमिति कथमत्र धातुत्वमत आह-कर्त

भावप्रकाशः।

तु यथात्र पक्षे सद्भूत तथा स्त्रीप्रत्यये व्यक्तीभविष्यति। अन्यथेति। [illegible] एव त्यर्थः। स्पष्टं चैतत् शब्देन्दुशेखरे। समासेति। 'तृतीयाप्रभृति' इत्यनेनेति भावः। विशेषादिति। फिट्स्वरस्य तत एव सत्त्वण्डेऽप्रवृत्तेरिति भावः। लौकिकप्रयोगे तद्विशेषस्य दुर्लक्ष्यत्वादाह—दधीति। ननु कृद्ग्रहणे इत्यत्र प्रत्यासत्त्या कृत्प्रकृत्यर्थनिरूपितकारकस्य ग्रहणेन भुजिक्रियानिरूपितकर्मणो दध्नोऽग्रहणेन कथमत्र विशिष्टस्य तत्त्वम्? किञ्चात्तृतीयान्तोपपदत्वाण्णमुल् दुर्लभ इति चेत्? अत्राहुः—दंशनक्रियाद्वारैव भुजिक्रियायामन्वयः। दंशनेरित्यध्याहारः। उप समीपे उच्चारितं पदमुपपदं, सामीप्यं च सप्तम्यन्तपदघटितसूत्रविधेयप्रत्ययप्रकृत्यर्थेऽन्वयित्वमेव न त्वानुपूर्व्यव्यवधानमित्यन्यत्र स्पष्टम्। वस्तुतस्तु द्वितीयान्ते उपपदे त्वरायां णमुल्विधायकेन 'द्वितीयायां च' इत्यनेन स इति भावः। पक्षे इति। समासाभावपक्षे इत्यर्थः, असमासत्वात् 'न समासे' इत्यप्रवृत्तेरिति भावः।

प्रकृतेरिति। तथा च तादृशविभक्तीतरनिरपेक्षत्वेन न तादृशमर्थवत्त्वमिति भावः। अक्षतेरिति। तस्मा

यन्तमिति पर्युदासे प्राप्ते कृदन्ते विधिरयम्। नियमार्थमिति। न च प्रत्ययान्तत्वेन पर्युदासे प्राप्ते विध्यर्थमस्त्विति शङ्क्यम्। वाक्यस्याप्रत्ययान्तत्वात्, प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात्। ननु स्त्रीप्रत्यये तदादिनियमो निषिद्ध, एवं च राजकुमारीत्यादौ विध्यर्थमस्त्विति चेत्? मैवम्, अन्तरङ्गस्यापि हल्ङ्याब्भ्यादिलोपस्य लुग्विषयेऽप्रवृत्त्या श्रूयमाण एव सुपि समासप्रवृत्ते। तत्र चाप्रत्ययान्तत्वेन प्रवृत्ताया सञ्ज्ञाया एकदेशविकृतन्यायेन विभक्तिलुक्यपि सुलभत्वात्। अत एव गोमत्प्रिय इत्यादौ नुमादयो न। लुकः प्रागन्तरङ्गप्रवृत्तौ तु स्यु-

## शब्दरत्नम्।

धातुत्वाश्क्तेरिति भाव। स्त्रीप्रत्यये इति। अनुपसर्जनस्त्रीप्रत्यय इत्यर्थ। तस्य येन केनापि रूपेण ग्रहणे तन्निषेध इत्यभिमान शङ्कितु। राजकुमारीति। नन्वत्र प्रातिपदिकत्वस्य न फल लिङ्गविशिष्टपरिभाषयैव तत्कार्यसिद्धेरिति चेत्? न, प्रातिपदिकत्वतद्व्याप्यधर्माणा लिङ्गप्रत्ययरहिते दृष्टाना तद्विशिष्टेऽनयाऽतिदेशेन तस्या अत्राप्रवृत्ते। न हि ङीपरहिते राजकुमारत्यादौ तदस्ति, ङ्याब्ग्रहण स्वन्यार्थमिति वक्ष्यते। शङ्किताभिमानानुसारेणैवोत्तरयति—अन्तरङ्गस्यापीति। सुलभत्वादिति। यथोद्देशे इदम्। यदि त्वस्य निषेधस्य प्रत्ययग्रहणपरिभाषाशेषत्वम्, एव च यथा सा प्रत्ययग्रहणे एव न तु प्रत्ययाप्रत्ययग्रहणे इति "उगितश्च" इति सूत्रे भाष्ये स्पष्ट, तथाऽयं

## भैरवी।

रूपानि। अक्षनेरिति। क्रियामात्रेऽस्यस्य प्राधान्येनेत्यस्य वा धातुसञ्ज्ञाविधायकनिवेशाद्धातुत्वापत्ते। अत एव "अस्वसन्त" इति सूत्रे धातुपर्युदासस्य सार्थक्यम्। 'स्त्रीप्रत्यये' इति परिभाषाया न तावन्मात्रत्वमिति न्यूनताभङ्गायाह—अनुपसर्जनेति। तस्य—स्त्रीप्रत्ययस्य। तन्निषेध—तदादिनियमनिषेध। अभिमान इति। परिभाषाया स्त्रीप्रत्ययमात्रग्रहणे प्रवृत्तिरिति कल्पनायान्न प्रमाणमिति तद्भाव। तत्कार्येति। प्रातिपदिकत्वकार्येत्यर्थ। तद्विशिष्ट—स्त्रीप्रत्ययविशिष्टे। स्त्रीप्रत्ययमात्रस्य ग्रहणमत्र नास्त्यात्येव वक्ष्येऽन्तरङ्गस्यापीत्याद्युक्तिर्विफलेत्यत आह—शङ्कितुमिति। शेषत्वमिति। एतेनास्यामपि परिभाषाया ग्रहणशब्दसम्बन्ध इति सूचितम्। फलितार्थमाह—एवञ्चेति। सा—प्रत्ययग्रहणपरिभाषा। प्रत्ययग्रहण एव—प्रत्ययमात्रग्रहण एव। अत एव गोमतो निष्क्रान्ता 'निर्गोमती' इत्यत्र 'उगितश्च' इति ङीप्सिद्धि।

## भावप्रकाश।

तद्वाचकत्वं विशेष्यतया तद्वाचकत्वं वा न निविष्टम् "अत्वसन्त" इत्यत्र धातुपर्युदासानर्थक्यापत्तेरिति भाव। उपर्जनस्त्रीप्रत्यये तन्नियमेन यथाश्रुतासङ्गतेराह—अनुपेति। तस्य—स्त्रीप्रत्ययस्य। तन्निषेध। तदादिनियमनिषेध। शङ्कितुरिति। न च तत्सामान्यस्य तद्विशेषस्य वा ग्रहणे तत्प्रवृत्तिरत्र नेति वाच्यम्। वचनमङ्कोचे मानाभावात्, कृद्ग्रहणे इत्यत्रेव ग्रहणपदाभावाच्चेति भाव। तद्विशिष्टतयेति। तत्समभिव्याहारे पूर्वोक्तया तद्विशिष्टेऽपीत्यर्थ "बहुवाहेरूधम" इत्यत्रत्यभाष्यानुरोधेनास्या अस्यावश्यकत्वमिति भाव। अनयेति पाठे प्रक्रान्तया परिभाषयेत्यर्थ। कुमारेत्यादाविति पाठ। कुमार्यादाविति पाठे तत्र ङीब्रहिते राजकुमारेत्यादावित्यर्थ इति न दोष। नन्वेमपि तत्कथनस्य ङ्याब्ग्रहणेन सिद्धिरत आह—ङ्याबिति। अन्यार्थम्—अप्रत्ययोत्तरपदार्थम्। उभयत्राभिमानपदसूचितामरुचिमाह—यदि त्विति। शेषत्वमिति। तथाचात्रापि ग्रहणशब्दसम्बन्ध इति भाव। तथा सति फलितमाह—एवञ्चेति। प्रत्ययेति। सामान्यविशेषान्यतररूपेण ग्रहणे एवेत्यर्थ। तेन गोमता निष्क्रान्तेत्यर्थे निर्गोमतीत्यादौ ङीप्सिद्धि। अन्यथोगित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वेऽपि तत्र न तदन्तत्वेन गोमच्छ

रेव । नन्वेवमपि असमर्थसमासे दशदाडिमादिवदनर्थके विध्यर्थमस्त्विति चेत् ? न, 'अर्थवत्' इत्यस्यानुवृत्तेरुक्तत्वात् । कथं तर्हि असमर्थसमासे संज्ञेति चेद्धर्मिग्राहकमानादेवेति गृहाण । "असूर्यललाटयोः—" इत्यनेन हि असूर्यशब्दे उपपदे खश् विधीयते । उपोच्चारितं पदं चोपपदम्, पदं च सुप्तिङन्तमिति । निय-

---

शब्दरत्नम् ।

निषेधोऽपि स्त्रीप्रत्ययमात्रग्रहणे न तु स्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणे इत्युच्यते; तदा न दोषः, समुदायस्य प्रत्ययान्तत्वाभावादिति दिक् । असमर्थसमासे इति । 'असूर्यम्पश्या' इत्यादावित्यर्थः । धर्मिग्राहकेति । प्रातिपदिकसंज्ञा धर्मः, तद्धर्मी असमर्थसमासः, ग्राहकं मानं खश्विधायकम् । अन्यथा परस्परमसम्बन्धेनैकार्थीभावाभावात्समासो दुर्लभः स्यात् । असूर्यशब्द इति । तत्प्रकृतिके सुबन्त इत्यर्थः, सुपीत्यधिकारात् उपपदमिति महासंज्ञाकरणाच्च । एतदेवाह—पदं चेत्यादि । शशशृङ्गादिपदानां च बोधे तस्मिन्

भैरवी ।

त्युच्यते इति । अत एव 'पुत्रपोऽस्ति ते युवते' इति समुदायस्य तिप्रत्ययरूपतद्धितान्तत्वात् प्रातिपदिकसंज्ञा न । यदि समासग्रहणकृतनियमेनैतद्व्यावृत्तिरित्युच्यते तदा 'भक्त्या परमगतिः' इत्यत्र "कर्तृकरणे कृता बहुलम्" इति समासाभावरूपफलस्योध्यम् । न दोष इति । न प्रातिपदिकत्वासिद्धिरूपो राजकुमारीत्यत्र दोष इत्यर्थः । ध्वनितञ्चेदमर्थवत्समुदायानां समासग्रहणं नियमार्थमित्युक्त्या भाष्यकृता । अत एवाह—दिगिति ।

इत्यादाविति । अत्र नञो दृश्यर्थे सम्बन्धादसामर्थ्यं स्पष्टम् । खश्विधायकसूत्रस्य मानत्वमुपपादयति—अन्यथेति । समास इति । असूर्येत्यादावित्यादि । ननूपपदं विभक्त्यन्तमन्त्यमसूर्यशब्द एवेत्यत आह—तत्प्रकृतिक इति । सुप् चात्र द्वितीया, प्रकृत्यर्थस्य कर्मत्वात् ललाटसाहचर्याच्च । तस्मिन्निति । शशशृङ्गे । एतस्यात्यन्तासतो बुद्धिसत्ताविशिष्टस्यार्थस्य बोधनात् । स्वप्नाद्यनुरोधेन बौद्धस्यार्थस्य स्वीकारात् । अधिकमन्यत्र स्पष्टम् । येषां रथन्तरादिशब्दानामवयवा अत्यन्तनिरर्थकास्तेषामप्यन्यत्र दृष्टार्थारोपेण प्रातिपदिकत्वात्सुबुत्पत्त्या साधुत्वान्वाख्यानम्बोध्यम् । ननु यदि समासग्रहणेन मौलो नियमो बोध्यते तदा पूर्वसूत्रस्थस्यार्थवत्पदस्य दशदाडिमानीत्यादिसमुदायव्यावृत्तिप्रदर्शनपरभाष्यविरोध इत्यत आह—

भावप्रकाशः ।

तदर्थेङीविधानत्वेन विशिष्टान्ङीप् न स्यादिति भावः । निषेध इति । तस्या इति भावः । स्त्रीप्रत्यये सामान्यतो विशेषतो वेति भावः । ध्वनितं चेदमत्र भाष्ये इति गुहाकूतम् । न तु स्त्रीति । अत एव भिक्षाभिक्षाभिक्षाभाम् अजित्यादावेकशेषानापत्तिपरमरूपसूत्रभाष्यं सङ्गच्छते । अन्यथा मनुष्यमते "स्त्रीप्रत्यये चानुपसर्जनेन" इत्यनेन समुदायस्यावन्तत्वेन प्रत्ययान्तत्वनिषेधेनाप्राप्तेः । दोष इति । न प्रातिपदिकत्वासिद्धिरित्यर्थः । एवं च शास्त्रसमाधानं चायुक्तमेव । किञ्च तथा सत्यत्रत्यनकारे फलाभावः । एतेन मूलानुयायिरत्नाकरदण्डिप्रभृतयश्चिन्त्यास्तदाह—दिगिति । ग्राहकेति । तदुद्देश्यकं मानं प्रत्ययपरिच्छेदकमित्यर्थः । तत्फलितमाह—खशिति । तद्ग्राहकत्वमुपपादयति—अन्यथेति । समास इति । असूर्येत्यादावित्यर्थः । सुबन्ते इति । स च द्वितीयैव ललाटसाहचर्यादिति भावः । एतद्विषये मान्योक्तिस्तु प्राचामनुरोधेनेति स्पष्टं तद्विदाम् । तस्मिन्निति । शशशृङ्गादौ । बुद्धिमात्रविषयीकृतस्यात्यन्तासतो बुद्धिसत्ताविशिष्टस्यार्थस्य शब्देन बोधनात् । स्वप्नाद्यनुरोधेन च बौद्धपदार्थस्यावश्यकत्वात् घटादावप्येवमेवेति मञ्जूषायां विस्तरः । अक्षौहिणीरथन्तरादिपदघटकावयवानामत्यन्तनिरर्थकानामप्यन्यत्र दृष्टार्थारोपेण प्रातिपदिकत्वसुबुत्पत्त्यादिना यथाकथञ्चित्साधुत्वान्वाख्यानं बोध्यम् ।

मशरीरमाह—यत्र संघाते इत्यादि । पूर्वो भाग इत्युपलक्षणम्-उत्तरस्तु प्रत्ययो नेत्यपि बोध्यम्। अन्यथा जन्मवानित्यादौ संज्ञा न स्यात्तद्धितग्रहणस्य औपगवादौ कृतार्थत्वात् । पूर्वो भाग पदमिति किम् ? बहुच्विशिष्टस्य प्रातिपदिकसंज्ञा यथा

शब्दरत्नम् ।

शक्तिरिति न तदर्थमपि समासग्रहणमिति वाच्यम् । यत्र संघाते इतीति । अर्थवतोति शेष , सजातीयापेक्षनियमस्यौचित्यादिति बोध्यम् । प्रत्ययो नेत्यस्य पूर्वभागप्रकृतिक प्रत्ययो नेत्यर्थ । तेन 'राजा इयान्' इत्यादौ न दोष । जन्मवानित्यादाविति । तत्र पूर्वभागस्य पदत्वादिति भाव । ननु तद्धितग्रहणसामर्थ्य, तत्राह—तद्धितेति । तत्र पूर्व भागस्य भत्वात्पूर्वो भाग पदमित्यत्र च पदशब्देन पदसंज्ञकग्रहणमिति भाव । नन्वत्र पक्षे गविरययमाहेत्यादौ दोष , गो इत्यादाना सुबन्तत्वाभावेन पदत्वाभावात् , सूप

भैरवी ।

भावनात । तत्र साधकमाह-मनसायेन । उत्तरसूत्रेऽप्यर्थवत्पदानुवृत्त । 'पञ्चनाविप्रिय' इत्यादौ पञ्चनावेत्यादेस्तद्भागस्य प्रधानत्वमन्यत्राभिहितमेव । खण्डनकारोक्तदोषमुद्धरति—प्रत्ययो नेत्यस्येन । इदं सामान्यप्रदर्शनाय । न दोष —न समुदायस्य प्रातिपदिकत्वापत्तिरूपो दोष । तत्र-जन्मवानित्यादिसमुदाय। तत्र-औपगवादौ। कृत्रिमाकृत्रिमन्यायेन हि पदमित्य त्रति। एतेन शक्तस्यान्यमत पदत्वस्य सुप्रसिद्धत्वेऽपि न क्षति । अत्र पक्षे-परममूलोक्तनिय मासारपक्षे । दोष-समुदायस्य प्रातिपदिकत्वापत्तिरूपो दोष । वस्तुत सामान्यप्रद [illegible]

भावप्रकाश ।

सजातीयेति । 'कृत्ताद्धत इत्यनाथवपदानुवृत्ते अत एव पञ्चनावप्रिय 'इत्यादौ पञ्चनावेत्यादेन नि भाव । अनेनान्यथैव दुर्वचमिति ध्वनितम् । खण्डनकारोक्त दोषमुद्धरति—पूर्वेति । एतेन तथा रत्नाकरो क्तिरपास्ता। एतेन यत्तच्छब्दार्थयोरननुगतत्वाच्छब्दानुगमस्याकिञ्चित्करत्वेन यच्छब्दोपादानानुगमेऽपि क्षत्य भावाच्च यत्र संघाते इत्यादि व्यर्थमिति खण्डनकुतुकमपास्त, साजात्यदर्शनाय तथोक्तेरिति भाव । तत्र—न च्छङ्कायाम् । तत्र-औपगवादौ । ननु पदशब्देन शक्तग्रहणे वैयर्थ्यं तदवस्थमेवात आह—पदमितीति । कृत्रिमाकृत्रिमेति न्यायादिति भाव । इति भाव इति । मूलकृत इति शेष । एतेन पदशब्देन तादृशग्र हणे भाष्यपरममूलयोरैक्य ध्वनितम् । दोष इति । समूहस्य संज्ञापत्तिरित्यर्थ । गो इत्यादीति । अत्र रत्न रूपबोधनार्थात् न कृत संहिताऽविवक्षया वा । वस्तुना मूले एव कुठार इत्याह—सूपणिति । अत्र पदशब्दे नोत्तरभागोद्देश्यकाभिन्नोत्तरखण्डार्थान्वया गृह्यते । तेनानुकरणे समुदायस्यासुबन्तत्वेऽपि न संज्ञा । नास्तिक इत्यत्र निपातसमूहात्मकत्व इति पक्षे नञ्मात्रस्य पूर्वखण्डस्योत्तरखण्डार्थान्वयित्वाभावेन न दोष । अत एवेदृशार्थनामासम्भव इत्यपि निरस्तमिति मान्योक्ति प्राचामनुरोधेन । द्वितीयनियमात्तथा विवक्षा या गौरवेण तन्नियमस्यैवौचित्यात्, यद्वेत्यादिग्रहणस्यासङ्गत्यापत्तेश्चेति भाव । ननु द्वितीयनियमे ङित्यादौ संज्ञा न स्यात् तत्र तदनापन्नवर्णसमानत्वस्य सत्त्वात् । अर्थवत्सूत्र तु 'बहुगव इत्यादौ चरि तार्थम् । समुदायादेकविभक्ताविति पक्षस्यासम्भवदुक्तिकतयाऽर्थश्च "इदमोऽन्वादेशे' इत्यत्र शभावे प्रश्लेषे समुदायाद्विभक्तिरर्थवत्त्वादिति भाष्यासङ्गतिश्च । अथ तदनापन्नपदसंघातो विवक्षितस्तर्हि गौर व भाष्यविरोधशङ्काकोक्तदोषद्वय च । एतेन वस्तुतस्तु अर्थवत्पदसमानस्य नेरसमासस्यैवैतत्येन सुवच, लाघ वात् कुम्भकार कटप्रूरनसमित्यादौ कृदन्तेन धातुना च समासे सत्यर्थवत्सूत्रगेष्टसिद्धेरिति प्रकाशानुया यिरत्नकारोक्तमपास्तम् । यत्तु पदशब्देन पदत्वयोग्य ग्राह्य पदत्वस्य सर्वत्राभावेऽपि तद्योग्यताया सत्त्वेन

उपोत्तमोदात्तत्वं सिद्ध्यति । यद्वा प्रकृतिप्रत्ययभावानापन्नसंघातविषयको निय-

शब्दरत्नम् ।

चश्चेत्यत आह—यद्वेति । प्रकृतसूत्रे भाष्ये तु अर्थवत्समुदायानां समासग्रहणं नियमार्थ-मित्युक्तम् । अत्र तन्त्रेण षष्ठीतत्पुरुषः कर्मधारयश्च, तत्र षष्ठीसमासे अर्थवदित्यस्य

भैरवी ।

मित्यमस्तीति चेत्; उत्तरस्तु प्रत्ययो नेत्येतद्विरोधादिति चेत्तत्राह—प्रकृतसूत्र इति । अत्र भाष्यशरीरीयवाक्ये तन्त्रेण सकृदुच्चरितस्याप्यर्थवत्समुदायपदस्यार्थद्वयं च. समुदाय, स्वयमर्थवांश्च, तत्परत्वविवक्षया षष्ठीतत्पुरुषस्य फलमव्युत्पन्नडित्थादिसंग्रहः, एवमर्थवतः प्रकृति-प्रत्ययसमुदायस्य च सः । कर्मधारयफलन्तु समासग्रहणस्य नियमार्थत्वोपपत्ति । अन्यथाऽर्थ-वतामनर्थको य समुदायोऽनर्थकसमासो ऽधाङ्भोजी ब्राह्मणो ऽलवणभोजी इत्यादिस्तेषा-म्प्रातिपदिकसंज्ञानिष्पाद्यत्वेन समासग्रहणचारितार्थ्येन नियमस्यानुपपत्तिरेव । किञ्च कर्म-धारयासत्त्वे पञ्चगवधनाद्येकदेशस्यार्थवत्समुदायरूपसमासत्वात्तत्रापि स्यादिति तद्व्यावृत्ति-रपि । एतस्य कर्मधारयस्य लाभस्तु नियमस्य सजातीयापेक्षत्वमित्यनेन । नन्वेवम्बहुपट-

भावप्रकाश ।

च तस्मान्नित्यादौ मा न स्यात् । तद्धितग्रहणस्यौपगवादौ कृतार्थत्वात् । उत्तरस्तु तादृशः प्रत्ययो नेति विवक्षणे तु गौरव मुक्तोक्तादविशेषश्च । अथ शुद्धं प्रकृतिमात्रं विवक्षितमित्युच्येत । तावतापि पदशब्दघटित-परमसूत्रानामद्दनिस्तद्वस्थैव । ततो वरं भाष्योक्तपक्षादर इत्याशयेनाह—प्रकृतेति । अत्रेति । उक्तवाक्ये इत्यर्थः । षष्ठीति । तेन डित्थादौ न दोषो न वा टीकोक्तान्यदोषापत्तिः, तत्प्रश्नसम्भवदुनिरत्वापत्त्युद्धारस्तु टीकायामेव स्फुटीभविष्यति । तद्धाप्याघम तनिरपि न । समुदायस्यैव तनार्थवत्त्वात् डित्थादिवदिति भावः । सजातीयापेक्षनियमौचित्यादाह—कर्मधारयश्चेति । अर्थवत्पदस्य तत्रानुवृत्तेः । अन्यथा ऽनर्थकसमासे ऽर्थवता समूहत्वस्य सत्त्वेऽपि समूहस्यानर्थकत्वात्तत्रैव विध्यर्थत्व स्यादिति नियमानुपपत्त्या वाक्ये तदापत्तिरेव । किं च पञ्चनावप्रिय इत्यादावेकदेशे स्यादिति भाव । नन्वेवमपि बहुपटव इत्यादौ दोषतादवस्थ्य

सरला ।

यद्वेतीति । प्रकृतिप्रत्ययभावानापन्नसंघातस्य चेत्प्रातिपदिकसंज्ञा तर्हि समासस्यैवेति नियमाकारो-ऽवगन्तव्यः । 'वृषणवसुः' इत्यादीनामपि तादृशसंघातत्वमस्त्येवेति तस्य न समासत्वव्यापकत्वहानिरिति । 'बहुपटवः' इत्यस्य तादृशसंघातत्वाभावान्न नियमेन व्यावृत्तिरिति तत्र पूर्वेणैव प्रातिपदिकसंज्ञा सिद्ध्यति । प्रत्ययविशिष्टैव प्रकृतिप्रत्ययभावापन्नत्वम् । तद्भिन्नत्वं प्रकृतिप्रत्ययभावानापन्नत्वमिति यावत् । वैशि-ष्ट्यं च स्वघटितत्वम्, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्वम्, स्वविशिष्टाघटितत्वम्, एतत्त्रितय-सम्बन्धेन । स्ववैशिष्ट्यञ्च स्वेतरत्वम्, स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयेतरत्वम्, एतदुभयसम्बन्धेनेति । 'जन्मवान्' इत्यत्र मतुप्प्रत्ययघटितत्व तन्निष्ठविधेयतानिरूपितोद्देश्यताश्रयजन्मघटितत्व चेति लक्षणसमन्वयः । एवं 'बहुपटव.' इत्यत्रापि बोध्यम् । 'ग्रामानय' 'राजपुरुष' इत्यादिसमुदायानां तदि-तरघटितत्वेन तद्भिन्नत्वमिति समासेतरस्य 'ग्रामानय' इत्यादेर्व्यावृत्तिः । नन्वेवं निष्कृष्यैकार्थभावेन तद्धितोत्पत्तौ भाष्यकृत्सिद्धान्तितया परमगार्ग्यघटकगार्ग्यशब्दादेव फक्प्रत्ययो न तु विशिष्टादिति 'परमगा-र्ग्यायण.' इत्यत्र फक्प्रत्ययघटितस्य फक्प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयगार्ग्यघटितस्य तदितरघ-टितत्वेन तद्भिन्नत्वात्समासग्रहणकृतनियमेन व्यावृत्तौ प्रातिपदिकसंज्ञा न स्यादिति चेत्? न, स्ववै-शिष्ट्ये स्वनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकीभूतैकार्थीभावाश्रयेतरत्वम् इत्येतत्सम्बन्धस्याधिकस्य निवे-शेन परमस्य एकार्थीभावाश्रयत्वेन तदितराघटितत्वस्यैव सत्त्वेनादोषात् । विस्तरस्त्वन्यत्र द्रष्टव्यः ।

कर्मधारयश्चेति । तथाच अर्थवन्तो ये समुदायास्तेऽर्थवन्तोऽप्यपेक्षिताः । तेषामेव नियमेन व्यावृत्तिः, न तु दश दाडिमानि इत्यादीनामनर्थकसमुदायानाम् । बहुवचनं त्वत्र प्रयोगभेदाभिप्रायेण ।

शब्दरत्नम् ।

स्वातन्त्र्येणापि प्रयोगार्हार्थवदित्यर्थः । गविस्ययमित्यादावनुकरणस्यानितिपरस्यापि प्रयोगमत्वेन तत्त्वमस्त्येव । प्रकृतिप्रत्ययसमुदायस्य तु न व्यावृत्तिः, प्रत्ययस्य स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वाभावात् । सरूपसूत्रे भाष्ये सुबन्तानामित्यनेनेदमेवोपलक्ष्यते इति

भैरवी ।

वादी दोष एवेत्यत आह—नवेति । अर्थद्वयविवक्षायाम् । स्वातन्त्र्येणार्थेति । अत्रापि पूर्ववत्समुच्चायकः । स्वातन्त्र्यञ्च तावन्मात्रस्यान्यर्थबोधनाय पृथक्प्रयोगयोग्यत्वम् । प्रयोगार्हार्थवदित्यस्य प्रयोगार्हमर्थवदित्यर्थः । ननु गविस्ययमित्यादेरनुना व्यावृत्तिर्न स्याद् गो इत्यादेरितिशब्दसमभिव्याहारेणैव प्रयोगादत आह—गविस्ययमिति । नत्वमिति । तावन्मात्रस्य पृथक्प्रयोगार्हत्वम् । स्वाद्युत्पत्त्यादौ यथा । 'बहुपटव' 'पुत्रकाम्या' इत्यादेः संग्रहमाह—प्रकृतीति । अभावादिति । निरुक्तस्वातन्त्र्याभावस्य सत्त्वेन विशेषणाभावप्रयोज्यविशिष्टाभावस्य तत्र

भावप्रकाश ।

मत आह—तत्त्वेति । स्योर्मध्ये इत्यर्थः । अपि च पूर्ववत्समुच्चायकः । प्रयोगार्हार्थेति । प्रयोगार्हमर्थप्रतिपादनार्हो योऽर्थस्तद्वदित्यर्थः । एवं विवक्षया फले वस्तु योग्यत्वेऽपि मत्वर्थसिद्धिरितिप्रतिपादनायादावाह—गवीति । तत्त्व—तावन्मात्रस्य पृथक्प्रयोगार्हत्वम् । एतेन निरुक्तिमसमभिव्याहारावश्यकत्वेनानुकरणे दोषतादवस्थ्यमित्यपास्तम् । केवलस्यापि प्रयोगस्य लोके शास्त्रे च बहुशो दृष्टत्वात् । एतेनामाधुवदादावपि निरस्ता । तत्प्रयोजनमाह—प्रकृतीति । बहुपटव पुत्रकाम्येत्यत्र । एवञ्च कुम्भकारादा-

सरला ।

अर्थवदित्यर्थ इति । स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वाभावात्. स्वातन्त्र्येण प्रयोगार्हार्थवद्घटकावयवत्वञ्च येऽ-र्थवान् समुदायस्तस्य नेत्यर्हि ततः समस्यत्वेन नियमात्. । अत एव पूर्वसूत्रेऽर्थवदित्यस्य 'दश दाडिमानि' इत्याद्यनर्थकपदसमुदायव्यावृत्तिः प्रयोजनमुक्तं भाष्ये । अन्यथा समासग्रहणकृतनियमेनैव तद्व्यावृत्तौ तद-सङ्गतिः स्पष्टैव । उत्तरावयवस्यापि स्वातन्त्र्येण प्रयोगार्हार्थवत्ता ग्रहणेन 'पुत्रकाम्या' इत्यस्य न व्यावृत्तिः,

मूलकेनोपदंशमित्यादौ वाक्यस्य संज्ञा दुर्वारा, कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्, इति चेत् ? मैवम्, समासग्रहणकृतनियमेन परत्वाद् बाधात्। एव

शब्दरत्नम्।

स्वेनैवेति। उत्तरपदस्य कार्यित्वाभावेन तन्निषेधाप्रवृत्तेरेवेत्यपि बोद्ध्यम्। वाक्यस्येति। कृदन्तत्वादिति भाव, तदाह—कृदिति। न चास्य भुजौ करणत्वेनोपदंश प्रति न कारकत्वम्। मूलकस्योपदंशे कर्मत्वेनाप्यन्वयो विभक्तिस्तु प्रधानानुरोधिकरणत्वकृता तृतीयैवेति त प्रत्यपि कारकत्वमित्याशयात्। परत्वाद् बाधादिति। नियमस्यार्थतो निषेधेऽपि तात्पर्येणार्थवत्सूत्रापवादत्वात्स्य परत्वेन कृदन्तत्वप्रयुक्तस्यापि निषेधे तात्पर्या

भैरवी।

स्या कारकस्यापि तद्धात्वर्थक्रियासम्बन्धिन एव ग्रहणेनास्य भुजिप्रत्येव कारकत्वादित्या शङ्कान्निवारयति—नन्वित्यादिना। समाधानं सूचयति—मूलकेति। अपिर्भुजिनापि सम्बन्धं द्योतयति। अन्वय। शाब्द इति शेष। प्रधानेति। तिङन्तार्थक्रियाया समुदायजन्यशाब्दबोधे विशेष्यतया भानादस्या प्राधान्यम्। प्रधानानुरोधेनेति।

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययो पृथक्।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते॥

इति न्यायात्। सम्प्रत्ययेति—उपदंशप्रतीत्यर्थं।

ननु नियमशास्त्रस्य निषेधमुखेन प्रवृत्तिरिति पक्षे निर्वाहेऽपि विधिमुखेन प्रवृत्तिरिति सिद्धान्तिते पक्षे कथञ्चिन्निर्वाहोऽस्त आह—नियमस्येति। अर्थत—प्रयोजनत। निषेधेऽपि तात्पर्य "उभयप्राप्तौ कर्मणि षष्ठ्या प्रतिषेधेऽकाकारप्रयोगेऽप्रतिषेध" इति वार्तिकं सङ्गच्छते।

भावप्रकाश।

क्तत्वादिति। तथा च "सुपा धातु" इति लगापत्ति। विकल्पेन समासविधि स्वरार्थं इत्युक्तमेव। वाक्येन देशप्रयोगेऽनुपसमासे चाधिकारस्थप्रत्ययहेतुककार्याणा सुबादेशाना च साफल्यमिति भाव। अस्य— मूलकस्य। न कारकत्वमिति। तथाच तत्परिभाषाया प्रत्यासत्त्या कृत्प्रकृत्यर्थनिरूपितकारकस्यैव ग्रहणे नात्र तत्प्राप्तिः। तृतीयान्तेन शाब्दान्वय एव यदि प्रत्ययस्तर्हि करणे इत्येव वाच्ये तृतीयायामिति व्यर्थं तस्माद्वचनसामर्थ्याद्यार्थिकान्वयमादाय प्रत्ययसमासाद्युपपत्तावप्युक्तरीत्या समूहस्यार्थवत्त्वाभाव इवेति मूलमयुक्तम्। एतेन स्वेनैवोपदंश भुङ्क्ते इत्यादौ वचन सफलमित्यपास्तमिति भाव। समाधत्ते— मूलकस्येति। अपिरुक्तमनुकर्षति। अन्वय इति। शाब्दान्वय इत्यर्थ। यत्तु अर्थान्वय इति मूल कृद्विवरणम्, तन्न, तथात्वे कर्म इत्यनुभवमिति मन्तुमशक्यत्वाद्भाष्यविरोधादिति भाव। नन्वेव परत्व कर्मसंज्ञैव स्यात्। न च तयोर्मिथोऽविरोध। तथापि कार्यद्वारा तत्सत्त्वात्। अन्तिमश्चायमर्थ कृदिति चेत्त सूत्रे भाष्यकैयटयोराह—विभक्तिस्त्विति। तिङ्र्थक्रियाया प्राधान्येन प्रधानाप्रधानसन्निधौ प्रधानानुरोधो न्याय्य इति न्यायेनेति भाव। कार्यद्वारा परत्वाश्रयणावश्यकत्वे तत एव तृतीयाया युक्तत्वाच्चेत्यपि बोध्यम्। एवं चोपपदहेतुकतया महाविभाषोपस्थानेन सामर्थ्ये णमुलादय इति भाष्य सिद्धान्तविरोधोऽपि न। एतेन तृतीयायामिति सामर्थ्यात् णमुलादिवत्परिभाषाप्रवृत्ति। आदिना दन्तैरोष्ठं दश भुङ्क्ते इत्यादे परिग्रह। अत्र शाब्दश्च कारणत्वम्। वस्तुत "उपदंशस्तृतीयायाम्" इत्यादि प्राना ण्यात्कर्मणि तृतीयेयमिति मान्योक्ति प्राचामनुसारेणेति सूचितम्। तद् ध्वनयन्नाह—इत्याशयादिति। ननु तदुक्ताशय इति भाव। ननु नियमशास्त्राणा निषेधमुखेन प्रवृत्तिरिति पक्षे निर्वाहेऽपि मुख्यपक्षे विधिमुखेन प्रवृत्तावविरोधेनेदमयुक्तमत आह—नियमस्येति। तस्यार्थतस्तत्रापि तात्पर्येणार्थवत्सूत्रापवा दत्वादस्य नियमस्य परत्वेन तस्यापि निषेधे तात्पर्यादिति योजना। तात्पर्यमुभयत्र हेतु। अत एव "उभयप्राप्तौ कर्मणि षष्ठ्या प्रतिषेधेऽकाकारप्रयोगेऽप्रतिषेध" इति वार्तिकाक्षरस्वारस्य सङ्गच्छते। नन्वेव मपि परत्वमयुक्तम्, द्वयोरन्यानवकाशयोर्युगपत्समवस्थितयोरसम्भव इत्यवृत्त्याऽत्राप्रवृत्त यथा रामेभ्य

शय । अत एव—

वीतजन्मजरसः परं शुचि ब्रह्मण पदमुपैतुमिच्छताम् ।

इति भारविप्रयोगमसमञ्जसं मत्वा वीतजन्मरजस इति पठनीयमिति तैरुक्तम् । एतच्चेति । भाष्यकृता हि "टाङसि" इति सूत्रे इनातौ प्रत्याख्याय नादेशमदादेशं च विधाय नादेशे परे एत्वं योगविभागेन साधितम् । "बहुवचने झल्येत्" "ओसि च" । तत "आङि" आङि च परेऽत एत्व स्यात् । रामेण । तत "आप संबुद्धौ च" एकार स्यात् संबुद्धौ आङि ओसि च । न चैवमनेने-त्यत्र हाल लोप स्यादिति वाच्यम् । अनादेशस्य नकारे परे विशिष्य विधानात् । तथा हि, "अ नापि" नकारे आपि च परेऽत्र स्यादित्यर्थ । सूत्रे अ इति नान्तस्य नपुंसकनिर्देश । न च ङसेरदादेशे कृते पररूप स्यादिति वाच्यम् । अकारोच्चारणसामर्थ्याद्दीर्घसम्भवादिति । तथा च "जराया जरसन्यतरस्याम्" इति सूत्रे उक्तम् 'गोनर्दीयस्त्वाह–अतिजरैरिति भवितव्य स त्रपानपरिभाषया' इति । एवं च पूर्वविप्रतिषेधेनेत्यादि सर्वं भाष्यविरुद्धमित्यर्थ ।

"पद्दन्" । अत्र शसप्रभृतयो निमित्ततयोपात्ता । ते च पदाद्यादेशानुरूपान्

---

शब्दरत्नम् ।

प्रत्याख्यायेति । प्रत्याख्यानेन चेद् त्यज्यते—वक्ष्यमाणक्लेशपरिहारार्थं एकारो, न तु फलान्तरेऽभिनिवेष्टव्यमिति, अदादेशे त्वदिति च्छेद एव सूत्रतात्पर्यमिति ।

ते चेति । ये निमित्ततयोपात्तास्ते शस्प्रभृतय इत्यर्थ । अनुरूपानिति । स्वार्थेति ।

भैरवी ।

ननु भाष्यकृतैकारस्य प्रत्याख्यानमपि सूत्रकाररीत्या वृत्त्युक्तरूपमस्त्वित्यत आह—प्रत्याख्यानेनेति । वक्ष्यमाण–योगविभागादिरूप । एतेन यथोत्तरम्मुनीनाम्प्रामाण्यमाश्रित्य कारस्य तल्लक्ष्यातिरिक्तस्य रूपस्यासाधुत्वमिति ध्वनितम् ।

मूले–अत्र शस्प्रभृतय इत्यादिना स्थानिलाभोपाय उक्तस्तत्र वाक्यभेदेन ते चेत्यादिना स्थानिलाभप्रदर्शनमधिकमेकवाक्यतयाऽप्युपपादनस्य कर्तुं शक्यत्वादेवञ्चैव कथनं यत्तदोर्नित्य सम्बन्धप्रदर्शनार्थमेवेत्याशयेनाह–ये निमित्तेति । आनुरूप्यप्रयोजकधर्मं दर्शयति–स्वार्थेत्यादिना ।

भावप्रकाश ।

ननु भगवता प्रत्याख्यानेऽपि सूत्ररीत्या वृत्तिग्रन्थो युक्त एवात आह–प्रत्येति । यथोत्तर मुनीनां प्रामाण्ये तत्सम्मतलक्ष्यस्यैव सूत्रमतेऽपि कथञ्चिदपि साधनीयत्वस्यानुपदमेवोक्तत्वादिति भाव । क्लेशेति । योगविभागादात्यर्थ । चोऽस्येत्यग्रे योज्य (?) । तेन द्वयो समुच्चयलाभ । ननु 'अत्र शस्' इत्यादिना पद्दन्तेत्यवतारितम् । तत्र ते च निमित्ततयोपात्ता इत्यधिकम् । न च प्रकाशानुरोधेनात्यमुक्तम् । तत्रापि दोषसत्त्वादिति चेत् ? अत्र मान्या –शस्प्रभृतिष्विति नादेशविशेषण, शास्त्रप्रवृत्तिकाले तेषामभावेन पौर्वापर्याभावात् । स्थानिनस्तु नैवोपात्ता । एवं च तेन स्थानिन एवोपात्ता सप्तमी तु 'शेषे लोप' इतिवदिति भ्रम निराचष्टे–अत्रेति । अत एव परत्र पाठ । स्थानिलाभे उपायमाह–ते चेति यद्यपि । तत्र निमित्तयेत्युक्तिस्वारस्यस्य युक्तत्वेऽपि वाक्यभेदेन ते चेत्याद्युपपादनमयुक्तं, सम्भवत्येकवाक्यत्वे वाक्यभेदस्यान्याय्यत्वात् । तद् ध्वनयन् व्याचष्टे–ये निमित्तेति । तदो यच्छब्दार्थत्वात् । मूले चो हेतौ । अत्र च यतो हेतो पूर्वोक्ताश्च शसादयो निमित्ततयोपात्तास्ते इत्यर्थ इति भाव । एतेन तथा रत्नाकरादिग्रन्था प्रत्युक्ता । स्व रूपमित्यत्र रूपग्रहणादर्थविशिष्टशब्दस्यात्र शास्त्रकार्यित्वादिना आश्रयणं दुपस्थितोभयत आनुरूप्यमत्र विवक्षितमित्याह–स्वार्थेति । तेन चरणादीनामन्यथाचरणपादादीनां च नेति भाव ।

प्रकृतिविशेषानाचिपन्नीत्याह—पद्दन्नेति। यद्यपि "शीर्षंश्छन्दसि" इत्यतो-ऽत्र 'छन्दसि' इत्यनुवर्तते, तथाऽपि भाषायामपि क्वचिद्भवति "मासश्छन्दसि" इति वार्तिके छन्दोग्रहणाद् ज्ञापकाद् इति वक्ष्यते। प्रामादिकमिति। तथा हि, "आस्नो वृकस्य वर्तिकामभीके" इति मन्त्रे मुखादित्यर्थः औचित्यात्। "वृकस्य चिद्वर्तिकामन्तरा स्यात्" इति मन्त्रान्तरसंवादाच्च। एवं "हव्या जुह्वान आसनि" "आसन्यं प्राणमूचुः" इत्यादावपि। व्याख्यातं च तथैव वेदभाष्येषु। अत एव हरदत्तेनापि काशिकायाः प्रामादिकत्वमाविष्कृतमिति ध्येयम्।

---

शब्दरत्नम्।

धनमनर्थानि-स्वसदृशावर्णवत इत्यर्थः। वस्तुतो "वा शोकष्यञ्" इतिवद् व्यवस्थार्थमेवेति बोध्यम्। अनुवर्त्तते इति। अस्य 'इति प्राञ्चः' इति शेषः। ज्ञापकादिति। तद्धि

भैरवी।

अर्थविशिष्टस्य शब्दस्यात्र शास्त्रे कार्यित्वेनाश्रयणादत्रार्थोपादानम्। चरणादिशब्दस्यानुपपे-स्वसदृशेति। अनेकधर्मस्य सादृश्यप्रयोजकत्वस्य सम्भवे तस्यागोऽनुचित इति भावः। न च पदाद्यादेशानां वैकल्पिकतया चरणशब्दस्य पदादेशेऽपि पक्षे चरणशब्दस्य शसादौ प्रयोगः सिद्ध एवेति स्वसदृशावर्णवत इति व्यर्थमिति वाच्यम्। 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' इति कोशाच्चर-णशब्दस्य नपुंसकत्वमप्यस्तीति, पद्यपदादेशे चरणशब्दस्यापि स्यापादा 'तानि पन्दि पूज-या' इति प्रयोगस्याप्यापत्तेरिति स्वसदृशेत्यस्यावश्यकत्वात्। किञ्चोदकशब्दस्यैवापूर्शब्दस्या-प्युदन्नादेशे स्त्रीलिङ्गत्वस्यापि सम्भवेनास्मात्प्रान्तलक्षणडीबापत्तिरपि स्यात्। [illegible] स्वमते छन्दसीत्यस्यानुवृत्तिर्नास्तीत्यनुवर्त्तत इत्यनुपपन्नमत आह—मन्येतीति। अत्र स्यान्तमित्यत्र

भावप्रकाश।

स्वसदृशेति। भूयसा व्यपदेश इति न्यायात् सादृश्यस्य भेदाधिष्ठानत्वाच्च सुज्ञानर्थस्यापत्तेश्च किंचि-त्सादृश्येऽपि न स व्यवहारः किं त्वयमिति भावः। ननु छन्दसीत्यनुवृत्तौ "धे च तद्धिते" इत्यादावपि तदापत्तिः। न च विकल्पानुवृत्त्यर्थमावश्यककण्डूकन्तुत्या निर्वाह इति वाच्यम्। मानाभावात्, तदाश्रय-णे स्वरितत्वकल्पने गौरवाच्च। विकल्पानुवृत्तेरप्यनिष्टत्वाच्च। न च तत्र तदनुवृत्याविशेषः, हरदत्त-कैयटादिसम्मतत्वात्, धे चेत्यत्रापि शीर्षंश्छन्दसि वैनिशार्थत्वासहत्वात्तत्रेरेव। अत एव केचिदत्र छन्द-सीत्यनुवर्तयन्ति। अपरे पुनरविशेषणमिच्छन्ति।

व्यायामक्षुण्णगात्रस्य पद्भ्यामुद्वर्तितस्य च।
व्याधयो नोपसर्पन्ति वैनतेय इवोरगाः॥

इति काशिकाकृतोक्तम्। अत एव खण्डनकृता 'क्षुम्न चैनत्' इत्यादिनैतत्सर्वं समर्थ्यता तत्कारविसूचनं कृत-मिति चिन्त्यं मूलमत आह—अस्येतीति। तन्निवृत्तेरिति चेति।

सरला।

स्वार्थबोधनसमर्थानिति। तेन आसनशब्दस्य मकारादिघटितत्वेऽपि न आसन् आदेशः। स्वसदृशावर्णवत इति। तेन चरणशब्दस्य न पदादेश इति न कदाचित् 'पन्दि' इति नपुंसके रूपम्। एवं रात्रिशब्दस्य न निश् आदेशः। तथा च 'इदमहर्निशा गतम्' इत्यत्र निशादेशस्य स्थानिवद्भावेन रात्रिशब्दत्वमादाय 'रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्' इति रुत्वं न। एवञ्च पदादिविशिष्टत्वं पदाद्यनु-रूपत्वम्। वैशिष्ट्यञ्च—स्वबोध्यार्थबोधकत्वम्, स्वघटकव्यञ्जनघटितत्वमेतदुभयसम्बन्धेनेति फलितमिति तदाशयः। व्यवस्थार्थमेवेतीति। शसादिषु पादादीनां पदादीनां च प्रयोगः, श्रुतिं च पादादीनामेव प्रयोगो न पदादीनामिति प्रयोगव्यवस्थार्थमित्यर्थः। अत एव "शीर्षंश्छन्दसि" इति सूत्रभाष्ये "शीर्ष-न्निति प्रकृत्यन्तरं द्रष्टव्यम्" इत्युक्तम्।

"अल्लोपोऽनः" । अत्र प्राञ्चः–अन्नन्तस्य भस्याङ्गस्याकारस्य लोपः स्यादिति । तथा सति 'तक्ष्णा'इत्यादौ तकाराकारस्यापि लोपः स्यात् । भस्याङ्गस्यानोऽकारस्य इति व्याख्याने तु 'अनसा, मनसा'इत्यादौ स्यात् । तन्त्रावृत्त्यादिनाऽन्नन्तस्य भस्यानोऽकारस्येति व्याख्यानेऽपि'अनस्तक्ष्णा'इत्यादौ अतिव्याप्तिरेवातो व्याचष्टे–अङ्गावयव इत्यादि । भस्येत्यनेनाक्षिप्तः प्रत्ययविशेषोऽङ्गं चेति द्वयमनो विशे-

## शब्दरत्नम् ।

षेरिति भावः । अत एव भाष्ये तदनुवृत्तिर्नोक्ता ।

**तथा सतीति** । प्राचीनमतव्याख्याद्वरे इत्यर्थः । **भस्येत्यनेनेति** । अङ्गस्येत्येतत्साहितेनेत्यर्थः । एतेन भत्वस्य सुपणोऽप्रत्ययत्वस्वरशब्दयोरपि विधानात्तेन न प्रत्ययाक्षेप इत्यपास्तम् । अङ्गं चेति । अधिकारलब्धमिति भावः । ननु भत्वस्य तत्सूत्रे "यस्मात्प्रत्ययविधि." इत्यनुवृत्त्याऽङ्गनिष्ठत्वेन तेनाङ्गनिष्ठयजादिपरत्वाक्षेपेण तदवयवस्य

## भैरवी ।

पदम् । अत एव–छन्दोग्रहणवैयर्थ्यापत्तिदोषादेव ।

मूले–अत्र प्राञ्च इति । काशिकाकारादयः । तथा सतीति । एतादृशव्याख्याने सतीत्यर्थकं यदुक्तस्तस्य वैयर्थ्यन्दोषोपपादनमात्रस्योचितत्वादुत आह–प्राचीनेति । एतेन यद्यपि मया तत्स्यादुरः कृतस्तथाऽपि तद्दुर्दृष्टमिति ध्वनितम् । एतेन–अङ्गस्येत्येतत्साहित्यकथनेन । अत एव मूले अङ्गञ्चेतीत्यभिहितम् अङ्गस्येत्यस्याप्रक्रान्तत्वशङ्कानिरासायाह–अधिकारेति । एवं सति सुपणश्च इत्यत्राल्लोपाभावोऽपि द्रष्टव्यः । अत्राङ्गस्येत्यस्याधिकारलब्धत्वकथनेन भस्येत्यस्यापि तथैव लाभ इति ध्वनितम् । नन्वत्राङ्गस्य भस्येत्यस्य च यद्यप्यधिकाराल्लाभस्तथाऽप्यङ्गस्य भस्यान इत्येवार्थः स्यान्न तु प्रत्ययविशेषस्य ततो लाभः । आक्षेपेणेति चेत्कोऽसावाक्षेप, अनुमानं वा भसंज्ञासूत्रेणैकवाक्यता वा ? तत्राद्यः पक्षो न युक्त इत्याशयेनाशङ्कते–नन्विति । अनुमानमत्र प्रत्ययविध्युपादानम् असर्वनामस्थानयजादिस्वादिपरं भाङ्गपदोद्देश्यस्वादित्येवङ्कार्यम् । तदवयवस्य तत्कालाभ इति । तस्य पक्षतावच्छेदकत्वन्न तु पक्षत्वमिति भावः । किञ्च पदभेदेनोद्देश्यताभेदाच्च पदयोर्हितत्वेन हेतुतावच्छेदकत्वमिति भत्वादिनैव तत्त्वं वक्तव्यम् ।

## भावप्रकाश ।

प्राञ्च इति । कैयटहरदत्तादय इत्यर्थः । तथा चात्रोपन्यासोऽस्य नोचित इति भावः । मुख्य बीज ध्वनयितुमाह–अत एवेति । छन्दोग्रहणवैयर्थ्यादेवेत्यर्थः । भाष्ये इति । एतेन भाष्ये [illegible] छान्दसमेवैतदिति स्थितमिति हरदत्तोक्ति, तदसदनुवृत्तेश्छान्दसमेवैतदिति भाष्यमिति प्रकाशोक्तिर्मूलानुयायिरत्नाकरदण्डस्य युक्तिरपास्ता ।

मूले प्राञ्च इति । काशिकाप्रक्रियाकृत इत्यर्थः । अत एव बहुत्वोक्तिः । ननु तत्र तत्र लोपापत्तेरिति वाच्ये तथा सतीत्यधिकमत आह–प्राचीनेति । तथा च तदादरे दोषेण तस्य दुष्टत्व ध्वनितमिति भावः । एतेनेति । तत्साहित्यनिर्देशेनेत्यर्थः । एतेनाङ्गेनापि प्रत्ययाक्षेप'दुक्तार्थलाभ इति मान्योक्तिः प्राचामनुरोधेन तावता प्रत्ययसामान्यलाभेऽपि विशेषालाभाद् ज्ञानगौरवाच्चेति ध्वनितम् । एतेन [illegible]व्यरीत्या कार्यकाले तदुपस्थितेरेवाक्षेपपदार्थत्वेन शङ्कासमाध्योरयुक्तत्वमिति मन्दोक्तमपास्तम् । तथाऽर्थस्यैतच्चेत्यनेन वक्ष्यमाणतयाऽत्र प्रसिद्धतरत्वेनानुमानादेरेव ग्रहणेनान्योक्तेरयुक्तत्वात् । अत एव नन्वित्यादितदवतरणमङ्गतिरिति दिक् । विधानादिति । तथा च तादृशप्रत्ययपरत्वाभाववति भत्वसत्त्वेन व्यभिचारान्नाक्षेपसम्भवः । एतेन तथा रत्नाकरदण्ड्यादिग्रन्थाः परास्ता इति भावः । लब्धमिति । एतेन भस्येत्यपि तथेति सूचितम् । नन्वाक्षेपोऽत्रानुमानादि भसंज्ञासूत्रेणैकवाक्यता वा । नाद्य इत्याह–ननु भत्वस्येति । तत्सूत्रे इति । यचि भमित्यत्रेत्यर्थः । अन्यत्रेऽपि यथोद्देशः कार्यकालो

पणम् । अन् तु अकारस्य, अतो नोक्तदोष इति भाव । एतच्च "ग्रहि: सम्प्रसारणम्" इति सूत्रे भाष्ये स्पष्टम् ।

---

शब्दरत्नम् ।

तत्त्वालाभ. । किं चानो विशेषणेऽपि 'विधौ परिभाषोपतिष्ठते नानुवादे' इति निर्दिष्टपरिभाषाऽनुपस्थितेरनन्तरङ्गेत्यादौ दोषो दुर्वार इति चेत्तत्राह—एतच्चेति । तथा च भाष्यम्—'एवं तर्हि कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यं "भस्य" इत्युपस्थितमिदं भवति "यचि भम्" इति, तत्र यकारादिपरतयाऽजकारं विशेषयिष्याम अतो यकारम् । यकारादिस्त्र्यादिपरस्यातोऽकारस्य" इति । तस्यायं भाव —कार्यकाले "भस्य" इति श्रुते भपदार्थजिज्ञासायां "यचि भम्" इत्युपस्थितेन वाक्येनैक

भैरवी ।

एवञ्च सुप्तङन्तस्वस्वयोरित्यनेन ययोर्भसंज्ञा तयोरपि भत्वावच्छिन्नोद्देश्यत्वसत्त्वेन तत्र निरणसाध्याभावेन व्यभिचार । एवं पदशब्दोद्देश्यत्वस्य राजन्यामित्यत्रैव व्यभिचार । न द्वितीय, यथोद्देशपक्षे संज्ञाशास्त्रस्य पृथगेव वाक्यार्थबोधनेकवाक्यताया अलाभात् । कार्यकालपक्षेऽपि वाक्यैकवाक्यता न पदैकवाक्यतेति निरकार्यालाभात् । प्रत्ययस्याङ्गाद्वे उत्थिताकाङ्क्षतया व द्विशेषणताया न्याय्यत्वाच्चेति । परोक्तमनुविशेषणत्वमभ्युपगम्याप्याह—किञ्चेति । दोष —अतिव्याप्ति । भाष्यमिति । एतच्च भाष्यन्तस्मिन् सूत्रे "अनन्त्यविकारेऽन्त्यसदेशस्य" इति परिभाषाया प्रयोजनखण्डनावसरे प्रवृत्तम् । ननु प्रत्ययस्याङ्गसाकाङ्क्षत्वमेव "अङ्गस्य" इति सूत्रभाष्ये "परस्परम्प्रत्यङ्ग प्रत्ययसंज्ञाऽभावात्" इत्यनेन दर्शितमित्यनुविशेषणत्वद्वयमत्रोक्तमत आह—तस्यायम्भाव इति । श्रुते—अधिकारतो लब्धे । जिज्ञासायामिति । एतेन भपदस्य श्रवणमात्रेण कृत्रिमाकृत्रिमन्यायेन यस्येयं संज्ञा कृता तस्यार्थस्योपस्थितिसत्त्वात्पुनर्वाक्यार्थबोधस्य नापेक्षेति निरस्तम् । कार्यकालपक्षेण कल्प्यते स्वसन्निधिरुपाप्यते इति व्युत्पत्त्या कार्यविधायकशास्त्रघटकसंज्ञाशब्दघटितं यत्संज्ञासंज्ञिभावसम्बन्धबोधकं शास्त्रं तस्य जिज्ञासा जन्मपितृवोपस्थितिकार्यते इत्येव "भस्येदमुपस्थितमिदम्भवति यचि भम्' इति भाष्येण लभ्यते । तच्छास्त्रोपस्थितिमात्रेण विधायकशास्त्रवाक्यार्थबोधासम्भव इति पुनस्तत्र संज्ञासूत्रेण वृत्तिग्रहो भव

भावप्रकाश ।

वा ? नाथ, एकवाक्यताया अभावात् । सामग्रीसत्त्वेऽकान्तरतान्यार्थंबुद्धानभावेन वाक्यैकवाक्यत्वञ्च । एतेनान्यथोऽपि निरस्त । किं च प्रत्ययस्याङ्गाद्वौ उत्थिताकाङ्क्षत्वेन तत्रैवान्वयौचित्यात् । तुष्यतु दुर्जनन्यायेन मूलरीत्या दोषमाह—किञ्चेति । दोष —अतिव्याप्ति भाष्यमिति । अनन्त्यविकारे इत्यस्य फलकथनप्रघट्टकेऽत्र फलं मूलरीत्या 'अनलङ्गा' इत्यादावप्रवृत्तिरूपमुपन्यस्य तत्खण्डनमित्यर्थ । इदं द्रष्टव्यमिति पाठ । एव स भाष्यमुक्त्वा विशिष्याह—भस्येतीति । परस्यात इति । तत्परस्यातो योऽकारस्तस्येत्यर्थ । ननु अस्य भाष्यस्य मूलसमत्वेनानिर्वाहस्तन्त्रैवस्य एवात आह—तस्यायमिति । अत्र मान्याकार्यकाले एकवाक्यतेति निर्विवादम् । सा च पदाना, न वाक्ययो । यत्र भशब्दस्तत्र यस्मात्प्रत्ययविधिस्तदादि यचीति चोपतिष्ठते इति सूत्रार्थ । तत्र चोपस्थितपदानां यथेष्टमभिसम्बन्ध । यथा ज्योतिष्टोमेन राजसूयादिपदानां यागविधौ सामानाधिकरण्यान्नामधेयत्वावगतिर्न तु यन्न दु खेनेत्यादिभि स्वर्गशब्दार्थावगमवद्वाक्यान्तरेण, तथाऽत्र पक्षे भादिशब्दानाम् । एतेन प्रत्ययस्याङ्गाद्वौ उत्थिताकाङ्क्षत्वेन तत्रैव यचीत्यादीनामन्वय उचित इत्यपास्तम् । भाष्यप्रामाण्येन लक्ष्यानुरोधेन चेदुक्ते विषये उत्थाप्याकाङ्क्षयैवान्वयाङ्गीकारादिति । लक्ष्यान्तराननुरोधेन । तथेष्टत्वे हि यचिभमिति न वदेत्, यचीत्येव वदेत् । किं च पदैकवाक्यतयाऽन्वयेऽपि स्वोपस्थापकोपस्थापिते यत्न प्रत्ययविधिस्तदादावेवान्वयापत्तेर्माध्यमग्रामण्यात्तु मदुत्तार्थ एवोचित । तद् ध्वनयन्नन्यथा तदाह—कार्येति । श्रुते इति । अधिकारलब्ध इत्यर्थ । सायाचे

शब्दरत्नम् ।

वृत्तौ एतद्वाक्यार्थबोधकाले लक्ष्यानुरोधेन तन्त्रादिन्यायाश्रयणाद् यचीत्यस्यापि विशेषणता ऽपि । विधौ परिभाषेति न्यायस्तु "इको गुणवृद्धी" "अचश्च" इति व्यतिरिक्ते नास्त्येव, "उदात्तस्वरितयोर्यण" इत्यादावुदात्तस्वरितस्थानिकयण इत्यर्थस्येष्टत्वादिति । एतच्च स्त्रीप्रत्यये इत्वप्रकरणे निरूपयिष्याम ।

यदि तु अदसुपडित्यर्थमनन्त्यविकार इति परिभाषाऽऽवश्यकी, तर्हि अनल्तङ्गेरथादौ व्यावृत्ति । अत्र सान्तमहत इत्यादौ चानेकक्लिष्टकल्पनापेक्षया परिभाषास्वीकार एवो- चित । भाष्यन्तु वार्तिकोक्तफलाना अन्यथासिद्धिप्रदर्शनमात्रपरम् । अत एव चान्येतस्या: परिभाषाया प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्येति भाष्ये उपसंहृतम् । यत्तु "न सम्प्रसारणे" इति सूत्रे "नैतस्या परिभाषाया सन्ति प्रयोजनानि" इति भाष्य, तत्तु "न सम्प्रसारणे" इत्यादेरेव ज्ञापकस्य प्रयोजनाल्पत्वसूचकमित्युच्यते, तदाऽस्तु अङ्गविशेषणमेव तदित्याहु ।

भैरवी ।

ति । ■ च प्रकृतोपयोग्यव । शास्त्रान्तरे पुनस्तथा जिज्ञासायामपुनरप्येवमेव कल्पनेति । एतद्वा क्यार्थबोधकाले—विधायकशास्त्रार्थबोधकाले । अपिविशेषणताऽपीति अपिनाङ्गविशेषणताया समुच्चय । एवञ्चोभयविशेषणत्वं सकृदुपस्थितिमात्रेण न सम्भवत्यतस्तन्त्रादिन्यायाश्रय- णम् । अत एव भस्याङ्गस्यातोऽकारस्यासर्वनामस्थानपरस्येति व्याख्यानस्योपपत्ति । यत्तु- कम्प्राग्विधावित्यादि,तन्नेत्याह—विधाविति । एतच्च—तस्या परिभाषाया सार्वत्रिकत्वमास्ती- त्येतच्च । तत्र विधीयत इत्यध्याहारेण तद्विषयताया उचितत्वादिति भाव । अत्रेदन्तत्त्वम्— तस्यायम्भाव इत्यत्र तच्छब्दोपादानेन "ष्यङ सम्प्रसारणम्" इति सूत्रस्थभाष्यमेतदे- वयुक्ति, प्रत्ययस्याङ्गाक्षेपे उपस्थिताङ्गत्वेन तद्विशेषणत्वस्यैव न्याय्यत्वात, आकडाराधि- कारीयभपदसंज्ञाविषये यथोद्देशपक्षस्यैव सिद्धान्तितत्वाच्च । तथा च प्रकृतविषये दोषाभावो ऽनन्त्यविकार इति परिभाषयैव सम्पादनीय इति ।

भावप्रकाश ।

ति । अन्यथा अवगमानर्णोपस्थितिन स्यादिति भाव । वृत्ते इति । प्रकृतविषयके इति भाव. । यची- त्यस्येति । उपस्थितत्वादिति भाव । अपि भिन्नवाक्यीयाङ्गविशेषणसमुच्चायक । एतेन मूलमनूद्य तत्र भाषा मन्थे हि भस्येत्यतो विशेषणम् । तदर्थश्च कर्यकाले सज्ञापरिभाषमिति यजादावसर्वनामस्थान परस्येति । तत्परत्व च येन नेति न्यायेन मात्र्यवहितस्यातो गृह्यते तेनाक्तदोषाभावात् । एव व्याख्याने उन स्यस्याङ्गेन सामानाधिकरण्यान्वयोऽनुकूल । अङ्गावयवस्येति व्याख्याने तु वैयधिकरण्यान्वयाप- त्तिरिति खण्डनकृदुक्तम् । भाष्यकृता परिभाषा विनाऽपि सिद्धिरुक्तेति स एव पक्ष सर्वैरुक्त । वृत्तिकृता तु तमाश्रित्य यथोद्देशेऽपि तथा व्याख्यानम् । एव च भाष्य व्याख्याया पक्षद्वयेऽपि सम्भवात् कौमुद्युक्त व्याख्यायास्तु कार्यकाले एव सम्भवादेतदाश्रित्य न योक्त तत्खण्डनमनुचितमिति मन्दोक्त चापास्तम् । इको गुणेति । तत्र विधेये इत्यध्याहारेण तन्मूलकत्वादिति भाव । नास्त्येवेति । फलाभावादिति शेष । इष्टसिद्धि निराचष्टे—उदात्तेति । नन्वेवमुदीचामात इत्यत्र स्थानेग्रहणानर्थक्य, तद्धि तज्ज्ञापकत्वे सा र्थकमिति चेद्? न्ययमेव तत्र । स्थानसम्बन्धोऽन्तरङ्गत्वनयो न परिभाषानिष्ठ इत्यस्य ■ स्थाने इत्यत्र भाष्ये स्पष्टमुक्तत्वेन ज्ञापकत्वासम्भवश्च । भन एतान् विशेषणत्वेऽप्यव्यवधानलाभादुक्तभाष्यसङ्गतिस्तदा ह—एतच्चेति । तस्याय भाव इत्यत्र तस्येत्यनेनारम्भि सूचिता । एकदेशयुक्तिरियमङ्गाक्षेपे प्रत्ययस्यो पस्थिताङ्गत्वेन तदर्थस्यैवौचित्यात् , आकडारात्संज्ञासु कार्यकालपक्षाभावस्य सिद्धान्तितत्वाच्चेति । एव च तथैवावधिपक्षयाऽत्र निर्वाह इति प्राचाम व्याख्यानमेव युक्तमिति दिक् ।

"रषाभ्याम्" । पदे इतीयतैव सामर्थ्यादेकपदत्वे लब्धेऽपि समानग्रहणं यत्समानमेव, अखण्डमिति यावत् । तत्र यया स्यात्तेन समासे न भवति।

शब्दरत्नम् ।

सामर्थ्यादिति। निमित्तनिमित्तिनोरपदस्थयोरसम्भवादिति भावः। अखण्डमिति। तत्त्वं च निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वम् । तेन 'मातृभोगीण' इत्यत्र णत्वसिद्धिः । केवलभोगीनेत्यस्य प्रत्ययमात्रस्य वा तत्त्वाभावात् । अत एव "आत्मन्विश्व

भैरवी।

मूले सामर्थ्यादित्यस्य पदपदोपादानेत्यादिः । अत एवाह–निमित्तेत्यादि । तेन विभिन्नपदस्थानाम्मातुर्नमनमित्यादौ णत्वाभावः सिद्धः।नन्वेकपदस्थत्वं यत्र निमित्तनिमित्तिनोस्तत्रैव णत्वमित्येतदुक्थनतावता रामनामेत्यत्रातिप्रसङ्गवारणासम्भव इत्यत आह–तत्त्वञ्चेति। न च निमित्तिमत्त्वं विधीयमानस्य णकारस्य, न तु नकारस्येति कथन्निमित्तन्यानिमेरेकपदस्थत्वस्य लाभ इति वाच्यम् । स्वप्रयोज्यकार्योद्देश्यत्वस्य षष्ठ्यर्थत्वमाश्रित्येनि प्रत्ययस्य स्वीकारात्। निमित्तानधिकरणनिमित्तिमत्पदघटितं यत्किञ्चित् यत्पदन्तद्भिन्नपदत्वं यत्र द्वयोस्तत्र णत्वमित्यर्थः । तेन-निमित्तिमतिपदस्य विशेषणेन। तत्त्वाभावादिति। पदत्वाभावादित्यर्थः। "आत्मन्विश्व"इत्यनेन खप्रत्ययस्य मातृभोगशब्दाद्विधानेन तदर्थविशिष्टस्वार्थबोधकत्वमेव तस्य, न तु भोगशब्दमात्रार्थविशिष्टस्वार्थबोधकत्वमिति वक्ष्यमाणपदत्वाभावः स्पष्ट एव । अत एव-उक्तस्य समान-

भावप्रकाश ।

असम्भवादिति । तथा च तत्सामर्थ्यादित्यत्वे लब्धे एकपदवृत्तिनिमित्तनिमित्तिनोः सतोर्णो भवतीत्यर्थलाभेन मातुर्नमनमित्यादिवाक्यवारणेऽपि रामनामेत्यादिवारणाय समानेति, तच्च एकपदमिति भावः। यत्तु दण्डी–निमित्तवत्तदभिन्नपदत्वाभाववत्त्वं समानपदत्वमिति । तन्न, रामेण वृष्णा मातृभोगीण इत्यादिसिद्धावपि रामनामेत्यादावुत्तरपदत्वे चेति प्रत्याख्यानरीत्याऽतिव्याप्तेः । व्युत्पत्तेः प्राक् समासे गन्धर्वगानमित्यादावतिव्याप्तेश्च । एतेन न बहुव्रीहिः, किं तु कर्मधारय इत्यप्यपास्तम् । पक्षे समुदायप्रकृतिमादायापि दोषापत्तेश्च । पदत्वस्य कैयटोक्तस्यानादराच्च सुपर्वणेत्यादावव्याप्त्यापत्तेश्च । यत्तु रत्नाकरः–निमित्तस्य निमित्तिमत्पदस्थत्वमेव समानपदस्थत्वमिति। तन्न, रामनाम गन्धर्वगानमित्यादावतिव्याप्तेः। अन्यथा मातृभोगीण इत्यादावव्याप्तेः । अत्र मान्या–अखण्डत्व चात्र रेफषकारानधिकरणममभिव्याहृतपदावृत्तित्वमित्याहुः, तन्मतानामनुरोधेन । तस्य नकारनिष्ठत्वेऽपि पदानिष्ठत्वादखण्डत्व चेति विशेष्यविरोधापत्तेः । तदेतत्सर्वं ध्वनयन्नाह–तत्त्वं चेति । अखण्डत्व चेत्यर्थः । तदनधिकरणत्व निमित्तिमत्त्वं च पदविशेषणमिति भावः । तथा विवक्षायां पदत्वनिवेशफलमाह—तेनेति । इत्यत्रेति । इत्यादावित्यर्थः । मात्रकेवलशब्दौ स्पष्टार्थौ । तत्त्वाभावात्–पदत्वाभावात् । एवं निवेशेनात्र णत्वकरणे बीजमाह–अत एवेति । नन्वाद्यविशेषणाभावे रामेणेत्यादौ न दोषः, निमित्तिमतोऽपदत्वान्निमित्तिमत्पदरू

सरला ।

तत्त्वमिति । अखण्डपदत्वं च निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वम् । 'रामनाम' इति विशिष्टपदस्य निमित्तं रेफस्तदनधिकरणं निमित्ती नकारस्तद्वत् पदं 'नाम' इति, तद्घटितत्वमेव न तु तदघटितत्वमिति न णत्वम्, 'मातृभोगीणः' इत्यस्य च तद्धितविशिष्टस्य निमित्तम् ऋकारस्तदनधिकरणं पद भोग इति, न तद् निमित्तिमत्, यच्च निमित्तिमद् भोगीन इति, न तत्पदमिति निमित्तानधिकरणनिमित्तिमत्पदमुदासीनं तदघटितत्वमेवेति तत्र णत्वसिद्धिः । न चैव 'रामनरेण' 'परमाग्नीध्रेण' इत्यादौ 'नर' 'आग्नीध्र' इत्यनयोर्निमित्तभूतरेफघटितत्वेन निमित्तानधिकरणनिमित्तिमत्पदत्वं तयोर्नास्ति किन्तूदासीनस्य 'नाम' इत्यादेरेवेति तदघटितत्वेन 'रामनरेण' 'परमाग्नीध्रेण' इत्यनयोरखण्डपदत्वापत्त्या 'नर' 'आग्नीध्र' घटकनकारस्थाने णत्वापत्तिरिति वाच्यम्, निमित्तविशिष्टनिमित्तिमत्पदाघटितत्वमखण्डपदत्वम्, वैशिष्ट्यञ्च—स्वोत्तरत्वं, स्वाघटितपदघटकत्वमेतदुभयसम्बन्धेनेति विवक्षणेनादोषात् । तथा हि, निमित्तपदेन

शब्दरत्नम् ।

जन" इति सूत्रस्थम् "आचार्यादणत्वं च" इति चरितार्थम् । सुपर्वणेत्यादिसिद्धये निमित्तानधिकरणेति । पदं चात्र लोके विभक्तीतरानपेक्षयाऽर्थबोधकत्वेन दृष्टम् । तेन गन्धर्वगानमित्यादौ सुबुत्पत्तेः प्राक् समासेऽपि णत्वं न । क्षुभ्नादिषु नृनमनशब्दन्तु संज्ञाभूतोऽखण्ड इति तस्य ऋवर्णात्परस्य णत्वे ज्ञापकता भाष्योक्ता नासङ्गतेत्याहुः ।

भैरवी ।

पदत्वाश्रयणादेव । चरितार्थमिति । तावन्मात्रेणातिप्रसङ्गवारणासम्भवादणत्वमित्यावश्यकमिति भावः । इत्यादिसिद्धये—णत्वघटितप्रयोगस्य सिद्धये । नन्वत्र पदत्वम्पारिभाषिकमुतार्थवत्त्वमात्रम् । नाद्य, गन्धर्वगानं रामनमनमित्यादौ सुबुत्पत्तेः प्राक् समासेनोत्तरपदस्य पारिभाषिकपदत्वाभावाण्णत्वापत्तेः । नापि द्वितीयम्, रामेणेत्यादावेव णत्वासिद्धेरत आह—पद चात्रेति । अत्र—उक्तसमासपदत्वलक्षणे । अथबोधकत्वम्—अर्थबोधजनकसमुदायघटकत्वम् । तच्च विभक्तिसहकारेण यस्य बोधकता तद्घटके स्वप्रत्ययेऽप्यस्तीति मातृभोगीण इत्यत्र णत्वाप्राप्तिर्गोऽभावद्वयनिवेशः । तेन—उक्तरूपस्य पदत्वस्य लक्षणघटकत्वेन । निमित्तानधिकरणत्वन्निमित्तावयवकत्वम्, तच्च मातृभोगीण इत्यत्र भोगशब्देऽस्तीति तदनवयवकत्वरूपन्तद्घटितत्वं समुदायस्य नास्तीत्यत्र णत्वञ्च स्यादतो—निमित्तमिति । ननु 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्त' इति पक्षे ऋकारात्परस्य णत्वे क्षुभ्नादिगणे नृनमनशब्दपाठस्य ज्ञापकता भाष्ये उक्ता, सा निरुक्तस्याखण्डपदत्वस्याश्रयणे कथं सङ्गच्छेत । तत्र भवत्सम्मताखण्डपदत्वस्याभावेन णत्वप्राप्त्यभावादत आह—क्षुभ्नादिष्विति । संज्ञाभूत इखण्ड इति । अनेन पूर्वोत्तरसमुदायस्य संज्ञात्वसूचनेन "पूर्वपदात्संज्ञायामगः" इति सूत्रस्य प्रवृत्तिर्ध्वनिता । "छन्दस्यृदवग्रहात्" इत्यस्य तु न प्राप्तिरत्रावग्रहस्यादर्शनात् । भाष्यो-

भावप्रकाश ।

पत्वाच । अत एव मातृभोगीण इत्यादौ न दोषोऽत आह—सुपर्वेति । तदनधिकरणत्वं च तदनवयवकत्वम् । तेन मातृभोगीण इत्यादौ तदनधिकरणभोगरूपपदघटितत्वात्तत्सिद्धये—निमित्तेमदिति । ननु किं पारिभाषिकं पदत्वमुतार्थवत्त्वम् ? नाद्यः, रामनमनमित्यादौ सुबुत्पत्तेः प्राक् समासे णत्वापत्तेः । द्वितीयेऽपि [illegible] न, पक्षान्तरे तदप्राप्ते. । एतेन प्राक् सुबुत्पत्तेः समासे णत्वं, सुबन्तेन समासे तु नेति विवेक इति भाष्योक्तिः प्राचामनुरोधेनेति ध्वनितम् । नान्त्यः, रामेण मातृभोगीण इत्यादौ णत्व सिद्धेरत आह—पदं चेति । लक्षणेति भावः । अत्रेति । अनेनान्यव्यावृत्तिः । अनपेक्षयेति । अभावद्वयनिवेशफलमर्थवत्सूत्रोक्तरीत्या बोध्यम् । प्रत्ययस्य भोगानेत्यस्य चातस्तत्र प्रागुक्तदोष इति भावः । अपितदुत्तरसमासमुदायक । नन्वेवं क्षुभ्नादौ नृनमनशब्दपाठो व्यर्थो योगिकत्वादत आह—क्षुभ्नेति । न च तत्र छन्दस्यृदवेति प्राप्तिः, ईदृशे विषयेऽवग्रहाभावात् । तद् ध्वनयन्नाह—तस्येति । वर्णैकदेशानां वर्णग्रहणे नामग्रहणमिति पक्षे इति भावः । आहुरिति । अत्रारुचिबीज तु तस्य तत्त्वे तदसाङ्गत्येऽपि तत्र सत्त्वात्-

सरला ।

रामघटकस्य परमघटकस्य वा रेफस्य ग्रहणे तदुत्तरत्वं नरघटके आग्नीध्रघटके वा नकारे वर्तते, एवं तदघटितं पदं नर इति आग्नीध्र इति वा तद्घटकत्वमपि तत्र नकारे इति निमित्तविशिष्टो निमित्ती नर आग्नीध्र घटकनकारस्तद्घटकं नर इति आग्नीध्र इति वा तद्घटितत्वमेव रामनर परमाग्नीध्र इत्यस्य, न तु तदघटितत्वमिति नाखण्डपदत्वम् । यत्तु निमित्तानधिकरणनिमित्तिमत्पदाघटितत्वरूपे अखण्डपदत्वपरिष्कारे दोषमुद्भाव्य निमित्तविशिष्टस्य नस्य णत्वम्, वैशिष्ट्यञ्च—स्वोत्तरत्व, स्वाघटितपदाघटकत्वमेतदुभयसम्बन्धेनेति णत्वविधायकसूत्रस्यार्थविवक्षणेन राम—परमघटकरेफमादाय द्वितीयसम्बन्धाभावाद् नर आग्नीध्रशब्दावयवरेफस्य ग्रहणे तु पूर्वसम्बन्धाभावात्तन्निराकरणमिति, तच्चिन्त्यम्, प्रकारान्तरेण दोषवारणेऽप्यखण्डपदत्वस्यानिर्वचनादिति ।

रामनाम । यूषण इति । यूषो मण्डः ।

मुद्गामलकयूषस्तु भेदी दीपनपाचनः ।

इति दर्शनात् । इति पक्षे त्विति । एतेन पञ्चमीसमासस्य पाक्षिकतां ध्वनयति। तथा हि, भाष्ये—वेभिदिता, माथितिकः, अपीपचन्निति प्रयोजनत्रयमुक्तम् । तच्चान्यथा सिद्धम्। "एकाच उपदेशे"इत्यत्र विहितविशेषणादेव वेभिदितेत्यत्र

शब्दरत्नम् ।

मण्ड इति । तद्विशेष इत्यर्थः । वेभिदितेति । वेभिद्यतेर्यङन्तात्तृचि अल्लोपयलो- भैरवौ ।

क्लीति । 'पूर्वोद्' सूत्रे इत्यादि । वस्तुतस्तु यदीयमखण्डा नरशब्दान्तसंज्ञा तदा संज्ञात्व भङ्गापत्त्या तत्र णत्वाभावस्य सिद्धौ गणे तस्य पाठो व्यर्थ एव रषादिति तस्य यौगिकत्वमेवास्ति, न ▮ सांज्ञात्वम् । न चैवं सति पाठस्य वैयर्थ्यमाशङ्कनीयम् , तेन निरुक्तस्याखण्डपदत्व एव "रषाभ्याम्"इति सूत्रे सत्ताऽस्तीति बोधनद्वारा त्रिप्रगाप्तिरेव बोध्यते। अत एवाह-इति भाव इति । नन्वेतादृशाखण्डपदत्वमेव यदि णत्वप्रवृत्तिसम्पादकं,तदा सर्वनामरघुणेऽत्र निमित्तानधिकरणनिमित्तमन्नाथपदघटितस्वस्य समुदाये सत्त्वाण्णत्वं न रषादिति चेत् ? न, पदं निरुक्ताखण्डत्वन्निरस्य नकारे तात्पर्यविनिर्द्धापेक्षया लाघवान्नकार एव निमित्तानधिकरणनिमित्तिमत्पदावयवत्वविशेषणविवक्षायास्तेनादोषात् । नचैवमपि रघुनरेणेत्यत्र नरशब्दावयवस्य नस्य णत्वन्दुर्वारमिति वाच्यम् । निमित्तिमत्त्वमित्यत्र निमित्तिमत्त्वञ्चकारे निविष्टत्वञ्च स्वोत्तरत्वसम्बन्धेन रेफषकारान्यतरत्वरूपमेव । एवञ्च यस्य स्वपदेनोपादानन्तत्र तस्यैव प्रत्यासत्त्या निमित्तानधिकरणेत्यत्र निमित्तपदेन ग्राह्यतया नरशब्दावयवनकारस्य परेण रेफेण निमित्तत्वव्यवहार एव नेति यद्वेकल्पत्तिमाश्रित्य निमित्तत्वव्यवहारस्तस्य नकारस्य तद्व्यवस्थानधिकरणत्वस्य नरशब्दे सत्त्वेनादोषात् ।

ननु मण्डशब्दस्य तण्डुलैर्निर्मिते द्रवे प्रसिद्धेर्मुद्गामलकयूषस्त्विति। परवाक्यविरोधो यूषो मण्ड इति व्याख्याने प्राप्नोतीत्यत आह—तद्विशेष इति। एवञ्च यथा तण्डुलजलनिर्मिते यूषव्यवहारस्तथा मुद्गः कृतेऽपि यूषव्यवहार आयुर्वेद एव सुप्रसिद्धतया न परवाक्यविरोध इति भावः । मूले-पाक्षिकतामिति । तस्यानित्यत्वाद्नाश्रयणेऽपि तत्साधनीयकार्यस्य प्रकारान्तरेण सिद्धतामित्यर्थः । तामेवाह—तथा हीत्यादिना । तस्यानित्यत्वे प्रमाणन्तु "निष्ठायां सेटि" इति सूत्रे इटि कृते एव णिलोपो, न तु ततः प्रागिति कालावधारणार्थकसेड्ग्रहणमिति

भावप्रकाशः ।

मत्रमियेव फलाभावे सिद्धे तत्र तत्पाठानर्थक्यमेवेति । तस्मादीदृशसमानपदस्थविवक्षासूचनद्वारा विधेः प्राप्तिबोधक एव स न तथेति तत्त्वं बोध्यम् ।

ननु यूषो न मण्डः, तयोर्भेदस्यायुर्वेदादावुक्तत्वात् । तथा हि, वृद्धसुश्रुतः—

तण्डुलैश्च कृतो मण्डः साधनं तस्य कथ्यते । सिक्थैर्विरहितो मण्डः पेया सिक्थसमन्विता ॥

विलेपी बहुसिक्था स्याद्यवागूर्विरलद्रवा । अत्र पञ्चगुणे साध्या विलेपी च चतुर्गुणे ॥

चतुर्दशगुणे मण्डो यवागूः षड्गुणेऽम्भसि । स्याद्विलः साधितो यूषस्त्वष्टादशगुणे जले ॥ इति ।

नरः—

...मुद्गलाला न पक्वेन विपाचितः । ...

स्लोरे "इसुसुक्तान्तात्कः" इति कादेशस्तु न भविष्यति। ठस्याभावात्॥ न च स्थानिवद्भावेन ठत्वमलिग्विधित्वात्। "ठस्येकः" इत्यत्र हि स्थान्यादेशयोरकार

---

शब्दरत्नम्।

देशग्रहणासम्बन्ध इति तदाशयः। न भविष्यतीति। स्थानिवत्त्वं विनाऽपीति शेषः। अल्विधित्वादिति। "ठस्येक" इत्यत्र स्थानिनि प्रत्ययेषु च सर्वत्राकारो न विवक्षितः। आदेश एव तु विवक्षितः। अन्यथा निषादकर्षूशब्दात् "ओर्देशे" इति ठञि व्यञ्जनमात्रस्य व्यञ्जनरूपकादेशे कशब्दस्य लाक्षणिकत्वात् "केऽणः" इति ह्रस्वानापत्तिरिति भावः। स्थान्यादेशयोरिति। इकादेशस्थानिभूतप्रत्यये आदेशविधायके सूत्रे चेत्यर्थः। स्पष्ट

भैरवी।

यथाश्रुतेऽपि निषेधाप्राप्तेः, हलन्तेभ्य आचारक्विपोऽनभिधानाच्च। स्थानिवत्त्वमिति। "अचः परस्मिन्" इति स्थानिवत्त्वमित्यर्थः।

"ठस्येकः" इत्यत्राकारान्तस्य ठेत्यस्य स्थानित्वेनाश्रयणमिति कथमल्विधित्वमत आह- ठस्येक इत्यत्रेति। प्रत्ययेषु—ठकारादिप्रत्ययेषु। एतेन ठचो व्यावृत्तिः। अन्यथेति। मूलोक्तरीत्या स्थान्यादेशयोरेव तस्याविवक्षायाम्। लाक्षणिकत्वादिति। स्थानिबोधकं पदमन्यथेति, तत्र व्यञ्जनमात्रस्य विवक्षितत्वे तस्य स्थाने ककाररूपव्यञ्जनादेशे पूर्वकालस्थिताकारान्तस्य कशब्दस्य लक्षणयाऽनुसन्धानप्रयोज्यप्रतिपत्तिकत्वरूपत्वादित्यर्थः। अत्र ह्रस्वत्वस्य प्रवृत्तौ "अव्ययात्त्यप्"सूत्रस्थभाष्यमेव मानम्। तत्र हि निषादकर्षूर्नाम देशः नैषादकर्षुकः, दाक्षिकर्षुक इत्युक्तं, दाक्षिकर्षूर्नाम वाहीकग्राम, "तत्र भवः" इति ठञ् "इसुसुक्तान्तात् कः" "केऽणः" इति ह्रस्वः। उक्तकल्पनायामपि मूलं नासमञ्जसमित्याह—इकादेशस्थानिभूतेति। स्पष्टमिति। तत्र हि ठस्येत्यत्र वर्णस्य ग्रहणं सङ्घातस्य वेति विचारे प्रथमपक्षे धात्वन्तस्य प्रतिषेधो वक्तव्यः—पठति, पठितुम्। अस्तु तर्हि सङ्घातग्रहणम्। सङ्घातग्रहणे हेतुणादिमाथितिकानाम्प्रतिषेधो वक्तव्यः। उणादीनान्तावत्—कण्ठः, शण्ड इति। इह च मथितम्पण्यमस्य माथि-

भावप्रकाश।

सति दरणादौ विशिष्टस्याग्रहणादाह—प्रायेणेति। बलत्वर्थे। स्थानिवत्त्वमिति। अल्लोपस्येति भावः। वक्ष्यमाणयथाश्रुतमूलासङ्गतेराह—ठस्येक इति। लाघवं आसक्तिक्रमाह—प्रत्ययेषु च सर्वत्रेति। प्रत्ययविधायक"कलाठ्ठन्" इत्यादिष्वित्यर्थः। एतेनादेशेऽप्यकारोऽविवक्षित इत्यपास्तम्। बहुषु प्रयोगेषु तस्य फलानपेक्षयाऽऽदेशयोरेव तत्कल्पने लाघवात्, तदाह—आदेश इति। जातावेकवचनं, तयोरित्यर्थः। तेनोत्तरग्रन्थसङ्गतिः। एतेन यद्यकादेशेऽकारो विवक्षितः, तेन व्यञ्जनमात्रस्य कादेशे ठाकारेण सह "अतो गुणे" इति पररूपमित्यादि मान्योक्तिः प्राच मनुरोधेन ते ध्वनितम्। यत्तु प्रत्ययेऽविवक्षायां "ठस्येक" इत्यत्रापि मा भिद्धेति चासङ्गतिः पुनरुक्तिश्चैवमग्रेऽपीति मन्दः तन्न, तत्र सत्त्वेऽपि सूत्रेऽन्यग्रहणनिरासाय तयोक्तेरिति दिक्। अन्यथा—नावत्मनादृत्य मूलोक्तरीत्यङ्गीकारे। यत्तु मन्दः—"केऽणः" इत्यत्राप्यस्योच्चारणार्थत्व मति। तन्न, राका पाक इत्यादावतिप्रसङ्गापत्तेः। वर्णपक्षेऽङ्गस्येत्यनेन वारयितुमशक्यत्वात्। स्वरास्या क्रमेण लक्षणया मूलं योजयति—इकेति। जातावेकवचनम्। अत्रार्थे मानमाह—स्पष्टमिति। एतेन "ओर्देशे ठञ्" "इसुसुक्तान्तात्कः" इत्यादौ अकारे फलाभावात् टीकोक्तरीतिर्न [illegible] "ठस्येकः" इत्यादौ कण्ठादिव्यावृत्तये स्वरित सगार्थं साफल्यादिति मन्दोक्तमपास्तम्। भाष्यादिविरोधात् तेषाम-

सरला।

इकादेशस्थानिभूतप्रत्यये इति। ठक्ठञादिप्रत्ययेऽकारस्य "उपदेशेऽजनुनासिक इत्" इतीत्संज्ञया तल्लोपे ठकारमात्रस्यवाऽऽदेश इति भावः। तदाह—आदेशविधायके सूत्रे चेत्यर्थ इति। "ठस्येकः" इति सूत्रे ठपदेऽकार उच्चारणार्थोऽविवक्षित इति यावत्। तेन ठकारस्य 'इक' आदेशो भवतीति सूत्रार्थः। इकादेशेऽकारस्तु विवक्षितः। अनेकप्रत्ययेषु ठक्ठञादिष्वकाराविवक्षापेक्षयाऽऽदेशमात्रेऽ

ारणार्थः । अपीपचन्नित्यपि णिलोपस्य चङन्त्यकार्योरेकादेशस्य च स्थानि-
त्वं विनाऽपि सिद्धम् । विदिसाहचर्यादभ्यस्तादपि लङ एव झेर्जुस्विधानात् ।
च सिचा साहचर्याद् लुङ एव किं न स्यादिति वाच्यम् । पूर्वसाहचर्यात्परसा-
हचर्यस्य बलीयस्त्वादिति दिक् ।

---

शब्दरत्नम् ।

र्वं "ठस्येक." इत्यत्र भाष्यकैयटयोः । इदमुपलक्षणम् । सन्निपातपरिभाषयाऽपि कादेश-
वारणं बोध्यम् । स्पष्टं चेदं "ठक्छसोश्च" इति वार्त्तिकभाष्ये । बलीयस्त्वादिति । एत
च "यस्य विभाषा" "वित्तो भोग—" इति सूत्रस्थकैयटे स्पष्टम् । एतत्सर्वम् "अपरवि-

भैरवी ।

तिक इति, अकारलोपे कृते तान्तादिति कादेश प्राप्नोति । वर्णग्रहणे पुनः सति अल्विधिर-
यम्भवति । तस्माद्विशिष्टग्रहणम् । तस्माद्विशिष्टस्य ठकारस्य ग्रहणङ्कर्त्तव्यम् । तस्माद्विशि-
ष्टस्येति तद्धितस्य ठादेरिति कर्त्तव्यम् । एवञ्च ठादेरिति वचनादल्विधित्वात्स्थानिवद्भावा-
भावात्कादेशप्रसङ्गः । अस्तु तावद्वर्णग्रहणम् । ननु चोक्तण्टादेशे वर्णग्रहणञ्चेद्धास्वन्तप्रतिषेध
इति । नैष दोषः । अङ्गादिति वर्तते । अर्थवशाद्विभक्तिविपरिणाम इति कैयटः । एतेन वर्णमा-
त्रस्य स्थानित्वमिति प्रतिपादितम् । इदमिति । अल्विधित्वेन समाधानमित्यर्थः । सन्निपा-
तेति । अजादिसन्निपातेन जातस्य तान्तत्वस्य तद्विघातकादेशम्प्रत्यनिमित्तत्वमिति भावः ।
एतच्च–परसाहचर्यस्य बलीयस्त्वञ्च । कैयटे स्पष्टमपि । तत्रस्थभाष्ये भगवता–"बहव इमे विदयः
पठ्यन्ते, तत्र न ज्ञायते कस्य नित्यमत्वम् , कस्य विभाषा, कस्य इट्" इति प्रश्ने—

"वेत्तेस्तु विदितो निष्ठा विद्यते विन्न इष्यते ।
विन्तेर्विन्नश्च वित्तश्च वित्तो भोगेषु विन्दतेः ॥" इत्युक्तम् ।

एतेन 'विद सत्तायाम्' इत्यस्मान्नत्वम् , 'विद विचारणे' इति धातोर्निष्ठायान्नत्वविक-
ल्पः, श्नन्दिना परेण साहचर्यात् । यद्यपि "नुदविद"इति सूत्रे नुदधातुस्तौदादिक आदौ पठि-
तस्तथाऽपि शब्दपरविप्रतिषेधादुन्दिरत्र व्यवस्थाहेतुर्न तु नुदिरिति कैयटः । 'विदॢ लाभे' इ-
त्यस्मात्तु प्रतिषेधो भोगप्रत्यययोः, 'विद ज्ञाने' इत्यस्मात्तु इटा व्यवधानान्नत्वाभावः । यस्तु
तुदादौ पठ्यते तस्मात् "विभाषा गमहनविदविशाम्" इति क्वसुप्रत्यये इड्विकल्पात् "यस्य
विभाषा"इतीण्निषेधः विभाषेति सूत्रे हनसाहचर्यादादादिकस्य तु न ग्रहणम्पूर्वसाहचर्यात्प-
रसाहचर्यस्य बलवत्त्वादिति भावः । ननु "विप्रतिषेधे परङ्कार्यम्" इति सूत्रे कार्यशब्दोपादा-
नेनाप्राप्तस्यापूर्वस्य विधेयस्य ग्रहणमिति परसाहचर्यस्य बलवत्त्वाश्रयणमशक्यमत आह–एत-

भावप्रकाश ।

त्स्युत्पन्नत्वाच्च । त्वदुक्तरीत्या ठस्येत्यत्रापि विवक्षापत्त्या मूलानुसाराच्चेति दिक् । ननु तत्र भाष्ये संघात-
ग्रहणपक्षोऽपि वर्णग्रहणपक्षवदस्ति । अल्विधित्वेनैव पञ्चमोऽसमासेन सिद्धेरित्युक्तस्तलक्ष प्रत्याख्यानमत
आह–इदमुपेति । अजादिसन्निपातेन जातान्तता कथमजादिविघात कुर्यादिति भावः । "कुल्मेजन्न."
इत्यत्रोक्तफलानामुदाहरणत्वात्कथमत्र प्राप्तिरिति शङ्कानिरासायाह–स्पष्टं चेदमिति । उक्तपक्षभेदेनोक्तसमा
धिद्वयमित्यर्थः । तत्र हि इसे कृते "भस्याढे" इत्येव सिद्धे ठक् न कार्यं इत्याशङ्क्य माथितिकादिवत् कादेशो
स्यादित्युक्तम् । वर्णपक्षेऽल्विधित्वादस्थानिवत्त्वात्, संघातपक्षे सन्निपातपरिभाषया नेति कैयटः । एतेन
मथितमाचष्टे मथित् तत्पण्यमस्येति भ्रान्त्योक्त, मथितयतेः क्विपि मथित् तेन चरतीत्यर्थे ठकि तद्रूपासिद्धिरि-
ति रत्नाकरोक्तं चापास्तम् । मथित पण्यमस्य माथितिक इत्यकारलोपे कृते तान्तादिति कादेशो नेति भाष्य-

शब्दरत्नम्।

धाविति तु वक्तव्यम्" इति वार्त्तिकस्थकैयटानुरोधेन । दिगिति । दिगर्थस्तु एतदर्थं पञ्चमीसमासस्यावश्यकत्वम् । तथा हि परसाहचर्यस्य बलवत्त्वे मानाभावः । विप्रतिषेधसूत्रे कार्यशब्देन शास्त्रीयस्यैव ग्रहीतुमौचित्येनात्र तदप्राप्तेः ।

"नित्यः परयणादेशः परत्वासौ व्यवस्थया ।
युगपत्सम्भवो नास्ति बहिरङ्गेण सिध्यति ॥"

इति "अचः परस्मिन्" इति सूत्रस्थभाष्योक्तरीत्या पूर्वसाहचर्यस्यान्तरङ्गत्वेन तस्यैव ग्रहीतुमौचित्याच्च । "विभाषा गमहनविदविशाम्" इत्यत्र लुग्विकरणपरिभाषाऽ-

भैरवी।

सर्वमिति । अनुरोधेनेति । अयम्भावः—तेन हि पूर्वविधाविति न्यासस्तत्र य आयन्धिन्वन्तीत्यादिप्रयोगास्तस्यानिर्वाह इति मनसि निधाय महावार्त्तिकप्रवृत्तम् "अपरविधाविति तु" इति, तस्य युक्तत्वमित्याशयेन तादृशन्यासान्तरे निमित्तापेक्षया परत्वाश्रयेण येभिरित्यादिसिद्धिरुक्ता, न तु पूर्वविधाविति न्यासेनैव तेषां सिद्धिरित्यभिहितन्तत्रोत्यति । वस्तुतस्तु पूर्वविधाविति न्यासेनैव सर्वेष्टसिद्धिर्भवति, पञ्चमीसमासस्य वक्ष्यमाणप्रयोजनानुरोधेनावश्यकत्वात् ।

यद्यप्यस्मिन् पक्षे ह गौरित्यत्र स्थानिवद्भावेन "एङ्ह्रस्वात्" इति लोपः प्राप्नोति, तथाऽपि पञ्चमीसमासमाश्रित्य यः स्थानिवद्भावस्तस्यानिष्टत्वेन "एङ्ह्रस्वात्" इति सूत्रे एङ्ग्रहणसामर्थ्याद्वा तत्र स्थानिवत्त्वाप्राप्त्या दोषः परिहर्तुं शक्य इत्याशयेन दिगर्थमाह—दिगर्थ इति । एतदर्थम्-अपीपचन्नित्यादिरूपसिद्ध्यर्थम् । शास्त्रीयस्यैव-शास्त्रविधेयस्यैव । अत्र-साहचर्यविषये । तदप्राप्तेरिति । विप्रतिषेधशास्त्राप्राप्तेरित्यर्थः । सामान्यतः परत्वाश्रयणेऽपि न विप्रतिषेधशास्त्रस्य प्राप्तिरित्याशयेनाह-नित्यः परेत्यादि । भाष्योक्तरीत्येति । पट्व्या मृद्व्येत्यादौ "अचः परस्मिन्" इति सूत्रारम्भाभावेऽपि सिद्धिर्यथोक्ता तद्रीत्येत्यर्थः । अन्तरङ्गत्वं पूर्वोपस्थितत्वरूपमात्रान्तरङ्गत्वम् । नन्वेवं सति "विभाषा गम"इतिसूत्रविषये परसाहचर्याश्रयणपरभाष्यविरोध इत्यत आह-विभाषेति । तथा च लुग्विकरणपरिभाषाऽनुरोध एव तत्र परसाहचर्याश्रयणबीजं न [illegible] तस्य बलीयस्त्वेनेति भावः । ननु यदि पूर्वसाहचर्यस्यान्तरङ्गत्वन्तदा

भावप्रकाशः।

त्यर्थः । "विभाषागमहन"इत्यत्र हन्तिसाहचर्याद्विदेर्न ग्रहणं किन्तु लौकिकविधिसाहचर्यात्स्यैव लाभार्थस्य उक्तहेतोरित्याशयः "नुदविदोन्द"इत्यत्र तौदादिकनुदिना साहचर्यं न, किन्तु रौधादिकोन्दिनेत्युक्तेरित्यन्त्ये उक्तमित्यर्थः । अनाश्रितसूत्रेनेन सिद्धान्तं वक्तुमाह—एतत्सर्वमिति । पञ्चमीसमासस्य इत्यप्रकारत्वं सर्वमित्यर्थः । नन्वपरविधाविति उक्ते स्थान्यादेशान्यतरापेक्षयाऽपरत्वे कथं येभिरित्यादिसिद्धः ? उच्यते, यस्य स्थानिवत्त्वं तन्निमित्तापेक्षयाऽपरत्वविधानादत्र दोष इति कैयटः । पञ्चमीसमासत्वे त्वेवं न वदेदिति भावः । एतदर्थम्-अपीपचन्नित्येतदर्थम् । तथा हीति पाठः । अन्तरङ्गत्वेनेति । एतेन परत्वसाधिविभाष्यविरोधाच्चिन्त्यमिदमिति मनोरमोक्तमपास्तम् । तस्य पूर्वपक्षत्वात् तत्र शब्दपरविप्रतिषेधेऽपि परसाहचर्याभावाच्च । नन्वेवमप्युक्तसूत्रस्थकैयटविरोधोऽत आह-विभाषेत्यादि । अनित्यत्वादिति शेषः । तन्मूलकेन

सरला

कारविवक्षणे लोपप्राप्त्येति [illegible] मूलासङ्गतिरिति भावः । सूत्रस्थभाष्योक्तरीत्येति । 'पट्व्या' 'मृद्व्या' इत्यत्र 'पटु ई आ' 'मृदु ई आ' इत्यवस्थायां पूर्वोपस्थितनिमित्तकत्वेन पूर्वयणादेशस्यान्तरङ्गतया प्रवृत्तिरिति भाष्यकृता पूर्वोपस्थितनिमित्तकत्वरूपमन्तरङ्गत्वं स्वीकृतम् । तथा च पूर्वसाहचर्यस्यापि पूर्वमुपस्थितत्वादन्तरङ्गत्वेन परसाहचर्यापेक्षया प्राबल्यमिति भावः ।

शब्दरत्नम् ।

तुभङ्गाय परसाहचर्याश्रयणं "लुङ्विदोर्नाम्न्य" इत्यत्राप्यन्ताङ्गपरिभाषानित्यत्वाश्रयाख्यानेन परसाहचर्याश्रयणमिति बोध्यम् । प्रत्यैषिषन्नित्यादौ अङि "उभे अभ्यस्तम्" इति सूत्रस्थभाष्यसम्मते एवमपि दोषाच्च । पूर्वोत्तरसाहचर्येण भावरूपादेशानपहृतविकरणकाभ्यस्तस्यैव ग्रहणमित्यप्यतिक्लिष्टं, अतो वर पञ्चमीसमास एव । "अपरविधाविति तु वक्तव्यम्" इति न्यासान्तरेऽपि पञ्चमीसमासो वक्तुं शक्यः । न्यासान्तरन्तु स्वविधेरपि

भैरवी ।

"लुङ्विदः" इतिसूत्रविषये कथम्भवन्मते लक्ष्यसिद्धिरत आह—लुङेति । परिभाषा पूर्वोपस्थितविषये प्रवर्तते या 'बहिरङ्गान्तरङ्गयोरन्तरङ्गम्बलीयः' इत्येषा परिभाषा सा । अनित्यत्वादिति । "ओमाङोश्च" इतिसूत्रस्थाङ्ग्रहणादित्यादिः । व्याख्यानेन—पूर्वोक्ताकरसम्मतव्याख्यानेन । प्रत्यैषिषन्निति । अत्र प्रतिपूर्वकात् प्रश्लिष्टकारात्मकाद् धातोः सन् तदन्ताल्लुङ् । एवमपि—परसाहचर्यस्य बलवत्त्वाश्रयणेऽपि । ननु परसाहचर्यस्य बलवत्त्वानाश्रयणेऽपि प्रत्यैषिषन्नित्यादेः पञ्चमीसमासानाश्रयणेनापि विलक्षणार्थग्रहणेन सिद्धिर्भविष्यतीत्यत आह—पूर्वोत्तरेति । भावरूपादेशानपहृतविकरणकेति । अत्र हि पररूपेण विकरणस्य चलोऽपहारसत्त्वात्सूत्रविहितस्य जुस्भावस्य प्रवृत्तिर्न भविष्यतीति भावः । अतिक्लिष्टमिति । उभयसाहचर्यस्याश्रयणापूर्वार्थाश्रयणप्रयुक्तगौरवेणातिक्लेशकरमित्यर्थः । यत्तु मूले परसाहचर्याश्रयणस्य बलवत्त्वमाश्रित्यापादितस्य सिद्धाऽऽश्रयणं न्यूनं, यत उक्तरीत्या जुस्त्वारणेऽपि "अनभ्यस्तात्" इत्यनुवृत्त्या वारणादिति । तन्न, सत्त्वाभावेन तदप्राप्तेः । स्थानिवद्भावेन तु तल्लाभ्यमस्तिविधित्वात् । जुसादेशविषयेऽस्थेर्न वक्तुमशक्यत्वम्, झेरिति समुदायाश्रयणात् । ननु यत्राऽपरविधाविति न्यासान्तरस्तत्र परस्य विधौ स्थानिवद्भावस्य निषेधो भविष्यतीति तत्राऽपि नित्यस्य परसाहचर्यस्य बलवत्त्वाश्रयैव सिद्धिर्भवताऽपि वक्तव्येत्यत आह—अपरविधाविति । परस्माद्विधिरिति पञ्चमीसमासस्तत्राऽपि वक्तुं शक्य इत्यर्थः । न्यासान्तरम्—अपरविधाविति न्यासान्तरम् । स्वविधेरपीति । तेन आयन्नाससन्नित्यस्य सिद्धिः । वस्तुतस्तु ल्लसानुपूर्वीकेन "अचः

श्नान्तस्य सिद्धः । ननु यदि पञ्चमीसमास आश्रीयते तदा विगणय्येत्यादावतिप्रसङ्ग इत्यत भावप्रकाशः ।

व्याख्यानेन व्याख्यानत इति परिभाषयेत्यर्थः । एतेन तयोस्तत्त्वाकाराद्दिद् चिन्त्यमिति मनोरमापास्तम् । ननु व्याख्यानादिना तत्रैवेहापि तदाश्रयणमस्त्वत आह—प्रत्यपीति । इतः सनि रूपम् । भाष्येति । "सप्रकृति कार्यम् । न कार्यम् । उभेऽद् तदर्थकम् । संज्ञिनिर्देशो द्वे इत्यनुवृत्त्या सिद्धः । इद तर्हि फलं द्वयोः श्रवणे एव सञ्ज्ञा । इह माभूत्—ऐर्सन्, ऐप्सन् । अन्यथैकादेशे कृते शब्दनकारयोरभ्यस्तानन्तरत्वाज्जुस्स्यात् । ननु तर्हि स्थानिवद्भावाद् व्यवधानम् । पूर्वस्य विधौ सः नायं तथा । पूर्वस्मादपि विधि पूर्वविधिरिस्युभेपद स्थर्थ सार्थकम्" इति तदाकम् । तेनोभे यत्र श्रूयेते इत्यर्थेन तदाऽप्रत्यैषिषन्निति सिद्धये भावकेन पञ्चमीसमासेन तत्सिद्धावुभेग्रह सार्थमिति तद्भावः । एवमपीति । परसाहचर्याश्रयणेनेत्यर्थः । अत एव तद्भाष्येऽोपात्तम् । नन्वपास्यन् प्रत्यैषिषन्नित्यादौ च तदभावेऽपि न दोषो वक्ष्यमाणयुक्तेरत आह—पूर्वोत्तरेति । क्लिष्टमिति । दुरूहत्वादति भावः । ततः—उक्तविवक्षातः । एतेन तादृशसाहचर्यस्य दर्शयतां

वाभादित्यादीनामन्न न्यासेऽपिदेव तत्र विवक्षाऽभ्यस्यात्प्रत्ययाकारोऽत्र आह—अपरेति । तस्य इति । एव च तस्तदह इति भावः । नन्वेव न्यासान्तरप्रवृत्तिर्विवादाऽत आह—न्यासान्तेति । स्वशब्देन स्थानी

पूर्वत्रासिद्धे नेति । एतच्च न्यायसिद्धमित्यवोचाम । त्रिपाद्या असिद्धत्वेन तत्रत्ये कार्ये कर्तव्ये "अचः परस्मिन्" इत्यतिदेशस्याप्रवृत्तेः । तस्येति । तस्य-'पूर्वत्रासिद्धे'इत्यस्य । तथा च स्थलत्रये स्थानिवद्भावो वक्तव्य इत्यर्थः । संयोगादिलोपे चक्रयत्र । लत्वे निगाल्यते । णत्वे माषवपनी । इह "यस्येति च" इति अल्लोपस्य स्थानिवत्त्वेन नकारस्य प्रातिपदिकान्तत्वाभावाद् णत्वं न ।

यत्त्वाहुः-कथंचित्स्थानिवत्त्वाभावेऽपि यूष्ण इत्यादौ "रषाभ्याम्"

शब्दरत्नम् ।

सद्भावायेति स्पष्टमेव । अतिप्रसङ्गस्त्वनित्यत्वेन परिहरणीय इति ।

चक्रयत्रेति । वक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि लोपाभावोऽपि फलम् । निगाल्यते

भैरवी ।

आह—अतिप्रसङ्ग इति ।

चक्रयत्रेत्यस्य यणन्तसंयोगाद्यो. स्कोर्लोपो नेत्यर्थो "यण. प्रतिषेधो वाच्य." इति वार्तिकस्य क्रियते चेत्सिद्धिर्भविष्यतीत्यतः असाधारणप्रयोजनमाह-वक्षीति । निगाल्यत

भावप्रकाश ।

आदेशश्च । अपिना पूर्वपरयोः समुच्चय. । अत्रत्यप्रागुक्त कैयटस्त्वयुक्त एव । एतन्न्यासखण्डनायाग्रे भगवता निमित्तस्यावधितया वक्ष्यमाणतया तदनाश्रयेणैतद्भाष्यप्रवृत्तेः । अत एव त्युम्यामरुचिः सूचिता । एतदेस्युक्तिरियम् । असिद्धवदत्राभादिति सिद्धानामायत्र दीर्घा फलत्वेनोक्तेरिति स्पष्टमुद्द्योते । एतेनायधादौ स्वविधावादायर्षमपरेति वार्तिके पञ्चमीसमासासम्भवाद्भाष्यविरोध न्यासान्तरेऽपाति चिन्त्यम् । न हि यथान्यासं संस्थाप्य द्वितीय तत्राय मित्युक्तं भगवतेति मन्दोक्तमपास्तम् । नन्वेवमपि प्रगण्य्येत्यादावल्लोपस्य स्थानिवत्त्वाद्य् न स्यात् । वचनसामर्थ्यात्तथा व्यवधाने प्रवृत्तिरिति तु न, प्रशमय्येत्यादौ साफल्यात् । [illegible] च हे गौरित्यत्र वृद्धे. स्थानिवत्त्वात्सम्बुद्धिलोपापत्तिः । पूर्वस्मान्निमित्तत्वेनाश्रितादिति कैयटोक्तव्याख्याने तु न मानमित्युक्त प्राक्, उद्द्योते स्पष्टत्वात आह-अतिप्रेति । अनित्यत्वे ज्ञापक तु "निष्ठायां सेटि" इति सेड्ग्रहणं प्रगण्य्येति भाष्योदाहरणं चेति स्फुटीभविष्यति टीकायाम् । एतेन-एतेन कुदन्ते विगणय्येत्यत्राथवा पञ्चमीसमासत्यत्यजनमित्यादिमूलोक्तमपास्तम् । तस्मात्तस्य पाक्षिकत्वासम्भवान्मदुक्तैव मूलयोजना सम्यक् । न च तदनित्यत्वाभिप्रायेण मूल सुयोजम् । अनित्यत्वोक्तेरत्रानुपयोगाद्वीररामन्यायाद्यतेश्चेति रत्नाकरोक्त प्रगणय्येत्यादौ दोषात्स माऽस्त्विति मन्दोक्तं चापास्तमिति दिक् । ननु हल्ङ्याद्यनुवृत्त्या हलन्तसंयोगस्यैव ग्रहणात्र चक्रयत्रेत्यत्र दोषोऽत आह-वक्षीति । कौस्तुभरीत्येदम् । अपिरजारथायाम् । तद्बीजं तु हलो लोपः संयोगान्तलोप इति भाष्येण तत्सम्बन्धबोधनमिति । बहिरङ्गासिद्धत्वं [illegible] वक्ष्यमाणरीत्या नेति भाव. । निगालो-

सरला ।

अतिप्रसङ्ग इति । 'प्रविगणय्य' इत्यत्रातिप्रसङ्ग इत्यर्थं । तथा हि, प्रविपूर्वक 'गण संख्याने' ण्यतो णिचि "अतो लोप." इत्यल्लोपे ततः क्त्वाप्रत्यये ल्यबादेशे च "ल्यपि लघुपूर्वात्" इति सूत्रेण णेरयादेशे तत्सिध्यति । पञ्चमीसमासस्य नित्यत्वे तत्राल्लोपस्य स्थानिभूतादकारात्पूर्वत्वेन दृष्टाणकारात्परस्य णेरयादेशे कर्तव्ये स्थानिवद्भावप्रवृत्तौ अयादेशाप्राप्त्या तदसिद्धिप्रसङ्ग इति । पञ्चमीसमासस्यानित्यत्वे प्रमाणं तु 'प्रविगणय्य' इति भाष्योदाहरणमेव । तेन 'हे गौ.' इत्यत्र वृद्धेः स्थानिवत्त्वात्र सम्बुद्धिलोप । अनित्यत्वाभावे तु वृद्धेः स्थानिभूतादोकारात्पूर्वत्वेन दृष्टाद् गकारात्परस्याः सम्बुद्धे. "एङ. पदान्तादति" इति लोप स्यादिति फलं बोध्यम् । केचित्तु पूर्वस्मादव्यवहितपरस्यैव कार्ये स्थानिवत्त्व, 'हे गौ.' इत्यत्र चौकारव्यवधानान्न दोष इति न फलं, 'प्रविगणय्य' इत्यादौ तु स्थानिवद्भावलब्धाकारस्यैव व्यपदेशिवद्भावेन लघुपूर्वत्वमादाय न दोष इति नापि मानमित्याहु. । वस्तुतस्तु व्यपदेशिवद्भावस्य "एकस्मिन्" इत्युक्त्या असद्भावे एव प्रवृत्तिस्वीकारेण 'प्रविगणय्य' इत्यत्र व्यपदेशिवद्भावाप्रवृत्तौ अल्लोपस्य पूर्वोक्तरीत्या स्थानिवद्भावे णेरयादेशानापत्त्या भाष्योक्तस्य 'प्रविगणय्य' इति रूपस्यासिद्ध्या तत्तदनित्यत्वे प्रमाणमेवेति बोध्यम् ।

इत्यस्य नोपयोगः, ष्टुत्वेन सिद्धेः । तथा च पग्रहणमुत्तरार्थमिति आकरे स्थि-

### शब्दरत्नम् ।

इति । न चात्र णिलोपात्पूर्वं णत्वम् । समानाश्रयाभावादेत्र प्रवृत्तियोग्यतया तदप्रवृत्तेः । न च स्थानिवत्त्वमचिविधित्वात् । प्रत्ययलक्षणं तु नियमार्थं मतिं भावः । अत्र बहिरङ्गासिद्धत्वं न नाजानन्तर्य इति वक्ष्यमाणपरिभाषया त्रिपाद्यां तदप्रवृत्तेश्च विसर्जनीयसूत्रस्थभाष्यसम्मतत्वाच्चेत्यन्यत्र प्रपञ्चितम् । एवं च प्लायत इत्यत्रायतावित्यस्योपसर्गविशेषणत्वे फलम् । मापवपनीति । इह ण्वुल्युत्पत्तेः प्राक् समासे कृतेऽपि अलुक्यपि समासलक्षणप्रातिपदिकान्तत्वाण्णत्वं प्राप्तम् । पूर्वपदाक्षिप्तसमासरूपप्रातिपदिकान्तस्य तेन णत्वविधानात्तस्यापि पूर्वपरोभयसापेक्षत्वेन समासत्वज्ञानसापेक्षत्वेन च समत्वात् त्रिपादीस्थत्वाच्च बहिरङ्गासिद्धत्वाशङ्का नात्रेति बोध्यम् ।

### भैरवी ।

इत्यत्रान्तरङ्गत्वाण्णिलोपात्प्राग्लकारादेशेन सिद्धिर्भविष्यतीत्याशङ्कां निराकर्तुं—न चेत्यादिना । प्रवृत्तियोग्यतयेति । समानाश्रयाभावात्कार्यप्रवृत्तियोग्ये विषये त्रैपादिकशास्त्रं प्रवर्तते इत्यर्थस्तस्थावित्यादिसिद्ध्यर्थमवश्यं वाच्योऽन्यथा ष्टुत्वस्य पूर्वम्प्रवृत्तौ ततो द्विर्वचनेऽभ्यासे टकारस्य श्रवणापत्तिः, एवमन्यत्रापि बोध्यम् । स्थानिवत्त्वमिति । प्रथमसूत्रेण स्थानिवत्त्वमित्यर्थः । विशेषणत्वे इति । एतच्च प्लायत इत्यस्य सिद्ध्यर्थमावश्यकम् । न चार्थैकदेशविकृतस्यानन्यत्वेनोपसर्गत्वम्परादिवद्भावेन चाकारादावयवित्वमिति स्थानिवद्भावं विनाऽपि लत्वम्भविष्यतीति वाच्यम् ? अर्थविकारस्य सत्त्वादुपसर्गत्वस्याकारिमाणनिष्ठत्वात् । ननु मापवपनीत्यत्र मापाणां वपनीति समासे समासरूपं यत् प्रातिपदिकन्तदन्तो न नकार इति णत्वस्य प्राप्तिरेव नेति कथम्मापवपनीति णत्वोदाहरणमत आह—स्येति । प्राक्समास इति । करणल्युडन्तवपनशब्देस्येत्यादिः । गतिकारकोपपदानाङ् कृद्भिः सह समासस्य सुबुत्पत्तेः प्रागुत्पत्तेः प्राक् प्रवृत्तेरिति भावः । नन्वन्तरङ्गणत्वापेक्षया बहिर्भूतप्रत्ययापेक्षाल्लोपस्यासिद्धतया णत्वन्न भविष्यतीत्यत आह—नस्यापीति । णत्वस्यापीत्यर्थः । श्रवणापेक्षत्वेन चेति । प्राचामनुरोधेनेदम् । स्वसिद्धान्तरीत्याऽऽह—त्रिपादीस्थत्वेति । मूले—कथञ्चिदिति । पूर्वस्माद्विधौ स्थानिवद्भावस्यानित्यत्वादप्रवृत्तिस्वीकारादिति भावः ।

### भावप्रकाश ।

पादिति । तल्लोपजनकणिघटनादेरित्यर्थः । तदानीं तस्यैवोपस्थितनिमित्ततया प्राप्तेरिति भावः । कार्यस्य प्रवृत्तौति । तत्रापि "पूर्वत्रासिद्धम्" इति प्राप्तेरिति भावः । स्थानिवत्त्वमिति । "स्थानिवदादेशः" इत्यस्य प्रवृत्तिरित्यर्थः । नियमार्थमिति । भाष्यसिद्धान्तरीत्येदं, वार्त्तिकमतेऽपि विशेषणतयाऽऽश्रयणे एव विध्यर्थत्वेनादोषात् । अत्रेति । लत्वे कार्ये णिलोपस्येति भावः । मूले—यथा अ इ—नाजेति । भाष्यरीत्याऽऽह—त्रिपाद्यामिति । अन्यत्र—उद्द्योतादौ । प्रतिपादितश्चैतत्सन्धिप्रकरणे । ननु युगपद्द्वयोः प्राप्तौ "पूर्वत्रासिद्धम्" इत्यस्य नियामकत्वेऽपि तद्योग्यतायां तच्चाभावोऽत आह—एवमिति । इत्यपीति । इत्यत्रापि फलमित्यर्थः । मूलमते इत्यत्र आश्रयणेऽन्तरङ्गाद्यभावादिति भावः । उपसर्गेति । धात्वादेर्विशेषणत्वे तु प्लायते निलयते इत्यादौ धुनिकृताव्यवधाने एव स्यादिति पल्ययते इत्यादौ न स्यात् । एतेन तत्पक्षे पादिवत्त्वेनार्थनिपरत्वाद्धेत्फलस्य सिद्धिरिति सूचनायेदमित्यपास्तम् । ननु स्थानिवत्त्वनिषेधेऽपि माषशब्दस्य वपनीशब्देन समासे तदन्तो नो नेति णत्वं न स्यादत आह—इहेति । "गतिकारको" इति

तम् । ततश्च रभसवादेनैतदुपन्यस्तमिति । स एवायं रभसवादः । तथा हि, उत्तरार्थतयाऽपीह पग्रहणं स्थितम् । ततश्च यूष्णः पुष्णाति इत्यादौ "रषाभ्याम्" इति णत्वस्य प्रवृत्तिः केन वार्यताम् ? ष्टुत्वेनेति चेन्न । तस्यासिद्धत्वात् । न च वचनप्रामाण्यात् सिद्धत्वम् । पुष्णिरित्यादौ चरितार्थत्वात् । तस्य पयोगे ण इत्यंशोऽचरितार्थ इति चेन्न । तस्य पृथगनुक्तेः । इह पादरस्येत्युक्तचरितार्थत्वस्यापि तुल्यत्वाच्च । आकरे हि इह पग्रहणं विना लक्ष्यासिद्धिर्नास्ति इत्येवाभिप्रेतं, न तु पुष्णातीत्यादौ 'रषाभ्याम्' इत्यस्याप्रवृत्तिरिति दिक् ।

"नलोपः प्रातिपदिकान्तस्य" । लुप्तषष्ठीक इति । सौत्रत्वान्न तु षष्ठीतत्पुरुषयोः पूर्वपदे, सापेक्षत्वेन समासासम्भवात् प्रातिपदिकस्य पदविशेषणत्वाच्चेति भावः । तदन्तस्येति । षष्ठीतत्पुरुषः । तस्यान्तो यो नकारस्तस्येत्यर्थः । उक्तं च हरदत्तेन—'विशेष्यमन्तस्येति यस्य नेत्येतदविभक्तिकम्, तथैव प्रातिपदिकेत्येतत्पदविशेषणम्' इति । यत्तु प्राचोक्तम्—प्रातिपदिकान्तस्य पदान्तस्य नस्येति । यच्च व्याख्यातम्—अन्तस्येत्युभाभ्यां संबध्यते इति । तदुभयमसत्, अन्तस्येत्यस्यावृत्तिप्रसङ्गाद् व्यधिकरणषष्ठीद्वयापत्तेश्च । यदि तु अभेदेनैव सम्बन्धेन प्रातिपदिकेनेव नेत्यनेनापि पदं विशेष्यते, तदा विशेषणेन तदन्तविधौ सौत्रमन्तग्रहणं शक्यमकर्तुम् ।

---

शब्दरत्नम् ।

अप्रवृत्तिरिति । अभिप्रेतेति शेषः ।

सापेक्षत्वेनेति । 'नलोप' इत्येतद्विषयमिदम् । अन्ये आह—पदविशेषणत्वाच्चेति । व्यधिकरणषष्ठीति । प्रातिपदिकस्य पदस्येत्यनयोः परम्परान्वितयोरन्तेनान्वयादिति भावः । अभेदेनैवेति । सम्बन्धान्तरासत्त्वेऽपि विशेष्यविशेषणभावसम्बन्धेनेत्यर्थः । शक्यमकर्तुमिति । पदस्येत्यस्य क्वचिद्वैयधिकरण्येनान्वयोऽस्य तात्पर्यमात्रमिति भैरवी ।

एतद्—रषाभ्यामिति णत्वमित्येतत् । प्रागुक्तस्याभिप्रेतशब्दस्य नपुंसकत्वादाह—अभिप्रेतेति ।

अन्त्य इति । प्रातिपदिकान्तस्येत्यत्र यत्प्रातिपदिकपदमन्तत्रेत्यर्थः । एतेनैकार्थीभावाभाव सूचित । व्यधिकरणषष्ठीत्वमुपपादयति—प्रातीति । यद्यप्युभयोरपि षष्ठ्योरवयवावयविभावार्थकत्वं तथाऽपि व्यधिकरणप्रातिपदिकप्रकृतिकत्वेन व्यधिकरणत्वं द्रष्टव्यम्, एतदेवाह—परस्परेति । अभेदस्य सम्बन्धत्वमन्यत्र निरस्तमत आह—सम्बन्धान्तरेति ।

भावप्रकाश ।

दीति । तत्र तदप्रवृत्तेरप्रकृतत्वादिति भावः । न त्वित्यस्य पूर्वसाकाङ्क्षत्वादाह—अभीति । एतेनात्र सत्त्वेऽपि प्रयोजनाभावान्न सम्बन्धः । किं तस्मे एवेति चिन्त्यं मूलमिति खण्डनकृदुक्तमपास्तम् । द्वन्द्वासम्भवेन निर्देशासङ्गतेरिति भावः । मूले—तदन्तस्येति षष्ठीति । एतेन सौत्रमन्तग्रहणं न व्यर्थमिति सूचितम् । अनन्वितयोरिति । एतेन विरुद्धविभक्त्यन्तरुद्धानामर्थद्वयस्याभेदान्वयव्युत्पत्तिभङ्ग इति प्रमाशोकदोषस्य शब्दान्तरेण कोडीकारे प्रसादखण्डकतद्ग्रन्थानुवादपूर्णता सूचिता । अभेदस्य तत्त्वस्य खण्डयिष्यमाणत्वादाह—सम्बन्धान्तरेति । अवयवावयविभावादित्यर्थः । 'येन विधि'रित्यस्यानित्यत्वज्ञापनायान्तपदं तेन समानप्रत्ययेऽप्य दिसिद्धमिति कश्चिदिति मान्यास्तत्प्राचामनुरोधेन, भाष्यविरोधात् । एतेन पदस्येत्यस्यावयवषष्ठ्यन्तत्वमेव न स्थानषष्ठ्यन्तत्वमिति

"विभाषा ङिश्योः" । शीति "नपुंसकाच्च" इति विहितो न तु जश्शसोः शिः, तस्मिन् भत्वासम्भवात् । "भस्य" इत्यनेनासर्वनामस्थानस्यैव यजादेराक्षेपात्तदेतदाह—असर्वनामस्थानेति । अत एवेति । दोषणी इति प्रयोगात् । यद्यपि समाहारद्वन्द्वस्य एकशेषे कृतेऽपि भाष्यं सुयोजं, तथाऽपि ककुदित्यस्य पृथक्पदत्वं न्याय्यम् । अन्यथा ककुद एकत्वं दोषो द्वित्वं च न लभ्येत इति भावः ।

---

शब्दरत्नम् ।

इकत्वं भाष्ये उक्तम्; तत्तु उक्त्यानुसारिव्याख्यानादेव ज्ञापकं विनाऽपि सिद्धमित्यभिमानः ।

भत्वासम्भवादिति । सर्वनामस्थानत्वेनेति भावः । समाहारद्वन्द्वस्येति । प्राणयङ्गत्वात्कृतसमाहारद्वन्द्वस्य ककुद्दोःशब्दस्येत्यर्थः । सुयोजम्—दोःशब्दस्य पुंस्त्वेऽपि सुनिर्वाहम् । न्याय्यम् । अल्पाच्तरत्वेन दोःशब्दस्य द्वन्द्वे पूर्वनिपातापत्तेः । किं च तदन्ते आदेशो दुर्लभः, विशेष्यासन्निधानादिति भावः । ककुद एकत्वमिति । प्रकरभैरवी ।

विशेष्यविशेषणभावनियामकसम्बन्धान्तरेत्यर्थः । भाष्ये उक्तमिति । एवञ्च मौत्रमन्तग्रहणं शक्यमकर्तुमित्यलङ्कृतम् । नराभ्यामित्यादौ नलोपस्यावश्यकत्वेनान्तपदस्य चरितार्थत्वात् । न चान्तपदाभावेऽपि नेत्यनेन प्रातिपदिकं विशेष्यताम्, पदस्येति तु व्यधिकरणमस्तु, पदावयवस्य नान्तप्रातिपदिकस्य लोप इत्यर्थोऽस्तु, तावताऽपि नराभ्यामित्यस्य व्याप्तिर्भविष्यतीति वाच्यम् ? लोमभिशयाभ्यामित्यादौ नलोपस्य वारणाय तस्यावश्यकत्वात् । सौत्रान्तपदस्य सत्त्वे तु चरमावयववाचकान्तपदस्यावयविसाकाङ्क्षतया प्रत्यासत्त्या पदस्येत्यस्य सम्बन्धेन पदावयवस्य नान्तप्रातिपदिकस्य पदान्तस्य लोप इत्यर्थेनेष्टसिद्धेः । तदिति । वैयधिकरण्येन सम्बन्धकल्पनन्त्वित्यर्थः । मूले द्विवचनोपपत्तये आह—समाहारेति । न्याय्यत्वमुपपादयति—अल्पेति । पूर्वनिपातप्रकरणस्यानित्यत्वादाह—किञ्चेति । प्रसक्ति-

भावप्रकाशः ।

ज्ञापनार्थमेव तदिति रत्नाकरोक्तमप्यपास्तम् । एवं भनयन्नाह—पदस्येति । तेन वृक्षवन्तावित्यादौ "मादुपः" इति वत्वसिद्धिरन्यथा मतन्तपदस्य मादुपधायाः परस्य मस्य व इत्यर्थेन वृक्षवानित्यत्रैव स्याद् न तु तत्र । मम तु पदावयवस्य मतुप इत्यादिव्याख्यानान्न दोष इति भावः । अभिमान इति । अस्वारुचिबीजं तु तादृशव्याख्यानस्य दुर्ज्ञेयत्व लक्ष्यैकचक्षुष्कताया बाधितत्वमतिप्रसङ्गस्तत्व चेति भाष्योक्तमेव साधिति । समाहारद्वन्द्वस्यान्ततत्पुरुषस्यापि अनन्वयाद् बहुव्रीहिं सूचयितुमाह—प्राण्यङ्गेति । न्याय्यत्वे हेतुमुक्त्वाह—अल्पाजिति । द्वन्द्वे सतीत्यर्थः । तत्प्रकरणस्यानित्यत्वादाह—किञ्चेति । तदन्त इति । भस्य पद इत्यादिः । विशेष्येति । एवेनास्यादेव भाष्याचदन्तेऽपि भवति विहितविशेषणाभावादिति गम्यते । तथा च प्रयोगः—अशिथिलभुजबन्धव्यापृतैकैकदोष्णोरिति प्रकाशोक्तम्, दयोदन्ताः द्विदतः पश्य । न च तदन्तविध्यभावे कथमिदमिति वाच्यम् । "ष्यङः सम्प्रसारणम्" इति सूत्रस्थपूर्वपक्षन्यायेन "सिद्धं त्ववयवानन्यत्वात्" इत्याष्टमिकभाष्यवार्त्तिकन्यायेन वाऽवयवस्य कार्यनाभावात् । अन्यथा शास्तिशीर्ष्णांउपेषीत्यादावगतेः इति कौस्तुभोक्तं चापास्तमुक्तहेतोः । किञ्चाद्ये सम्पूर्णस्यादेशापत्तेः स्थानिनाक्षेपेणैव लाभेन निर्दिश्यमानस्य कस्याप्यभावात् । एतेन ककुद्दोषणी इत्येकं पदमन्यथोक्तप्रकाशाशङ्कनिरिति रत्नाकरोक्तमपास्तम् । अपि चान्ये आवयुक्तेः पूर्वपक्षत्वादेवानादेयत्वात्, आश्रितस्य

सरला ।

ककुद्दोःशब्दस्येति । ककुत् च दोः चानयोः समाहारः ककुद्दोः, समाहारस्य "स नपुंसकम्" इति नपुंसकत्वम्, ततः ककुद्दोः ककुद्दोः अनयोरेकशेषे द्विवचने 'ककुद्दोषणी' इति रूपसिद्ध्या भाष्यं सुयोजमिति भावः ।

कुरूरिति । लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वात्स्वादय । प्राचा तु "अन्तादिवच्च" इति सूत्रमुपन्यस्याऽऽदिवद्भावात्स्वादय इत्युक्तम् । अत्रेदं वक्तव्यम्-पर प्रत्यादिवद्भावो विधीयते । तथा चेहाऽप्रत्यय इति निषेध एव स्यान्न तु स्वादय । यत्तु व्याख्यातु-आदि-ऊङपेक्षया पूर्वं, प्रातिपदिक, तद्भावात्-तदवयवत्वेन ग्रहात् पूर्वान्तवद्भावादिति यावदिति, तदपि क्लिष्ट स्वपरग्रन्थविरुद्धं च । उक्तरीत्या हि काण्डे कुड्ये इत्यादावपि 'एकवचनमुत्सर्गत' इति सु

---

शब्दरत्नम् ।

पारिभाषिकगोत्रस्यैव ग्रहणम् । अवन्तीत्यादौ गोत्रत्वारोपेण जातित्वमिति प्राचीनोक्तमदुष्टमित्यपास्तम् ।

लिङ्गविशिष्टेति । यत्तु लिङ्गबोधकप्रत्ययान्तत्वरूपलिङ्गवैशिष्ट्यस्य प्रातिपदिकत्वस्य च लाभाय पूर्वान्तत्वपरादित्वयोरावश्यकत्वेनोभयत आश्रयणेऽन्तादिवत्त्वाभावाद्ग्रा-

भरवा ।

एव जातिलक्षणपुंवत्त्वस्य प्रतिषेधो न प्राप्नोतीत्यपि विरुध्येत । नन्वेवमवन्तीत्यत्रापत्यप्रत्ययान्ते "वृद्धेत्कोसल" इत्यनेन ञ्यङि तस्य 'स्त्रियामवन्ति' इत्यनेन लुकि "इतो मनुष्यजाते" इति ङीष् इति 'अनुपसर्जनात' इति सूत्रभाष्ये उक्तं, तद्विरुध्येतेत्यत आह-अव तीत्यादाविति । गोत्रत्वारोपेणेति । यथाऽश्वत्थाम्नि द्रौणायनित्वारोपस्तद्वत् । यूनि [illegible] नोक्तम्-प्रकारश्च [illegible] पारिभाषिकस्यैव [illegible] न तु विशिष्यैति तेषाम्पूर्वापरविरोधोऽपि दोष ।

खण्डनकृता लिङ्गविशिष्टपरिभाषयेति मूलोक्तमर्थतोव्याख्याय खण्डितं-तन्न युक्तमित्येतद् बोधयितु तदुक्तमनूद्य दूषयति—यत्त्वित्यादिना । वैपरीत्येनान्वयोऽत्र बोध्य । अयम्भाव-यत्र प्रकृतौ प्रातिपदिकत्वस्य लिङ्गबोधकप्रत्ययान्तत्वस्य च सत्ता, तत्र तादृशसमुदायस्य तया परिभाषया ग्रहणम्बोध्यते । यथा—पक्त्री, दण्डिनीत्यादौ सद्भाव उभयोरस्तीति तस्य समुदायस्य प्रातिपदिकग्रहणेन ग्रहणम्भवति । नात्रेति । कुरूरित्यत्र तथा नास्तीत्यर्थं । अत्र हि पूर्वान्तवद्भाव विना प्रातिपदिकत्वस्य परादिवद्भाव विना लिङ्गबोधकप्रत्ययान्तत्वस्य ■

भावप्रकाश ।

इति युवापत्यस्य जातित्वमुक्तम् । अन्यथा जातिलक्षणङीष एव परत्वादस्तु युक्तस्य पुंवत्त्वप्रतिषेधासिद्धि रेव दोष इत्ययुक्त चेति स्पष्टमेव । एवेन मूलानुक्तव्यावृत्ति । नन्वेवमव ते साक्षादपत्ये 'वृद्धेत्कोसल' इतीदन्तत्वात् ञ्यङि तस्य 'स्त्रियामवन्ति' इति लुकि 'इतो मनुष्य" इति जातिलक्षणे ङीष्य तीति "अनुपसर्जनात्" इति सूत्रभाष्यविरोधोऽत आह-अवन्तीत्यादाविति । अश्वत्थाम्नि द्रौणायनिवत् । यूनि तु न शास्त्रीयगोत्रत्वारोप, तत्र युवैव न गोत्रमिति नियमेन तत्सञ्ज्ञानिषेधात् इति भाव । प्राचीनोक्तम्—प्रकाशकृदुक्तम् । तत्र भाष्यप्रामाण्यात्तदङ्गीकारेऽप्यत्र तत्त्वे मानाभाव इति ■" कृतम् । किञ्चात्र तै साधारण्येन व्याख्यात तत्र च तथोक्तमिति पूर्वापरविरोधोऽपि तेषामनुसन्धेय । "कौरव्य' इति सूत्रस्थग्रन्थविरोधस्तु खण्डनकृदुक्तो न युक्त, तत्र टाप्ङीषोरिति पाठादिति दिक् ।

खण्डनकृदुक्तिं खण्डयति । यत्त्विति । व्युत्क्रमेण यथासंख्यमत्र बोध्यम् । तया तादृशप्रत्ययान्तत्वस्य प्रातिपदिकत्वस्य च यत्र प्रकृतौ सत्ता तद्विशिष्टस्य प्रातिपदिकग्रहणेन ग्रहण बोध्यते, तस्यानुभयोराश्रयणात् । तच्चात्राऽन्तादिवत्त्वाधीनमिति तदप्रवृत्त्या साऽपि न प्रवर्तते । कर्त्री, दण्डिनीत्यादौ तु तत्प्रवृत्तिं विनापि तयोः सत्त्वात्सा प्रवर्तत एवेति ■ वैयर्थ्यं तस्या । तद्ध्वनयन्नाह—नात्रेति ।

अप्रवर्तेत । तद्वारणाय चाऽप्रत्यय इति प्रसज्यप्रतिषेधाभ्युपगमे प्रकृते दोषः ।

---

शब्दरत्नम् ।

श्रेयमिति ; तन्न, इन्द्राणीत्यसिद्ध्यापत्तेः । तस्मात् प्रातिपदिकत्वोपयोगो न कश्चित् । नापि लिङ्गविशिष्टप्रातिपदिकस्येति परिभाषायां पठ्यते । तथा प्रातिपदिकत्वतद्व्याप्य-धर्माणां लिङ्गप्रत्ययविशिष्टेऽतिदेशाच्चेति दिक् । ननु "सप्तम्यधिकरणे च" इति निर्देशेन

भैरवी ।

सत्ता नास्तीत्युभयोरावश्यकत्वया 'उभयत आश्रयणे नान्तादिवत्' इति निषेधः प्रवर्तेत इति । यत्र न पूर्वान्तवत्त्वपरादिवत्त्वयोरुपयोगस्तस्य ग्रहणम्परिभाषया भवतीति भवदुक्तमिन्द्राणी-त्यादौ नास्ति । अत्र स्त्रीप्रत्ययान्तसमुदाये प्रातिपदिकत्वन्नास्ति । यत्र च प्रकृतिभागे प्रा-तिपदिकत्वमस्ति तत्र तादृशप्रत्ययान्तत्वन्नास्ति, अन्तशब्दस्य चरमावयववाचकत्वात् । इन्द्राणीत्येतदेकदेशाभावोदाहरणापलक्षणम् । तेन दण्डिनीत्यादेरपि भवदुक्तरीत्या ग्रहणन्न स्यादिति 'प्रातिपदिकग्रहण' इति परिभाषा निष्फला स्यादिति भावः । तस्मात्—परिभा-षया यस्य समुदायस्य ग्रहणम्भवता बोधनीयन्तस्यैव ग्रहणाभावापत्तिसद्भावात् । उपयोग इति । परिभाषाया प्रवृत्तिकोटावित्यादि । नन्वन्तशब्दो न सर्वत्र चरमावयवस्यैव बोधको-ऽस्ति, "अतो ल्रान्तस्य" इत्यादौ व्यभिचारात् । किन्तु समीपवाच्यपि । तथा च परिभाषा-घटके यल्लिङ्गविशिष्टपदन्तस्यान्तपदस्यापि तदर्थः समीप इत्येव । एवञ्च गृह्यते येन तद् ग्रहणम् प्रातिपदिकस्य ग्रहणम्प्रातिपदिकग्रहणमिति समासाश्रयणेन प्रातिपदिकवाचकः शब्दो वा-च्यते । तस्मिन् लिङ्गबोधकप्रत्ययः समीपो यस्य तद्ग्रहणमात्रम्परिभाषया बोध्यत इति नेन्द्राण्यादावसङ्ग्रह, इत्यत आह—नापीति । इदम्भवदुक्तन्तादृशपाठसत्त्वे वक्तुं शक्यम् । वस्तुतो यत्परिभाषायाः कृत्यन्तदाह—तथेति । दिगिति । दिगर्थन्तु 'प्रातिपदिकग्रहणे' इति सप्तमी कर्तव्य व्यत्ययेन । प्रातिपदिकपदञ्च प्रातिपदिकत्वतद्व्याप्यान्यतरधर्मविशिष्टपरम् । तथा च प्रातिपदिकत्वतद्व्याप्यान्यतरधर्मविशिष्टस्य ग्रहणं यत्र शास्त्रे तेन लिङ्गबोधकप्रत्यय विशिष्टस्य ग्रहण—बोधनम्भवतीत्येव परिभाषार्थं इति न कुरुरित्यत्रादिवत्त्वोपयोग इति । कुरुरित्यस्य साधुत्वन्न लिङ्गविशिष्टपरिभाषया भवतीति भ्रम. । किन्तु "अन्तादिवच्च" इति सूत्रेणेति तत्त्वम् । अत आदिवत्त्वादिति पदं यदर्थकन्तदाह मूले—यत्तु व्याचख्युरित्या-दिना । तदपि—तादृशव्याख्यानमपि । क्लिष्टम्—आदिशब्दस्याऽऽद्यावयवस्याच्छिन्नबोध-कत्वस्य "आद्यन्तौ टकितौ" इत्यत्र कल्पस्य त्यागेन क्लिष्टमित्यर्थः । स्वपरग्रन्थेति । स्वस्य-व्याख्यातुर्यः परग्रन्थस्तद्विरोध, इत्यर्थः । काण्डे कुड्ये इत्यत्र यथा प्रसज्यप्रतिषेधाऽऽश्रयेण भवता सुबुत्पत्त्यापत्तिरूपो दोषो वार्यते, तथा कुरुरित्यादावपि सुबभावापत्तिः स्यादित्याह—उरूरीत्येति । प्रक्रियाव्याख्यानपरप्रकाशग्रन्थे यथा न स्वपरग्रन्थविरोधात्मको दोष आपतति तथा शङ्कते—नन्विति । ज्ञापकादित्यन्तेन मूलोक्तम्प्रकारमुद्भाव्य सिद्धान्तरीत्याह—

भावप्रकाशः ।

नन्वन्तशब्दश्चरमावयववाची उत समीपवाची ? नाद्य इत्याह—इन्द्राणीति । कर्त्र्यादेरप्युपलक्ष-णम् । तस्मादुभयथाप्यरीत्या सा निष्फला स्यादिति भावः । अत एवाह—तस्मादिति । तदग्रहणे रूपोंऽसिद्ध्या निष्फलत्वादेवेत्यर्थः । उपयोग इति । तत्प्रवृत्तिनिमित्तकोटौ इति शेषः । नान्त्य इत्याह—नापीति । इद च तथार्थमभ्युपेत्य । वस्तुतः स एव नेत्याह—तथेति । प्रतिपादितमिदमधस्तात् । एतेनाऽऽदिवत्त्वेनोह्ये हि तथा स्यादय , तादृशप्रत्ययान्तमेव हि तत्र लिङ्गविशिष्टमिति कुर्वादौ स्थित, स्वस्यैव परं तदनाश्रयणे तदुपन्यासोऽसङ्गत इत्यपि तदुक्तमप्रस्तम् । तदाह—दिगिति । मञ्जिषगुरुकरी त्या संखण्ड्य तदाश्रयवर्णकप्रकारो स्वपरविरोधदोषो नेत्याह—नन्विति । तत्रादौ मूलादिरीत्याह—सप्त-

वामौ सुन्दरौ ऊरू यस्या इति विग्रहः। इह सर्वत्र उपमानाभावादप्राप्ते विधिः। कथं तर्हि 'पीवरोरु पिबतीव बहिंणः' इति कुमारः ? प्रमाद एवायम्। सञ्ज्ञापूर्वकत्वात्सम्बुद्धिगुणो नेत्येके। हितेन सहेति। 'समो वा हितततयोः' इति

शब्दरत्नम्।

**उपमानाभावादिति।** उपमा उपमानं-सादृश्यं तदभावात्-तस्य समासाऽवाच्यत्वादित्यर्थः। यद्वोपमानत्वेन प्रतीत्यभावादित्यर्थः। शफोरूरित्यत्रापि सादृश्यमूलकः शफत्वारोपो न तु तत्प्रतीतिरिति भावः। एवं च करभोरुशब्देऽपि आरोपविवक्षायामूङ् न भवत्येव। एतेन करोरुभिरिति व्याख्यातम्। एके इति। तन्न भाष्यानुक्तत्वात् साधु।

भैरवी।

ननु वस्तुन उपमानस्य सत्त्वादुपमानाभावादित्यसङ्गतम्, किञ्च "ऊरूत्तरपदात्" इतिसूत्र उपमानेति शब्दो नोपात्त इत्युपमानाभावादित्यसङ्गतमत आह—उपमा उपमानमिति। उपमानशब्दे भावे ल्युडिति ध्वननायोपमा उपमानमित्युक्तम्। अत एवाह—सादृश्यमिति। ननु करभोरूरित्यत्रोदाहरणेऽपीवशब्दस्योपमावाचकस्याभावादुपमायाः कथम्प्रतीतिः, तस्येवादिशब्दस्य एव प्रतीतिरत आह—तस्येति। सादृश्यस्येत्यर्थः। एवञ्च करभोरूरित्यत्र सादृश्यान्तर्भावेण वृत्तिस्वीकारादुपमायाः प्रतीतिरस्ति। करभोपमोरूरित्यत्र तु सादृश्यस्य समासवाच्यत्वन्नास्तीति भावः। मूलस्योपमानशब्द करणल्युडन्त एवास्त्वित्याशयेनाह—यद्वेति। प्रतीत्यभावादिति। पूर्वपदार्थस्येत्यादिः। एवञ्चोपमीयतेऽनया सा उपमा, उपमानत्वम्—सादृश्यमित्यर्थः, तद्बोधकम् ऊरूत्तरपदकप्रातिपदिकमत्र नास्ति। सादृश्यस्थले समासस्य सादृश्यान्तर्भावेण शक्तिस्तत्रेष्यते सूत्रस्य प्रवृत्तिः। ऊरूत्तरादित्येव वक्तव्ये उत्तरपदग्रहणेन पूर्वपदस्याक्षेपात्तत्र पूर्वपदस्योपमावाचकत्वन्तत्रास्य सूत्रस्य प्रवृत्तेरिति भावः। यत्तु खण्डनकृदाह—शफौ खुरौ ताविव संश्लिष्टत्वादुपचारादिति, चिन्त्यम्। उपचारेऽपि पूर्वपदस्योपमानवाचित्वबाधाभावात्पूर्वसूत्रेणैव सिद्धत्वेह शफग्रहणवैयर्थ्यम्। अत संहितवाचकशफशब्द इति तन्नेत्याशयेनाह—शफोरूरित्यत्रेति। एवञ्च शफत्वावच्छेदकस्यारोपोऽत्र न तु सादृश्यान्तर्भावेण वृत्तिरिति न पूर्वसूत्रस्य प्राप्तिः। एवञ्च-पूर्वेणाऽप्राप्तस्य सिद्धौ च। करोरुभिरिति व्याख्यातमिति। 'विचकरे च करेण करोरुभिः' इतिमाघस्थपद्य इति आदिः। वस्तु—

भावप्रकाशः।

ननु वस्तुन उपमानस्य सत्त्वात्तदभावादित्ययुक्तम्। किञ्च सूत्रे उपमाने इति नोक्तं किं त्वौपम्ये इति, अत आह—उपमा उपमानमिति। उपमेति विग्रहप्रदर्शनं भावे ल्युडिति भावः। तदाह—सादृश्यमिति। ननु करभोरूरित्यादावपि वाचकस्याभावात्तदभाव एवेति सूत्रवैयर्थ्यमित्यत आह—तस्येति। सादृश्यस्येत्यर्थः। तत्र तु तदन्तर्भावेण समासस्य तद्वाच्यत्वमिति भावः। यथाश्रुतमेव करणल्युडन्ते युक्तमित्याशयेनाह—यद्वेति। अभावादिति। पूर्वपदार्थस्येति भावः। एतेनोपमीयतेऽनयेत्युपमोपमानं तद्भाव औपम्य—सादृश्यम् उपमानत्वं ■ तद्बोधकोरूत्तरपदादित्यर्थः। समासस्य तत्र तदन्तर्भावेण शक्त्यभ्युपगमात्तस्य तत्त्व सूपपादम्। उत्तरपदाक्षिप्तं पूर्वपदं प्रत्यासत्त्योपमानवाच्येव। अत एवोत्तरपदग्रहणं कृतम्। अन्यथोर्वन्तादित्येव वदेत्। अत एव 'पात्रीकरात्या करभोपमोरूः' इत्यत्र नेति पूर्वसूत्रस्य तत्त्व सूचितम्। यत्तु शफौ खुरौ ताविवेति परममूल चिन्त्यम्, उपचारेऽपि पूर्वपदस्योपमानवाचित्वमव्याहतमेवेति पूर्वसूत्रेणैव सिद्धत्वेह शफग्रहणवैयर्थ्यापत्तेः। अतः संहितार्थक शफशब्द इति हरदत्तोक्तिरेव युक्तेति खण्डनकृत्खण्डयति—शफोरूरिति। आरोप। इत्यर्थः इत्यादि। ■ तु तत्प्रतीतिरिति। समासात् सादृश्यप्रतीतिर्न वा पूर्वपददुपमानत्वेन प्रतीतिरित्यर्थः। एवं च न तत्प्राप्तिरिति तद्युक्तमिति भावः। एवञ्चेति। एवमारोपेण तदप्राप्तेरित्यर्थः। व्याख्यातमिति। 'विचकरे च करेण करोरुभिः' इति माघस्थमिदम्। तस्य—'सञ्ज्ञापू

व्युत्पादित: सहितशब्दस्तु नेह गृह्यते, एकदेशविकृततया संहितग्रहणादेव सिद्धेरिति भावः।

मञो योकार इति। अञा मकारविशेषणं किम्? शूरसेनी। "जनपदशब्दात्" इत्यञो "अतश्च" इति लुकि जातिलक्षणो ङीष्। शार्ङ्गरवीति। शृङ्गरशब्दादपत्यार्थे अण्। नृनरयोरिति। नृशब्दाद् "ऋन्नेभ्य" इति ङीपि, नरशब्दाज्जातिलक्षणे ङीषि प्राप्ते वचनम्। ननु नरशब्दे अचोऽन्त्यस्य वृद्धिः स्यात्। यत्त्वाहुः–अन्त्यस्य "यस्येति" लोपेनापहारादनन्त्यस्याप्यकारस्य वृद्धिर्भ-

---

वान्द्रसम्।

त्वे न नियामकतेत्यत्रत्यवचनं।

ङीषिति। अत एव "न प्राच्य" इति सूत्रे यौधेयादिग्रहणं चरितार्थम्। तद्धि "पर्श्वादियौधेयादिभ्यामणञौ" इति स्वार्थिकाञा "अतश्च" इति प्राप्तलुको निषेधार्थम्। तत्फलं चाऽजन्तत्वान्ङीन्यथा स्यात्। अणन्तत्वात् ङीप् माभूदिति। नरशब्दादिति। यद्यपि नृशब्देन नारी सिद्धा, नरी च पुंयोगे दुर्वारा, तथाऽपि नरत्वजातिमात्रप्रति-

मैरवी।

–संज्ञापूर्वक इतिवचनस्य। न नियामकोऽपि। यादृ वचनस्याप्यकारमस्मत्तन्तस्यैव स्यादुतानियामकत्वमिति भावः।

अञ्योऽकार इति व्याख्याने साधकमाह—अत एवेति। शूरसेनीत्यत्रातिव्याप्तिवारकतया ताद्दृशव्याख्यानस्यावश्यकत्वादेव। तद्धि—यौधेयादिग्रहणं हि। "मानो" इतीति। इति सूत्रेण विहितेत्यर्थ.। तत्फलम्–निषेधस्य फलम्। दा.°स्यादिति। युधाशुभ्राशब्दाभ्यां "द्वच." इतिसूत्रविहितढकः सत्त्वात्। यदि त्वञो लुक् स्यात्तदा वर्णप्राधान्ये प्रत्ययलक्षणाभावेन ङीन् न स्यादिति भाव। नृनरयोरित्यत्र नरशब्दोपादानाभावेऽपि नारीतिरूपं नृशब्दोपादानमात्रेण सिद्धम्। नरीतिरूपव्यावृत्तिस्तदुपादानस्य फलमित्यपि न, पुंयोगे तस्यैव दुर्वारत्वादित्याक्षिप्य समाधत्ते—यद्यपीत्यादिना। पुंयोगे नरीतिप्रयोगोऽपि दृश्यते 'किन्नरीणां नरीणाम्' इति। जातिमात्रेति। अत्र मात्रपदेन पुंयोगस्य व्यवच्छेदः। नृशब्दावयवऋकारस्य यथा "अलोऽन्त्य" परिभाषया वृद्धिर्भवति तथा नरशब्देऽपि प्राप्नोतीत्याक्षेपः। नन्वे—नन्विति। तत्र "स्थानेऽन्तरतमे" इति सप्तम्यन्तपाठाभिप्रायेण समाधानवादिमतमनुवदति–यत्त्वाहुरित्यादिना। अन्त्याकारस्य वृद्धौ यदि "यस्येति च" इत्यनेन तस्य लोपस्तर्हि वृद्धि

भावप्रकाशः।

वेन' इति वचनस्य। न नियामकेति। ग्रन्थेन तथा रत्नाकरदण्डपादिभिः सिद्धान्तयोरुभयोरप्यनु

तथा व्याख्याने गमकमाह–अत एवेति। तत्रातिव्याप्तिवारकतया व्याख्यानादेवेत्यर्थः। इतीति अस्य विहितेति शेषः। युधाशुभ्राभ्यां "द्व्यच." इति ढकि "पर्श्वादि" इति स्वार्थेऽञि तेन लुकि वर्णप्राधान्येन प्रत्ययलक्षणाभावेन ङीनोऽप्राप्तिरिति तदर्थं तत्कृतम्। यदि तु तथा व्याख्यानं नेष्टं तर्हि लुक्यपि प्रत्ययलक्षणेन ङीन्स्यादेवेति तदानर्थक्यं स्पष्टमेव। ननु ढगन्तत्वादेव रूपसिद्धौ तदानर्थक्यमेवात आह—तत्फलञ्चेति। ङीप्युदात्तनिवृत्तिस्वरेणान्तोदात्तत्वं स्यादिष्यते त्वन्ताऽनुदात्तत्वमिति भावः। यद्यप्यन्यतरोपादानेऽपि "नारी" इतीष्टसिद्धिस्तथाप्यन्यतरस्याऽनिष्टरूपाभावाय द्वयोर्निर्देशः प्रकाशरत्नाकरदण्डयादयस्तथापि लाघवादाह—नृशब्देनेति। चस्त्वर्थे। पुंयोगे इति। जातिग्रहणानुवृत्त्या तत्रास्याप्रवृत्तेः। तथा च जातिग्रहणं व्यर्थमिति भावः। अत एव किन्नराणां नरीणामिति प्रयोगः सङ्गच्छते। एतेनोभयोरप्युपादानसामर्थ्यादिव परिभाषानुपस्थितावविशेषेण तत्रानुक्तप्रयोगोऽसाधुरेवेति रत्नाकरोक्तमपास्तं, पुंयोगे तस्य दुर्वारत्वात्। तथा च नरग्रहणं व्यर्थमिति भावः। मात्रपदेन पुंयो-

वत्यान्तरतम्यात् । 'गुणे त्वन्त्यस्य कल्पना' इत्यलोन्त्यपरिभाषाबाधस्यैव न्याय्य-त्वादिति, तन्न, प्रत्ययसन्नियोगशिष्टाया वृद्धेरन्तरङ्गत्वेन परमपि "यस्येति" लोपं बाधित्वा प्रवृत्त्यौचित्यात् । किं चास्तु कथंचिल्लोपस्तथाऽपि रेफस्यैव वृद्धि स्यान्न त्वकारस्य, अन्तरतमपरिभाषापेक्षयाऽलोन्त्यपरिभाषाया परत्वात् । अपि चान्तरतमपरिभाषाऽसदृशमादेशं व्यावर्तयति न तु स्थानिनं नियच्छति, तत्स्थं

## शब्दरत्नम् ।

पाव्नेच्छायां नीत्यस्य बारणार्थं नग्रहणं बोध्यम् । ननु वृद्धिविधानसामर्थ्यांल्लोपस्याबाधोऽत आह—गुणे त्वियति । अलोन्त्यपरिभाषाबाध एव न्याय्य इति भाव । अन्तरङ्गत्वे नेति । सामर्थ्याद्बाधो ह्यनुचित । न्यायप्राप्तबाधस्त्वुचित एवेति भाव । कथं चिदिति । सन्नियोगशिष्टत्वाऽनङ्गीकारेणेत्यर्थ । तत्स्थमिति । "स्थानेऽन्तरतमे" इति सप्तम्य

## भैरवी ।

विधानवैयर्थ्यमिति तत्सामर्थ्याल्लोपस्य बाधोऽस्त्वित्याक्षिपति—नन्विति । यद्यलोन्त्यपरि-भाषैकवाक्यतयाऽन्त्यस्य वृद्धौ तत्सामर्थ्याल्लोपस्य बाधस्तदा साक्षाद्विधिशास्त्रस्य बाध-स्तदपेक्षया लोपस्यादौ प्रवृत्तावपि योऽन्तरतमः शिष्टावयवस्तस्य स्थाने वृद्धिर्भविष्यती त्याशयेनाह—गुणे त्वन्त्यस्येति । गुणे—गुणीभूतशास्त्रे परिभाषारूपे, अन्त्यस्य—अप्र धानस्य कल्पना उचितेति शेष । तथाऽप्यादौ वृद्धेरेव प्रवृत्ति स्यात्, तस्याश्च सामर्थ्या-न्निवृत्तिर्न स्यादिति भावेन समाधत्ते—तन्नेति । अन्तरङ्गत्वे सन्नियोगशिष्टत्वमत्र हेतु । एवञ्चादौ वृद्धेरन्तरङ्गाया अन्तरतमपरिभाषाऽलोन्त्यपरिभाषाभ्यामेकवाक्यतया प्रवृत्ति-स्ततो लोपस्य यदि प्रवृत्तिः स्यात्तदा वृद्धिविधानवैयर्थ्यम्, इति सामर्थ्यात्परस्यापि लो पस्य बाधेन वृद्धेः श्रवणं स्यात् । न ह्यत्र केवलान्तरङ्गपरिभाषाया एव प्रवृत्तिः, किन्तूभयो रपीति न्यायप्राप्त एव लोपस्य बाध सामर्थ्यादिति तात्पर्यम् । कथञ्चिदित्युक्तेस्तात्पर्य माह—सन्नियोगशिष्टेति । तथा च वस्तुत सन्नियोगशिष्टत्वेऽपि यदि तस्याऽनङ्गीकारस्तदा कथा स्पष्ट एव । तथा च पालोपोत्तरम्पूर्वान्तरतमपरिभाषापेक्षया परत्वेन बलवती याऽलो न्त्यपरिभाषा सैव वृद्धे रेफस्थानिकत्वे नियामिका स्यादित्यनिष्टापत्ति । नन्वत्र गुणे त्वन्त्या स्येति पूर्वोक्तन्यायेनाऽलोन्त्यपरिभाषाया अप्रवृत्ति कल्प्यते, अन्तरतमपरिभाषाया तु प्रवर्तन इति तदेकवाक्यतया नकाराऽकारस्य वृद्धि स्यादितीष्टसिद्धिरत आह मूले—अपि चेति । तत्स्थानिनमिति । कुमार्यन्नेत्यादौ दीर्घस्य स्थाने यणादेश 'स्थानेन्तरतमे' इति सप्तम्य-न्तपाठे न स्यात्, षष्ठ्यन्तपाठे स्थानिनः सङ्कोचादिति स पाठो नोचित, किन्तु "स्थानेऽन्त रतम" इति प्रथमान्तपाठ एव । तथा चाऽनन्तरतमादेशस्य निवृत्तिरित्यादेशसङ्कोच एवेति भाव । एतावता परोक्तरीत्याऽलोन्त्यपरिभाषाया बाधमभ्युपेत्याप्यन्तरतमपरिभाषया नेष्टसिद्धिरित्यभिहितम् । वस्तुतस्तु परोक्ता 'गुणे त्वन्त्यस्य' इति रीतिरेव प्रकृतेऽप्युक्ता, परि

## भावप्रकाशः ।

व्यावृत्ति । प्रयत्नमिमाह—नन्विति । एतेन लोपबाधव्यावृत्ति । अन्तरङ्गत्वेनेतीति । यद्यपि सन्नियोगशिष्टत्वेन तन्निमित्तकत्वादभिव्यक्तत्वाभावादस्या अन्तरङ्गत्वमिति भाव । एतेन अलोन्त्यपरिभाषया लोप इति तत्त्वमिति तदाश्रयवर्णकरत्नाकरदण्डधामुखकमपास्तं, वार्णावस्य दुरुपपाद त्वात् । ननु तन्न्याये न तद्बाधोऽस्तु कस्तु कमेवेति कथमन्यथासत्या नद्बाधाऽत आह-सामर्थ्यादिति । तथा च सामर्थ्याद्बाधे तन्न्यायसङ्कोचे न तु न्यायप्राप्तबाधे, सिद्धान्तभङ्गापत्तेरनिष्टापत्तेश्च, केषाञ्चित्सूत्रा णामानर्थक्यापत्तेश्चेति भाव । हित्वधारणे । अनङ्गीति । तथा च तत्त्वे सति तदनङ्गीकार एव क्लेश इति भाव । ननु सप्तम्यन्तपाठाश्रया आन्तरतम्यादिति तदुक्तिरत आह—स्थानेऽन्तरेति । ननु पूर्वो

रेफस्य स्थानित्वव्यावृत्तिः । किं च 'गुणे त्वन्त्याप्य' इति न्यायोपन्यसनं स्थनीय एव, परिभाषयोः परस्परं गुणगुणिभावायोगात् ।

अत्रेदं तत्त्वम् । "नर" इति रान्तलुप्ताकारानुकरणं नर् च नरः । ना च नरश्च तयोरिति व्याख्येयम् । यद्वा नरस्य अः नरः, शकन्ध्वादिवत् पररूपम् । ना च नरश्च तयोर्नृनरयोः । नरस्य च प्रथम एव अकारो गृह्यते न तु द्वितीयः प्रश्लेष-

## शब्दरत्नम् ।

त्नपाठस्य भाष्ये "कुमार्येत्र" इत्यादौ यगनापत्त्या दूषितत्वादिति भावः । परिभाषयोरिति । तद्व्याख्यातृग्रन्थानुसारेणेदम् । तेर्हि अलोऽन्त्यस्यैव बाधो न त्वन्तरतमपरिभाषाया इति व्याख्यातम् ।

व्याख्येयमिति । नृनरयोरित्यावर्त्तने एकत्र पञ्चम्यर्थे षष्ठी ताभ्यां ङीन्, नुर्नरोऽकारस्य च वृद्धिरित्यर्थ इति भावः । अत एव वानरशब्दे नातिप्रसङ्गः । यतो नरशब्दान्ङीन् तदीयरेफान्तसम्बन्ध्यकारस्यैव वृद्धिविधानात् वानरे नरस्याऽऽनर्थक्यात्ततो न

## भैरवी ।

भाषयोः समत्वात् । किन्तु परस्वमलोऽन्त्यपरिभाषाया इति सैव प्रवर्त्ततेत्याशयेनाह—किञ्चेति । ननु परिभाषयोर्गुणगुणिभावोऽत्र न केनाप्युक्त इति कथमेव वदसीत्यत आह—तद्व्याख्यातृग्रिति । प्रकाशव्याख्यातृग्रन्थानुसारेणेत्यर्थः । यद्वा तच्छब्दोऽत्र बुद्धिस्थाया प्रक्रियाया बोधकः । एवञ्च प्रक्रियाया व्याख्यातृणा ये ग्रन्थाः प्रकाशप्रदीपादयस्तदनुसारेणेत्यर्थः ।

प्रोक्तप्रकारं सन्दूष्य युक्तं समाधानमाह—अत्रेदमित्यादिना । लुप्तेति । "यस्येति च" इतिसूत्रेण लुप्तेत्यर्थः । एवं व्याख्याने यस्मात्प्रत्ययस्य विधानं तस्य स्थानित्वेन निर्देशो न जात इति वानरशब्देऽतिप्रसङ्ग इत्यरुचेराह—यद्वेति । मूलोक्ताभ्यां प्रकाराभ्यां वृद्धिरूपादेशस्य स्थानिनो निश्चयेऽपि प्रत्ययविधानावधेरलाभ इत्यत आह—नृनरयोरित्यावर्तनं इति । अत एव—द्वितीयपक्षाश्रयणेनावृत्त्या चार्थविशेषस्य स्वीकारादेव । तदेव स्फुटयति—यत इति । एवं—वानरशब्दस्यापि नरशब्दात् । मन्वानमत्र इति कोशवलात्सर्वेषां दुर्वितृप्रतिपा-

## भावप्रकाश ।

त्तरीत्या परिभाषयोस्तत्त्वस्यैवाऽनङ्गीकारान्नायं दोषोऽत आह—तद्व्याख्यातृग्रिति । प्रकाशव्याख्यातृग्रन्थेत्यर्थः । यद्वा तस्याः प्रक्रियाया व्याख्यातृणां ये ग्रन्थाः प्रसादप्रदीपादय इत्यर्थः । बाधः । तत्सामर्थ्यादिति भावः । इति व्याख्यातमिति । न तु पूर्वोक्तरीत्येति भावः । यद्यपि प्रकाशोक्तरीत्यापि व्याख्यानं सम्भवति तथापि निर्मूलं तदिति भावः ।

यद्यपि आद्यपक्षे वानरेऽतिप्रसङ्गो नान्त्यपक्षे इत्येव मूलं सुयोजं तथापि तथा खण्डनकृद्रत्नाकराद्युक्तिं खण्डयितुमाद्यपक्षेऽपि तमुद्धरति—नृनरयोरितीति । एकत्र जातिग्रहणमन्यत्रैकदेशग्रहणमिति भावः । अत एवेत्यस्यार्थमाह—यत इति । यस्मादित्यर्थः, प्रत्यासत्त्येति भावः । ननु वानरशब्दे ङीनेव कुतो नाऽत आह—वानरे इति । अर्थवत्परिभाषयेति भावः । ततः—वानरीयनरशब्दात् । एतेनाऽऽद्यपक्षे जातेर्ग्रहणे कथं ततो ङीष् "जातेः" 'स्त्रियाम्' इत्यस्य चाधिकारात्तत्सामर्थ्यात्तद्विशिष्टग्रहणे तत्रातिप्रसङ्गः । न च 'यः समुदाये यो न व्यभिचरति' इति न्यायेन निरास, अविशेषणस्य नरो ङीनि प्रकृतित्वेनान्वाख्याय पृथगनुसन्धानस्य क्लिष्टत्वात् प्रकाशोक्तरीत्या निर्वाहाच्चेति खण्डनकृदुक्तमपास्तम् । वस्तुतस्त्विदं गणसूत्रमनार्षमिति स्पष्टमन्यत्र । ननु कोशबलात्पुत्रशब्दादपि स्त्रीबोधापत्तिरत

सामर्थ्यात् । अधिक शब्दकौस्तुभे बोध्यम् । पुत्रशब्दोऽत्र पठ्यते । शैलपुत्री । 'पुत्रीव हर्षं हृदये तनोति' 'कुर्वे तदुर्वीपतिपुत्रि सर्वम्' । न च पुत्रशब्दः कन्याया नास्तीति भ्रमितव्यम्,

आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ।
आहुर्दुहितरं सर्वे, इत्यमरोक्तेः ।

अत एव "प्रत्ययस्थात्" इतीत्वप्रकरणे 'वा सूतकापुत्रिकावृन्दारकाणाम्' इति वार्तिकं तद्भाष्यादिकं च सङ्गच्छते । यत्त्वत्र हरदत्तेनोक्तम्—केवलपुत्रशब्दः स्त्रियां न वर्तते इति, तद्भाष्यादिविरोधादुपेक्ष्यम्, इत्थप्रकरणस्थस्वग्रन्थविरोधाच्च ।

इदं तु चिन्त्यम्—"कारे सत्यागदस्य" इति सूत्रे 'सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा' इति वार्तिकं किमर्थमिति । यत्तु वदन्ति स्वरार्थमिति, तन्न, द्विस्वरात् ङीपि कृते उदात्तनिवृत्तिस्वरेणोदात्तङीनन्तेन तत्पुरुषेऽपि समासस्वरेणान्तोदात्त एवेति स्वरे भेदाभावात् । यदपि शार्ङ्गरवादौ पुत्रशब्दः प्रक्षिप्तो न तु साम्प्रदायिक इति, तदपि न, उदाहृतप्रयोगविरोधात्, 'वा सूतका' इत्यादिवार्तिके कैयटहरदत्तादिकृताऽकारप्रश्लेषविरोधाच्चेत्यास्तां तावत् ।

आम्रगन्ध्येति । "पूर्वत्रोकोसल" इति यञ् । कारीषगन्ध्येति । करीषस्येव गन्धोऽस्य करीषगन्धिः । "उपमानाच्च" इति गन्धस्येदन्तादेशः । तस्य गोत्रापत्य

---

शब्दरत्नम् ।

—निति बोध्यम् । तदाह—अधिक मिति । अमरोक्तेरिति । तत्र स्त्रीत्वबोध ईकारसमभिव्याहारलभ्यम् । केवलाऽकारान्तपुत्रशब्दस्तु पुंस्त्वविशिष्टस्यैव वाचकः । अत एव स पुत्र इ यतो न स ेह । पुमांसं पुत्रमाधेहि' इत्यादौ पुंस्त्वम् विशेषण स्वसिद्धपि तत्पुंस्त्वबाधनायेति भावः ।

चिन्त्यमिति । कि तावीन तु सुतादिशब्दस्य पर दान्ते तत्पुरुषे 'पुत्र मैत्री ।

दकतया स्त्रीत्वविवक्षायामप्यकारान्तपुत्रशब्दस्य प्रयोगापत्तिरिति आह— तत्रेति । पुत्रशब्द इत्यर्थः । पुत्रशब्दनिर्दिष्टस्य समभिव्याहारे ईकाराव्यवहितपूर्वाच्चरितस्य पुत्रशब्दस्य स्त्रीत्वबोध तन्त्रनियामकमित्यर्थः । पुत्रशब्दस्त्रियाः । स्त्रीत्वबोध इत्यस्यादि । अत एव— केवलाऽकारान्तस्य पुंस्त्वविशिष्टप्रतिपादकत्वादेव । ननु अवदुक्तावस्योकार पुमांसं पुत्रमाधेहि इति श्रुतौ पुमांसमिति विशेषणोपादानमनर्थकमापद्यतेत्यत आह —पुमांसमित्यादि । भविष्यत्पुंस्त्वम्—परास्मातिशय । एवञ्च स्त्रियामपि वृत्तिरकारान्तपुत्रशब्दस्यैव । परं तु स्त्रीत्वे बोधनीये स्त्रीप्रत्ययसमभिव्याहारो द्योतक इति सिद्धम् । अत एवाह मूले— यत्त्वत्रेत्यादिना ।

इदन्तु चिन्त्यमिति । इद वक्ष्यमाणम् । खण्डनकारोक्तचिन्ताबीजमाह—चिन्ताबीजमिति । पुत्रशब्देभ्य – पुत्रवाचकशब्देभ्य । ङीनन्त त पुरुषे । ङीन तापरपदकतत्पुरुष इन सूतपुत्रात्या

भावप्रकाशः ।

आह तत्रेति । तयोर्मध्ये इत्यर्थः, पुत्रशब्दे इत्यर्थो वा । न सन्देह इति । स्वभ्यूहं चैतत् गुरुचरणैकार्यप्रदीपोद्द्योते । ननु श्रुतौ विशेषणोक्त्या केवलस्यैवोभयत्र वृत्तिः इति प्रकाशमाशङ्क्य युक्तिं निराचष्टे—पुमांसमिति । एवं च हरदत्तोक्तिर्युक्तेति मूलं तथा रत्नाकरदर्पणाद्युक्तं च चिन्त्यमिति गुरुचरणाशयम् ।

खण्डनकारोक्तं चिन्ताबीजमाह—चिन्तेति । ङानत । पुत्रीशब्दे सत ङि शेष । त पुरुष । कृते

स्त्री, अण्। "अणिञोः" इति ष्यङादेशः। स च यद्यपि स्त्रियामेव विहितस्तथाऽपि

---

शब्दरत्नम्।

पुम्भ्यः" इत्यनेन पुँल्लिङ्गशब्दात्परपुत्रशब्दान्ततत्पुरुषे पुत्रन्यादिरुदात्त इत्यर्थकेन लिङ्गविशिष्टपरिभाषया पुत्रशब्दोकारोदात्तत्वम्। पुत्रङादेशे [illegible] न तत्प्रवृत्तिः सानुबन्धकत्वादतस्तत्रोदात्तनिवृत्तिस्वरेणान्तोदात्तत्वमिति। "नादिन्याक्रोशे पुत्रस्य" इत्यस्य पुत्रङि अप्रवृत्तिस्तु न फलम्, एतत्सम्बन्धयः परस्य यर आदिनीशब्दपरत्वासम्भवात्। पुत्रङः स्थानिवद्भावेन दुहितृशब्दत्वेऽपि "न षट्" इति निषेधो न, तस्य "स्वस्रादिभ्यः" इति ङीङ्मात्रबाधकत्वात् टित्त्वसामर्थ्याच्च। इदं च वार्तिकं तत्पुरुषे एव प्रवर्तते "कारे सत्या" इति सूत्रे उपसंख्यानात्। तत्रान्यासम्भवात् पूर्वोत्तरसाहचर्येण च तत्पुरुष एव। एतेन बहु-

भैरवी।

दाविति शेषः। ननु पुत्रीशब्दः पुत्रशब्दाभिन्न एवेत्यत आह—लिङ्गेति। उदात्तत्वमिति। भवतीति शेषः। उदात्तनिवृत्तिस्वरेण—टित्त्वान्ङीपि कृते "अनुदात्तस्य [illegible] यत्रोदात्तलोपः" इत्यनेनेत्यादिः। यत्तु कश्चित्—पुत्रङादेशपक्षे 'सुतपुत्र्यादिनी त्वमसि पापे' इति प्रयोगे सानुबन्धकत्वादस्य पुत्रस्य "नादिन्याक्रोशे" इति सूत्रे न ग्रहणमित्येव चिन्ताबीजमिति तदुपेक्षणमित्याह—नादिन्येति। आदिनीशब्दपरत्वासम्भवादिति। ङीषाऽप्यव्यवधानेन 'येन नाव्यवधानम्' इति न्यायेन रेफाकारमात्रव्यवधान एव तस्य प्रवृत्तेरिति भाव.। ननु पुत्रङादेशपक्षे सुतपुत्रीत्यत्र स्थानिवद्भावेन दुहितृशब्दत्वात् "न षट्" इति निषेधः स्यादत आह—पुत्रङ इति। स्वस्रादिभ्य इति। 'येन नाप्राप्ति' न्यायेनेत्यादिः। ननु टापोऽपि निषेधस्य सिद्ध्यर्थं-मत्र षट्संज्ञकेभ्यः स्वस्रादिभ्यश्च यत्प्राप्तमिति प्रागव्याख्यातमिति "टिड्ढा" इत्यस्यापि निषेधः स्यादेवेत्यत आह—टित्त्वसामर्थ्यादिति। "कारेसत्या" इति सूत्रस्य तत्पुरुषे एव प्रवृत्तौ साधकमाह—तत्रेति। "कारेसत्या" इति सूत्रघटकेत्यर्थः। पूर्वोत्तरेति। "वाचंयम" इति "श्येनति-ल" इतिसूत्रयोरित्यर्थः। एतेनोपज्ञातीया कन्येत्यस्य सम्भवादन्यासम्भवादित्यसङ्गतमिति सत्पराहतम्, साहचर्यस्य बलवत्त्वप्रयोजकताया दर्शनात्। एतेन—उक्तरीत्या सुतोपेत्यस्य वार्तिकस्य तत्पुरुषसमासे एव प्रवृत्तेरेव। बहुव्रीहौ ङीबर्थमिति। सुता दुहिता यस्या इति बहुव्रीहौ ङीबर्थमित्यर्थः। यद्येतद्वार्तिकन्न स्यात्तदा सुता पुत्री यस्येत्येवं विग्रहे समासे

भावप्रकाशः।

'सुतपुत्री' इत्यादाविति शेषः। पुत्रीशब्दे प्राप्त्यर्थमाह—लिङ्गेति। पुत्रशब्देति। तथा चाऽन्ताऽनुदात्तत्वमिति भावः। आदेशे [illegible]। टित्वान्ङीपि सुतपुत्रीत्यादाविति शेषः। अतस्तत्र—उक्तहेतोरव्यवहितोक्ते। तथा च स्वरभेदात्तदावश्यकमिति भावः। खण्डनकृदुक्तिविशेषं खण्डयति—नादिनीति। सुतपुत्र्यादिनीत्यादाविति भावः। अप्रवृत्तिरिति। सानुबन्धकत्वाद् इति भावः। अभिव्यक्तेनि न्यायादिति तदुक्तिस्त्वयुक्ता, द्वयोरपि तुल्यार्थत्वेन तदप्रवृत्तेः। एतत्सम्बन्धीति। सुतपुत्रीसम्बन्धीत्यर्थः, यादिना व्यवधानात्। एवं च स्त्रियामुभयत्रापि नेति भावः। एकवर्णव्यवधान त्वावश्यकमिति सोढव्यमेवेति तात्पर्यम्। ननु न तद्व्यवधानं ङीष एवाऽपरत्वादित्याशये नाशङ्कते—पुत्रङः स्थानीति। तस्य—उक्तनिषेधस्य। मात्रपदेन "टिड्ढा" इत्यस्य निरासः। मध्येऽपवादाऽनन्तरस्येति न्यायास्यामिति भावः। रत्नाकरोक्तिं खण्डयितुमाह—इदञ्चेति। पुत्रङ्विधायकमित्यर्थः। ननु तदेव तत्पुरुषे कुतोऽत आह—तत्रेति। उक्तसूत्रं चेत्यर्थः। अन्येति। कारस्य सत्यागदाभ्या तत्पुरुषान्यसमासाऽसम्भवादित्यर्थः। यथाकथञ्चित्सम्भवेप्याह—पूर्वोत्तरेति। वाच यम श्येनतिलेत्यादीत्यर्थः रत्नाकरोक्तिं खण्डयति—एतेनेति। तत्पुरुषे एव प्रवर्तनेनेत्यर्थः। बहुव्रीहौ इति। राज्ञी

ङित्करणसामर्थ्यात्तदन्तादप्ययं चाप्। पौतिमाष्येति। पूतिमाषशब्दो गर्गादि।

"तद्धिता"॥ बहुवचनमनुक्तानामुपसङ्ख्येयानां सङ्ग्रहार्थम्। महासञ्ज्ञाकरण च तेभ्य. प्रयोगेभ्यो हितास्तद्धिता इत्यन्वर्थत्वाय। तेन यथाऽभिधानमेव स्यु। स्यादेतत्। टाप' प्रागयमधिकारोऽस्तु ष्फविधौ तद्धितग्रहण

शब्दरत्नम्।

स्रोहौ ङीबर्थमिदमित्यपास्तम्, टित उपसर्जनत्वेन तत्र ङीपोऽप्राप्तेश्चेति दिक्।

ङित्करणसामर्थ्यादिति। "यङश्च" इत्यत्र सामान्यग्रहणाऽविघातार्थे ङित्करण सामर्थ्यादित्यर्थे। द्योतकत्वाच्चेत्यपि बोध्यम्।

अनुक्तानामिति। तेन अल्पार्थे ग्रामटिकादय साधव। इदन्तु भाष्ये न दृश्यते। टाप प्रागिति। ङीबादिषु डस्येत्सञ्ज्ञा तु 'चुटू' इति सूत्रकरणेन सेत्स्यति, टीबादय एव वा ते सन्तु। तद्धितान्तत्वात्प्रातिपदिकत्वेऽपि पितृवतो न, प्रकृतिप्रत्ययविभ

भैरवी।

वाच्यस्तथासति "नद्यृतश्च" इति नित्यकबापत्ति स्यादिति तात्पर्यम्। ङीबर्थमित्यप्यसङ्गत मत्याह—उपसर्जनत्वेनेति।

मूले ङित्करणसामर्थ्यादिति। ष्यङो ङित्करणसामर्थ्यादित्यर्थ। एतद्भावमाह—यङश्चेति। प्रकारान्तरेणापि 'उक्तार्थानाम्' इति न्यायस्यात्राप्रवृत्तिमाह—द्योतकत्वादिति। स्त्रीप्रत्ययस्य द्योतकत्वादित्यर्थ। द्योतकविषये द्वौ ब्राह्मणावित्यादौ पञ्चकप्रातिपदिकार्थपक्षे द्वित्वसङ्ख्याया प्रकृत्याऽभिधानेपि तत्र समुच्चयस्य दर्शनादिति भाव।

तेन—अनुक्तानामिति व्याख्यानेन। ग्रामटिकेति। अल्पो ग्रामो ग्रामटिका। ग्रामशब्दाट्टिकच्प्रत्ययस्य प्रयोग। इदम्—बहुवचनोपादानेनानुक्तानां सङ्ग्रह इत्येतत्। ननु टाप प्रागधिकारकरणे ङीबाद्यवयवडकारस्याऽतद्धित इति निषेधादित्सञ्ज्ञा न स्यादत आह—ङीबादिष्विति। ननु 'चुटू' इति सूत्रे टकारोच्चारणे गौरवमत आह—टीबादय इति। डकारस्य स्थाने टकारस्यैवोच्चारणमस्त्वित्यभिप्राय। टाबादीनान्तद्धितत्वे तदन्तस्य प्रातिपदिकत्वापत्त्या 'पित्र्योन्त उदात्त' इत्यन्तोदात्तत्वापत्तिरित्याशङ्का वारयति—तद्धितान्तेति। ननु एवं सति सर्वं नाम धातुजमाह—निरुक्ते व्याकरणे शकटस्य तोकमिति शाकटायनमते सर्वत्रैव प्रकृति

भावप्रकाश।

दुहिता यस्या, समा दुहिता यस्या, राजपुत्री उग्रपुत्रीत्यादाविष्यर्थ। अपास्तमिति। तथा च रामदुहितेत्यादय एव प्रयोगा ■ तु तथा इति भाव। एतेन द्वित्वसामर्थ्यादुपसर्जनेपि ङीबिति तदुक्तिरप्यपास्ता, त्रित्वसार्थक्यस्य प्रागुक्तत्वाच्च। तद्वचनमत आह—टित इति। तत्र—बहुमीहौ द्वित्वसार्थक्यस्य प्रागुक्तत्वाच्च। यत्तु वार्तिके माध्युदात्त स निपात यत इति, तथ, तथा सति स्वरप्रकरणे एव वार्तिकस्य कर्तुं युक्तत्वेन टस्य दुहितृपदस्य च वैयर्थ्यात्। एवञ्च प्रकाशोक्तिरपि तदभिप्रायेति युक्तैवेति मूल तथा रत्नाकरदण्डाध्युक्तं चायुक्तमिति बोध्यम्। तदाह—दिगिति।

नन्वफलत्वान्ङित्करणमेव मास्त्वत आह—यङ इति। अत्र सामान्यग्रहणं तदविघातायेत्यर्थ। निदान्तरीयमाह—द्योतकेति। द्वौ ब्राह्मणावित्यादौ तत्समुच्चयस्य दृष्टत्वात् तन्न्यायस्य क्वचित्तत्र व्यभिचरितत्वात्। एतेन द्योतकत्वेपि तन्न्यायप्रवृत्त्या चिन्त्यमिदमित्यपास्तम्।

ग्रामटिकेति। अल्पो ग्रामो ग्रामटिका टिकच्प्रत्ययस्तदन्ताट्टाप्। ■ दृश्यते इति। ■ चाप्रमाणमिति भाव। ननु टाप प्राक् तत्करणे 'लशक्व' इति कस्येत्सञ्ज्ञा न स्यादत आह—ङीबादिष्विति। ततोपि लाघवादाह—टीबादय इति। आदिना डाप्ङीनो सङ्ग्रह। एतेन इनिरास।

यस्येति लोपे ईदूग्रहणं च मास्त्विति चेत् ? मैवम्, पट्वीत्यत्र ओर्गुण प्रसङ्गात् ।

---

शब्दरत्नम् ।

गशुन्ये एव तत्प्रवृत्तेः षकारपकाररूपभिन्नानुबन्धद्वैयर्थ्यापत्तेश्च । अत एव सिद्धान्ते लिङ्गविशिष्टपरिभाषया नात्र फिट्स्वरः, ङाप्प्रत्यये विजातीयङकारानुबन्धश्च न कार्य इत्यपरं लाघवं, टिलोपस्य "नस्तद्धिते" इत्यनेनैव सिद्धेः । यस्येति लोपे इति । 'औङ श्याम्' इति वार्तिकस्याप्युपलक्षणम् । ओर्गुणेति । न च ईदूग्रहणं स्त्रीप्रत्ययेषु तद्धितकार्याभावज्ञापनार्थं, तेन पट्वीत्यादौ न "ओर्गुण" इति वाच्यम् ? कुरूरित्यादिसिद्धयर्थं स्त्रीप्रत्ययेषु तदभावज्ञापने आसुतायनीत्यादौ ष्फेऽपि "यस्येति" लोपानापत्तेः । अत एव दण्डिनीभ्यादौ टिलोपो नेति दिक् ।

मैरवी ।

प्रत्ययविभागसम्भवात्प्रत्ययसमुदायस्याप्रसिद्धि रत आह—पकारेति । षकारपकाररूपौ यौ भिन्नावनुबन्धौ तत्करणसामर्थ्यादित्यर्थः । यदि सर्वत्र फिट्स्वरः स्यात्तदान्तोदात्तत्वमेव स्यादिति तयोर्वैयर्थ्यं स्पष्टमेव । अत एव—तादृशेऽन्वेव फिट्स्वरस्य प्रवृत्तिस्वीकारादेव । सिद्धान्ते—"यूनस्ति" इति सूत्रात्प्रागेव पाठस्य सिद्धान्ते । टाप प्राक् तद्धिताधिकारकरणे लाघवान्तरमप्याह—ङाप्प्रत्यय इति । "यस्येति च" इति सूत्रे ईकारग्रहणाभावे 'औङ श्याम्' इति वार्तिकमपि न कार्यमित्याह—औङ इति । ईदूग्रहणमिति । "यस्येति च" इति सूत्रे ईदूग्रहणमित्यर्थः । ईदूग्रहणेन ईकारादौ स्त्रीप्रत्यये एव साजात्यात्तद्धितकार्याभावकल्पने कुरूरित्यादौ तद्धितकार्यापत्तिरत स्त्रीप्रत्ययत्वेन साजात्यमादाय ज्ञाप्यं वचनं स्वीकार्यं, तथा चाव्याप्तिरित्याह—कुरूरित्यादीति । अत एव—टाप प्राक् तद्धिकाराकरणादेव । दिगिति । दिगर्थस्तु ईदूग्रहणेनाज्रूपस्त्रीप्रत्यये तद्धितकार्याभावो ज्ञाप्यतामित्यवनैवाऽऽसुरायणीत्यादिसिद्धिर्यद्यपि भविष्यति तथापि ज्ञापकसिद्धवचनान्तरकल्पनापेक्षया यथाश्रुतमेव लघु इति ।

भावप्रकाश ।

नन्वेवमपि फिट्स्वरापत्तिरत आह—तद्धितान्तेति । सर्वं नाम धातुजमिति मतेऽप्याह—षकारपकाररूपेति । षकारपकारादिरूपा ये भिन्नानुबन्धास्तत्करणवैयर्थ्येनेत्यर्थः । अत एव—अनुबन्धद्वैयर्थ्यादेव । सिद्धान्ते—अधिकारस्य यथास्थितत्वे । अत्र—स्त्रीप्रत्ययान्ते । च—तद्धितादिसमुच्चायकः । अपरं—मूलोक्तातिरिक्तम् । न्यूनतां निराचष्टे—औङ इति । तस्याऽतद्धितत्वात् । तथा चेदमप्यपरं लाघवमिति भावः । रत्नाकरसिद्धान्तानुवादकदण्डचार्युक्तिं खण्डयति—न च ईदूग्रहणमिति । "यस्येति च" इत्यत्रेति भावः । आदिना ङीषूङोनो ग्रहणं । यदि साजात्यात् स्त्रिष्वेव तद् ज्ञाप्यं तर्हि कुरूरित्याद्यसिद्धिस्तत्र गुणाभावविरहावश्यम्, अतः सामान्यापेक्षतभावज्ञापकं, तदाह—स्त्रीप्रत्ययेति । तदभावेति । तद्धितकार्याभावेत्यर्थः । ष्फेऽपीति । अधिकृततद्धितपदसम्बन्धस्य ज्ञापकस्य स स्यादिति भावः । ननु ङीषङीनोर्गुणाभाव एव ज्ञाप्यत इति रत्नाकरोक्त्या नाय दोषोऽत आह—अत एवेति । सामान्यापेक्षज्ञापनादेवेत्यर्थः । अन्यथा ङीपि "नस्त" इति टिलोपापत्तिः स्पष्टैव । किं च तथा सति चारितार्थ्यासम्भवादित्यपि बोध्यम् । यदि तु सामान्यापेक्षज्ञापनेऽपि "फक्फिञोरन्यतरस्याम्" इति न्यासेनाऽऽसुरायणीत्यादिसिद्धिरित्युच्यते तर्हि सिध्यत्येव, किं तु अपाणिनीयत्वापत्तिः स्पष्टैव । तदाह—दिगिति । सिद्धान्ते तु फक्फिञोः इति न्यासेन यथा सर्वेष्टसिद्धिस्तथा स्पष्टमन्यत्र ।

शत्रन्तादिति । यौति मिश्रीकरोति पत्येति व्युत्पत्तेः । केचित्तु बाहुलकात् यौतेरौणादिकं कतिप्रत्ययं वदन्ति । उभयथाऽपि युवतीनां समूहो यौवतम् । त्यन्तात्तु अणि पुंवद्भावात् यौवनमित्येव । भिक्षादिपाठसामर्थ्यान्न पुंवदिति वृत्तिस्तु भाष्यविरुद्धा, भाष्ये तत्पाठस्य प्रत्याख्यानादिति दिक् ॥

इति स्त्रीप्रत्ययाः ।



---

शब्दरत्नम् ।

मिश्रीकरोतीति । आत्मानमिति शेषः । दिगिति । दिगर्थस्तु-पाठस्य विकारा भावमात्रतात्पर्यकत्वे वृद्धयादीनामप्यभावापत्तिः । अत एव युवतीकारनिर्मेथितं दधीत्या दिप्रयोगसिद्धिः । युवतिशब्दे लिङ्गविशिष्टपरिभाषयैव प्रातिपदिककार्यं सिद्धेऽत्र "तद्धिताः" इति अधिकारो लिङ्गविशिष्टपरिभाषाऽनित्यत्वज्ञापनार्थं इति दिक् ॥

इति स्त्रीप्रत्ययाः ॥



भैरवी ।

योगार्थमात्रं वृद्धावामतिप्रसक्तमत आह—आत्मानमितीति । मूले—उभयथापि । शत्रन्तस्य कतिप्रत्ययान्तस्य च सत्त्वेऽपि । यौवनमिति । 'भस्याढे' इति पुंवद्भावः । अनयोरयं विशेषः—शत्रन्तात् "उगितश्च" इति ङीप्, कतिप्रत्ययान्तात्तु 'कृदिकारात्' इति ङीष् । आद्ये "शतुरनुम" इत्यस्य प्रवृत्त्या नद्या उदात्तत्वमिति । वृत्त्युक्तं दूषयति-भिक्षादीति । अत एव-पूर्वोक्तरीत्या युवतीत्याकारकस्य शब्दद्वयस्य स्वीकारादेव । ननु "यूनस्तिः" इतिसूत्रात्प्राक् 'तद्धिताः' इत्यस्य पाठो न कार्यो लिङ्गविशिष्टपरिभाषयैव सिद्धेरत आह—युवतिशब्द इति । दिगिति । दिगर्थस्तु "ऋन्नेभ्यः" इति ङीपि यूनीशब्दोऽपि साधुरिति कश्चित्; तन्न, 'येन नाप्राप्ति' न्यायेन "यूनस्तिः" इत्यस्य "ऋन्नेभ्यः" इति सूत्रापवादत्वात्, ङीनेऽपि ङीपि लिङ्गविशिष्टपरिभाषयाऽस्य प्राप्तेरिति ॥

इति स्त्रीप्रत्ययविवरणम् ॥

---

भावप्रकाशः ।

यमीशब्दाद्यामीत्यादाह—आत्मानमिति । मात्रशब्द कार्त्स्न्यं । आदिना लोपादिपरिग्रहः । तस्य पाठेन तदभावोऽनियुक्तैवेति यौवनमिति सिद्ध त्यन्तस्य । नन्वस्तु तथा तथापि तदन्यस्य यौवनमित्ययुक्त, मूलप्रयोगस्यैवाभावादत आह—अत एवेति । शत्रन्तप्रकृतिकङीबन्तस्य प्रकाशोक्तस्य कत्यन्तप्रकृतिकस्य 'कृदिकारात्' इति ङीषन्तस्य वा अङ्गीकारादेवेत्यर्थः । त्यन्तात्तु "हलो मनुष्य" इति न ङीष्, अजातित्वात् । अत्रेति । स्वार्थत्वे तत्रैव कुर्यादिति भावः । अनित्यत्वेति । न च धर्मिग्राहकेणैव तत्सिद्ध विनिगमनाविरहात् वार्तिककृता ज्ञापितेऽपि सूत्रकृतोऽपि तज्ज्ञापनस्याऽऽवश्यकत्वाच्च तदाह—इति दिगिति ॥

इति स्त्रीप्रत्ययाः ॥



# अथ विभक्त्यर्थाः

## कारकप्रकरणम् ।

मात्रशब्दस्येति । तस्य चावधारणमर्थः । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । प्रातिपदिकार्थादीन्येव तन्मात्रमित्येवकारेणास्वपदविग्रहः । मयूरव्यंसकादित्वात्समासः । कृष्ण इति । यद्यपि नीलरूपवत्परोऽयमनियतलिङ्गस्तथाऽपि

---

### शब्दरत्नम् ।

नीलरूपवदिति । "प्रत्ययस्यात्" इति सूत्रस्थेन 'अमुञ्चत.' इति भाष्यप्रयोगेण

### भैरवी ।

अथ "स्वौजसमौट्" इत्यादिना विहितानां प्रत्ययानामर्थविशेषे व्यवस्थां दर्शयति— प्रातिपदिकार्थेति । मूले—मात्रशब्दस्येति । अत्र शब्दशब्दोपादानेन मात्रस्मात्रप्रयमय इति

'तिङ्समानाधिकरणे प्रथमा' इति वार्तिकोक्तेः । ननु 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत् तदर्थप्रतिपत्तिकरः' इति वचनं वृत्तिद्वयाकल्पनमूलकमस्ति, यथा-नीलनटम्भूमलमित्येव प्रयोगो नतु नीलघटवदिति, मत्वर्थबहुव्रीहिणैव विवक्षितार्थलाभात्। बहुव्रीहिश्चेदित्युपादानात्कृष्णसर्पवानित्यादि भवत्येव । अत्र कृष्णसर्पशब्दस्य कर्मधारयसंज्ञकस्य जातिविशेषावच्छिन्ने वृत्तिर्बहुव्रीहिस्तु न तादृशजातिविशेषावच्छिन्नप्रतिपादकः, एवञ्च तद्वचनविरोधान्नीलरूपवदित्यनुपपन्नमत आह—नीलरूपवदिति । भाष्यप्रयोगेणेति । तत्र हि "असुर इति किंबहुव्री

### भावप्रकाशः ।

मायास्ये मतुप् तृतीयासमासो वैकल्पिकान्योक्तोपपत्तेः किन्नामगतिरित्यतिर्व च यत्नयितुमन्यथाऽऽवश्यकयुक्तिमाह—प्रत्ययेति । तत्र हि "असुर इति । कथमिदं विज्ञायते असुवन्तोऽङ्गस्येति आहोस्वित् चेत् सुपः पर आदिति ? आद्ये बहुवचनमित्येत्यत्र दोषाद् द्वितीयो युक्त." इत्युक्तम् । तस्यायमाशयः—अत्र किं मतुप इति बहुव्रीहिर्न सुप यस्मिन्नङ्गे तदसुबिति, अथ नञ्तत्पुरुषः न सुपोऽसुर इति, प्रत्ययग्रहणत्वात्तदन्तविधिरमत्रापि, तत्राऽन्त्यपक्षो युक्तः । सः प्रसज्यप्रतिषेधः, पर्युदासे बहुरजिमाजिकेत्यादौ सनुदायादसुबन्तात्परत्वेनाऽनिष्टापत्त्याऽसुप इत्यस्य वैयर्थ्यापत्तेः । तत्राऽसुप इत्यस्य स्पष्टं बहुव्रीहित्वप्रदर्शनाय लाघवाऽनाश्रयेण मतुबन्तेन नञ् समासं कृत्वा 'असुब्वतः' इत्युक्तमिति कैयटः । एवं च तस्य योगस्य सौत्रतापदार्थे यत्नतात्पर्यकत्वेन भ्रममपि नान्यथोपपत्तिरसुपोऽङ्गस्येत्येनेव सिद्धेः । ज्ञापक एवेति बोध्यम् । तदाह—प्रयोगेणेति । अयञ्च सूचनद्वारा ज्ञापने हेतुः । एकदेशिनेत्यादिसौत्रप्रयो

### सरला ।

श्रीगुरुः शरणम् ।

आरोहणावरोहणक्रमयोर्मध्येऽवरोहणक्रमेण शब्दसाधुत्वाभिधायकग्रन्थरचने प्रवृत्तः श्रीमद्भट्टोजीदीक्षितः पूर्वं वाक्यस्फोटस्यैव वैयाकरणसिद्धान्तसिद्धतया वाक्यस्फोटाभिव्यञ्जकवाक्यसाधुत्वाभिधायकग्रन्थनिधिप्रकरणमुक्त्वा वाक्यसाधुत्वं वाक्यघटकसुबन्ततिङन्तशब्दसाधुत्वाधीनमिति पूर्वं सूचीकटाहन्यायेन सुबन्तसाधुत्वमभिधाय कृदन्ततिङ्प्रकरणमव्ययप्रकरणं च प्रतिपाद्य सुप्प्रातिपदिकमध्यगत्वात्स्त्रीप्रत्यये तदनन्

वासुदेवे भगवति नियतलिङ्ग एवेति भावः। ज्ञानमिति। भावे ल्युट्। द्रोण इति। न च प्रातिपदिकमात्रे प्रथमेहाऽस्त्विति वाच्यम्? तथा सति परिच्छेद्य

---

शब्दरत्नम्।

क्वचिदग्रहणादस्यापि सूचनात्कर्मधारयान्मत्वर्थीयोऽपि क्वचिदिति ज्ञापनान्नैतत्प्रयो

भैरवी।

दि, न विद्यते सुप्-सुबन्तं यस्मिन्नङ्गे तदसुबिति, आहोस्विन्न सुप् असुबिति तत्पुरुष" इति

भावप्रकाशः।

णानामप्युक्तार्थज्ञापकता बोध्या। तत्स्वकत्वेनतत्पर्य-पचावनबीजन्तु सौत्रत्वाद्वयोरुपस्थितिरेतद्व्यर्थयोस्तु निष्प्रमाणत्वस्वरस्तन्तस्त्र बोध्यम्। ननु 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर.' इत्यभियुक्तोक्तं, 'समानाधिकरणसमासा बहुव्रीहिः कदाचित्कर्मधारय. सर्वधनाद्यर्थं.' इति "वर्णो वर्णेन" इति सूत्रस्थवार्त्तिकद्वितये, तत्रत्यभाष्यकैयटादिपर्यालोचनया च सर्वधनाद्यन्यत्र कर्मधारयान्मत्वर्थीयस्याऽसाधुत्वलाभेऽप्यसुबन्तं इत्यस्यातथात्वेन पर्यवसितविषयः। नञ्तत्पुरुषस्य कर्मधारयत्व ▪ दुर्वचमेव, तत्समानाधिकरण्याऽप्रवृत्तेः। अत एव "तत्पुरुषोऽनञ् कर्मधारय" इत्यत्र नञ्ग्रहणं सार्थकम्। किं च तन्मतुबन्तेन नञ्समासः कैयटेनोक्तो न तु नञ्समासान्मतुप्। एवं च कथं ज्ञापकत्वमिति चेत्? न लघुभूतैकवृत्त्या निर्वाहे गुरुभूतवृत्तिद्वयस्य समासेऽर्थे अनङ्गीकार इति तात्पर्येण कर्मधारयादिपदेन नञ्समासादेरपि ग्रहणात्। ध्वनितं चेदं "स्वरूप" इत्यत्र भाष्ये। तत्र हि परिगणनाऽभावपक्षे इत्यादेरित्यस्य कृद्विशेषणत्वेऽक्षौहिण्यैऽप्रथीयानित्यत्र रो न स्यादित्याशङ्क्य तद्धितान्तेन समासेन संसाध्य समासात्तद्धितपक्षे कथमित्याशङ्क्य बहुव्रीहिणोक्तत्वात् समासात्तद्धित एव नेति समाधाय तत्पुरुषात्तद्धितपक्षे कथमित्याशङ्क्य समासस्याऽऽस्वाख्योक्तगुणवचनत्वाभावात्तमाथायाऽगुणवचनत्वेऽपि "दिग्मतो." इति ज्ञापकात्तदन्तादन्यादित्वसम्भवेन तत्र कथमित्याशङ्क्य बहुव्रीहिपक्षे तेनोक्तत्वात्तत्पुरुषपक्षे ततो लाघवाद्बहुव्रीहेर्यद्यपत्याऽमत्वर्थभावेन समासात्वाऽर्थभेदेन मतुप् स्यादेवेत्याशङ्क्याऽनभिधानाच्चाप्रकृतिभूतबहुव्रीहेरेव वृत्तिरिति समाधाय तद्धितान्तेन समासेनाऽप्रथीयानिति सिद्धा तदङ्गीकारः स्थापितः। एवं चैषैव चिन्त्यास्य शब्दलाघवबोधिका। अत एव वृक्षवनस्पत्यादिषु नातिप्रसङ्गः। विप्रतिषेधपर तु नैगद्यानिर्व कर्मधारयस्यान्तरङ्गत्वात्। यद्यपीष्टिपक्षेऽपीदं भाष्ये त्रुटितम्, उक्तरीत्या लाघवेनास्यार्थस्य न्यायसिद्धत्वात्। सर्वधनी सर्वकेशीत्यादीनां ठन्बाधनायावश्यकेन सर्वादेरिनिश्चयनेन सिद्धिः मीढादिपाठाद्वा गौरखरवत्। गौरमृगवत्साख्यम्, कृष्णसर्पवान्वल्मीकः, लोहितशालिमान् ग्रामः इत्यादीनान्तु क्वाचित्कत्वमशीरमन्यथाऽनुपपत्त्या सिद्धिः। अत एवैकदेशिनेत्यादिप्रयोगसङ्गतिः। तदमनोरी तु बहुव्रीहिरेव तु मदन्ती मवाग्मीत्यादौ मत्वर्थीयेन नञ्समासः। बहुव्रीहिणा दण्डसंयोगसम्बन्धग्रहबहुभाविरेव निषेधयोरप्रतीतेरन्यथा ध्येन देश्युक्तिः सा, वृक्षवनस्पत्यादिष्वतिप्रसङ्गापत्तेः "प्रसुब्वनः" इति भाष्यप्रयोगासङ्गतेश्च मम तु सर्वधन्याद्यर्थं इत्यादिग्रन्थस्य प्रकारार्थत्वान्न दोष। तदेतत्सर्वं हृदि निधायेष्टिप्रतिपादनार्थमाह—

क्वचिदिति। सर्वधनीत्यादावित्यर्थः। अपिना वीरपुरुषको ग्राम इत्यादौ लाघवमूलकाग्रहादपरिग्रहः। अभियुक्तोक्तिरपि एतन्मूलिकैव। एतेनेदं वार्त्तिकमिति नैयायिकायुक्तनास्तत्वम्, तथा तदनुपलम्भात्। सूचनादिति। एवं च मुख्यं ज्ञाप्यमिदमेव। वक्ष्यमाणस्य तु तत्त्व फलमिति। अत एवाऽस्य ज्ञापकत्वसङ्गतिः। अन्यथा चारितार्थ्याभावात्तदसङ्गतिः स्पष्टैव। उभयज्ञापकत्वे तु गौरवमतो लाघवादिदमेवोचितम्। अत एव मध्ये सूचनादित्यन्तहेतूक्तिरिति भावः। अपिर्मतुबन्तेन नञ्समासस्य तत्र मतुपश्च समुच्चायकः। क्वचिदिति। उक्तार्थकम्। द्विरस्योल्लेखस्तु स्पष्टार्थः। नैतत्प्रयोगेति। नीच

सरला।

"क्याच्छन्दसि" इत्यनेन सूत्रेण सुपां विधानाच्च पूर्वं कोऽपि स्वप्रकरणमभिहितम्। ततः सुप्प्रकृतिभूतप्रातिपदिकसाधुत्वाभिधायकसमासतद्धितप्रकरणापेक्षया पूर्वं तदीयोद्देश्यतावच्छेदकसम्पादकत्वेन सुप्साधुत्वबोधककारकप्रकरणस्यैवोल्लेखस्यौचित्येन कारकप्रकरणमभिधत्ते—प्रातिपदिकार्थेत्यादिना।

परिच्छेदकभावस्य संसर्गविधया भानायोगान्नामार्थयोरभेदसंसर्ग एवेति

---

शब्दरत्नम्।

गानुपपत्तिरिति बोध्यम्। **नामार्थयोरिति।** नामार्थश्च नामार्थश्चेत्येकशेष.। **अभेदसंसर्ग इति।** यद्यप्यभेदो न संसर्गः 'राहोः शिर.' इत्यादावौपाधिकभेदेन षष्ठ्युपपादनस्य भाष्ये

भैरवी।

वितर्क्य "यदि विज्ञायते असुब्वतोऽङ्गस्येति बहुचर्मिकेत्यत्रैत्वन्न प्राप्नोति" इत्युक्तम्। आति परे यदङ्गमविद्यमानसुबन्तस्तदवयवाऽकारस्य प्रत्ययस्थकात्पूर्वस्येत्वमिति सूत्रार्थस्य तदानीन्निष्पत्तेः। तत्र लाघवाऽनादरेण स्पष्टप्रतिपत्त्यर्थम्बहुव्रीहेः मतुपि 'असुब्वत.' इति दर्शितमिति लाघवानादरो भाष्यसम्मत एवेति भाव। नामार्थयोरित्यस्य नाम्नः अर्थाविति समासं कृत्वाऽभेद संसर्गः प्रतिपाद्यत इति वाच्यन्तदनुपपन्नं, सुप्यन्तपदार्थयोः सूर्याचन्द्रमसोरभेदाऽप्रतीतेरत आह—नामार्थश्चेत्यादि। न च नाम्नोरर्थौ नामार्थौ तयोरिति षष्ठीतत्पुरुषोऽस्त्विति वाच्यम्? वृत्तावभेदैकत्वसङ्ख्याया यत्नं विना भानम्यात्पत्र सिद्धान्तितत्वेन द्विवचनान्तेन समासासम्भवात्। सम्बन्धस्य सम्बन्धिनोर्यत्र भेदस्तत्रैव विशिष्टबुद्ध्युपपत्तयेऽङ्गीकार इति सिद्धान्तात्कथमभेदः संसर्ग इत्याशङ्कते—यद्यप्यभेद इति। औपाधिकभेदेनेति। द्विवसाद्यवच्छिन्नो राहुशब्दार्थो घट्याद्यवच्छिन्नः शिर.शब्दार्थ इति कल्पनया अवयवावयविभावरूपसम्बन्धोपपादनेनेत्यर्थः। किञ्चाभेदो यदि संसर्गस्तदा 'नीलो घट' इत्यत्र नीलशब्दान्नियमेन षष्ठी स्यादिति तादृशवाक्योच्छेदापत्तिः। न चैवं सति समानाधिकरणाधिकारे समासविधानानुपपत्तिरिति वाच्यम्? विशेषणवाचकप्रातिपदिकात्षष्ठीप्रसक्तेऽपि विरुद्धविभक्त्यर्थानवरुद्धत्वे सत्येकविशेष्यकप्रतीतिजनकस्वरूपसामानाधिकरण्योपपादनसम्भवेन तस्य सार्थक्यात्। अत एव तक्षकस्य सर्पस्येत्यादौ समानाधिकरणेन षष्ठीसमासनिषेधस्याप्युपपत्ति.। किन्त्वाऽभेदस्य संसर्गत्वे 'कृत्तद्धितसमासेभ्य सम्बन्धाभिधानम्भाव-

भावप्रकाशः।

रूपवदिति प्रयोग इत्यर्थः। एतेन तुल्यार्थत्वे लाघवान्मतुबन्ताद्बहुव्रीहिरेव न्याय्य इति "वर्णो वर्णेन" "रूपम्" इत्यत्र भाष्ये सिद्धान्तितत्वेन मतुपो दौर्लभ्याच्चिन्त्यमिदमिति खण्डनकृद्रत्नाकरोक्तम्, आर्षप्रयोगाणा तेन साधुत्वेऽस्मदादिकृतप्रयोगस्यापि तेन साधुत्वे 'स्वावत' इति न्यायविरोधापत्तिः, अन्यथा 'न कर्मधारयात्' इति निषेधस्य निर्विषयतापत्तिः, नञ्समासस्याऽकर्मधारयत्वेन भाष्यप्रयोगस्य साधुत्वेन ज्ञापकत्वासम्भवश्चेति मन्दोक्त चापास्तम्। ननु 'नामार्थयो.' इत्यत्र किं द्वन्द्व उत षष्ठीतत्पुरुषः? अन्त्येऽप्येकवचनान्तेन स उत द्विवचनान्तेन? नाद्यः, वाच्यवाचकयोरभेदस्य सर्वतन्त्रविरुद्धत्वात्, तथा सत्त्वेऽपि तथार्थस्य न्युत्पत्त्यलभ्यत्वाच्च, प्रकृतेष्टासिद्धेश्च। अत एव न द्वितीयः, अक्षपुष्पवन्तादिषु एकनामवाच्ययोरप्यभेदापत्तेश्च। नान्त्य., तथाविग्रहेऽपि वृत्तौ सङ्ख्यासामान्याभावस्य भाष्यसम्मतत्वेनेष्टार्थालाभादत आह—**नामार्थश्चेति।** नाम—सुबन्त, तदर्थत्व च तज्जन्यप्रतीतिविशेष्यत्वम्। **न संसर्ग इति।** सम्बन्धिभेदनियतत्वात्तस्येति भावः। तत्रैव किं मानमत आह—**राहोरिति।** **औपाधिकभेदेन**—व्यपदेशिवद्भावेन। **भाष्ये**—"आद्यन्त" सूत्रस्थे। यद्यपि तस्य सम्बन्धत्वेऽपि तद्वाच्यात्तस्य षष्ठीनिमित्तता नेति नाय दोष इति सुवच, तथाप्यतिरिक्तसम्बन्धाङ्गीकारे गौरव फलाभा[illegible]श्च। अन्यथा भेदसंसर्गस्याप्यतिरिक्तत्वापत्तिः, निर्हेतुकवैषम्यस्य निर्बीजत्वात्। तथाबोधाऽबोधाभ्यां तदङ्गीकाराऽनङ्गीकाराविति [illegible] स्ववासनामात्रकल्पितत्वाद् दुर्वचम्। एव चाऽभेदो न संसर्ग इत्यस्य नातिरिक्तः सम्बन्धविशेष इत्यर्थो बोध्यः। किञ्च तस्य तत्त्वे नीलो घट इत्यादौ षष्ठ्यापत्तेः। भेदमूलकसम्बन्धे एव षष्ठीत्यर्थस्य सूत्रतो वाच्यवृत्त्याऽलाभात्। न च प्रथमार्थः स इत्यशेषः, तथानुशासनाभावात् धान्येन धनवान्, नीलं घटं पश्येत्यादावितद्वाभाऽभावप्रसङ्गाच्च। अपिच राजपौरुष्यमित्यादौ

शब्दरत्नम् ।

कृतत्वात्तथाऽपि इतरसम्बन्धानवच्छिन्नविशेष्यविशेषणभावसंसर्गस्य तेन शब्देनाऽ-

भेरवो ।

प्रत्ययेन' इति सिद्धान्ताद्राजपौरुष्यमित्यादौ भावप्रत्ययेन सम्बन्धस्येव नीलोत्पलत्वमित्या दावपि सम्बन्धाभिधानापत्तिः । न चाभेदसंसर्गं प्रथमावाच्य एवेति भ्रमितव्यम् , धान्येन धनवान्नीलद्रव्यपश्येत्यादावपि तदभिधानदर्शनात् । सम्बन्धानवच्छिन्नेति । यत्राऽभेदः संसर्ग इति व्यवहारस्तत्र विशेषणतायाः सम्बन्धाऽनवच्छिन्नायाः सम्बन्धघटकतया भानेन सम्बन्धानवच्छिन्नविशेषणविशेष्यभाव एव पदार्थयोः संसर्गत्वेन व्यवह्रियत इति भावः । अय मपि विशेषणतावच्छेदकविशेष्यतावच्छेदकधर्मभेदमूलकाऽऽरोपित आश्रययोर्भेदो यत्र तत्रै संसर्गतया भासते । तेन घटो घटः इत्यादि न प्रयोगः । तादृशसम्बन्धस्य भाने दृष्टान्तमाह—

भावप्रकाशः ।

भावप्रत्ययेन सम्बन्धविशेषस्येव नीलोत्पलमित्यादौ तदभिधानापत्तेश्च । विशेष्यविशेषणभावस्य तु न षष्ठ्यर्थप्रयोजकता, प्रागुक्तविशेषसम्बन्धान्वयबोधकषष्ठीपदस्वारस्यात् । नापि भावप्रत्ययवाच्यता तस्य 'कृत्तद्धितसमासेभ्य' इत्यभियुक्तोक्त्या सम्बन्धविशेषाभिधायकत्वप्रतिपादनात् । अन्यथा भावप्रत्ययान्तानां कृत्तद्धितसमासानां तुल्यार्थतापत्तिः । नीलोत्पलत्वराजपुरुषत्वादीनां विशेषणभूतानां तुल्यतापत्तिरित्यन्यत्र विस्तरः । एतेनोक्तभाष्यादभेदसम्बन्धातिरिक्तसम्बन्धे एव षष्ठी । किन्तु तेनाऽन्वय एवाऽभेदसम्बन्धः । स च नीलो घट इत्यादावस्ति, सम्बन्धत्वं तस्य नास्ति इति दुराग्रहमात्रं लाघवगौरवाभावादिति मन्दोक्तमपास्तम् । सम्बन्धेति । इतरविशेषसम्बन्धेत्यर्थः । क्वचित्तदेव पाठः । विशेष्यविशेषणेति । एतद तिरिक्तस्य वाक्ये आकाङ्क्षालभ्यत्वाभावात् । अयमपि धर्मभेदमूलकाऽऽरोपितभेदे वास्तवभेदे च । अत एव घटो घट इत्यादौ न सः । तेन शब्देन—अभेदसंसर्गपरेण । स्वस्वामिभावादेर्भेदसम्बन्धपदेनैव । तथा च नीलाभिन्नमिति बोधेऽपि तद्विशिष्टमित्येवार्थो बोध्यत इति भावः । न दोष इति । सर्वेषामभेदव्यवहाराऽनुपपत्तिरूपदोषो नेत्यर्थः । अभेदान्वय इत्यस्याऽभेदेऽन्वयो विशेषणभाव इत्येवार्थो न त्वभेदसंस

सरला ।

इतरसम्बन्धानवच्छिन्नेति । अत्रेतरत्वमविवक्षितम् , अभेदस्य सम्बन्धत्वनिराकरणेन तदाशयोक्ता भावात् । तथा च सम्बन्धानवच्छिन्नविशेष्यविशेषणभावसंसर्गस्येति तदर्थो बोध्यः ।

अत्र सूत्रे लिङ्गवचनग्रहणसामर्थ्येन 'पञ्चक प्रातिपदिकार्थः' इत्युक्तस्वार्थद्रव्यलिङ्गसंख्याकारकाणां प्रातिपदिकार्थपरेण ग्रहणं कर्तुमनर्हमिति नियतोपस्थितिकस्य ग्रहणम् । तेन कर्मादाधिकये प्रथमा न भवतीति । तदाह परमलघुमञ्जूषायाम्—नियतोपस्थितिकः प्रातिपदिकार्थ इति । नियता उपस्थितिर्यस्येति विग्रहः । निपूर्वकयमधात्वर्थो व्यापकता, क्तप्रत्ययार्थ आश्रयः, षष्ठ्यर्थो विषयता । तथा च व्यापकताश्रयोपस्थितिविषयत्वं प्रातिपदिकार्थत्वमिति शब्दार्थः । तत्र व्यापकताया यत्किञ्चिन्निष्ठव्याप्यतानिरूपितत्वनियमादुपस्थितत्वात्प्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपिता व्यापकता ग्राह्या । तथा च प्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपितव्यापकतावदुपस्थितिविषयताश्रयत्वं प्रातिपदिकार्थत्वमिति सम्पन्नम् । तत्रेयं शङ्का—प्रातिपदिकोच्चारणं समवायेन वक्तरि, तदर्थोपस्थितिश्च श्रोतरीति कथं व्याप्यव्यापकभावः ? अत्रोच्यते, स्वजन्यश्रावणप्रत्यक्षसमवायित्वसम्बन्धेन प्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपितव्यापकतावदुपस्थितिविषयताश्रयत्वमित्यस्य विवक्षणेन स्वजन्यश्रावणप्रत्यक्षसमवायित्वसम्बन्धेन प्रातिपदिकोच्चारणमपि श्रोतर्येवेति तयोर्न व्याधिकरणत्वमिति न दोषः । नन्वेवमपि येन श्रोत्रा घटप्रातिपदिकस्य घटःआदौ शक्तिर्न गृहीता तत्रोक्तसम्बन्धेनोच्चारणस्य सत्त्वेऽपि तदर्थोपस्थितेरभावेनोपस्थितेर्न व्यापकत्वमिति चेत् ? न, स्वनिष्ठशक्तिज्ञानसमवायित्व—स्वजन्यश्रावणप्रत्यक्षसमवायित्वोभयसम्बन्धेन प्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपितव्यापकतावदुपस्थितिविषयत्वमित्यस्य विवक्षणेन उपस्थित्यभाववति अगृहीतशक्तिकघटपदश्रोतरि स्वनिष्ठशक्तिज्ञानसमवायित्वसम्बन्धेन प्रातिपदिकोच्चारणस्याभावेनोक्तदोषानवसरात् ।

